अनन्तशयनविश्वविद्यालयः

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १५५.






वाहटकृतम्

# अष्टाङ्गहृदयं

श्रीदासपण्डितविरचितहृदयबोधिकाख्यया

व्याख्ययोपेतम् ।

## द्वितीयो भागः ।

(सूत्रस्थाने १६–३० अध्यायाः ।)

---

सम्पादकः

डाक्टर् पि. के. नारायणपिळ्ळै, एम्. ए., पिएच्. डि.

पौरस्त्यग्रन्थप्रकाशनकार्यालयाध्यक्षः ।

अनन्तशयनम् ।

---

इदं च

अनन्तशयने

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

१९५०.

मूल्यं ४ रूप्यकाणि ।

# INTRODUCTION.

The second part of the *Aṣṭāṅgahṛdaya* with the commentary *Hṛdayabodhikā* of Śrīdāsapaṇḍita is now issued as No. 155 in the Trivandrum Sanskrit Series. The first part was published by the Director of Ayurveda in 1940, when there was a separate section under the Ayurveda Department for publishing ancient works in Indian medicine. But later on that section was abolished and the publication of Ayurvedic works was entrusted to the University Manuscripts Library. The first part comprises the first fifteen chapters and the second comprises the remaining fifteen chapters in the *Sūtrasthāna*. Thus the first and the second parts cover the *Sūtrasthāna* for the exposition of which Vāgbhaṭa stands distinguished among the authors of medical works in Sanskrit[1].

The *Aṣṭāṅgahṛdaya*, one of the outstanding and popular works on Āyurveda[2], came to be commented on by various scholars of repute in different parts of India. The following is a list of commentaries on the work in Sanskrit :

1 Kairalī.
2 Nidānacintāmaṇi (on the Nidānasthāna only?) by Kanha Prabhu Todaramalla.
3 Pāṭhya.
4 Bālabodhinī.
5 Vyākhyāsāra.
6 Hṛdyā.
7 Commentary by a disciple of Nārāyaṇa Yogīndra.
8 Sarvāṅgasundarī by Aruṇadatta.
9 Uddyota by Āśādhara.

1. निदाने माधवः श्रेष्ठः सूत्रस्थाने तु वाग्भटः ।
शारीरे सुश्रुतः प्रोक्तश्चरकस्तु चिकित्सिते ॥

2. This is the most popular medical work in Kerala.

10 Śaśilekhā by Indu.
11 Padārthacandrikā by Candranandana.
12 Saṅketamañjarī by Dāmodara.
13 Hṛdayabodhikā by Śrīdāsapaṇḍita.
14 Vāgbhaṭakhaṇḍanamaṇḍana by Bhaṭṭa Narahari or Nṛsiṁhakavi.
15 Vākyapradīpikā by Parameśvara.
16 Dīpikā by Purandara *alias* Udayāditya.
17 Commentary by Rāmanātha.
18 Vaidūryakabhāṣya by Vāgbhaṭa himself (?)
19 Ṭīkā by Vāgbhaṭa himself (?) (Different from the above ?)
20 Dīpikā by Viṭṭhala Paṇḍita.
21 Vijñeyārthaprakāśikā by Viśveśvara Paṇḍita.
22 Lalitā by Śaṅkara, son of Nārāyaṇa Śarman.
23 Dīpikā by Hāṭakāṅka.
24 Āyurvedarasāyana by Hemādri.
25 Pañcikā[3].

Of these Pāṭhya, Hṛdyā, Vyākhyāsāra, Hṛdayabodhikā, Lalitā, Kairalī, Vākyapradīpikā and Pañcikā are written by scholars of Kerala. In addition to these there are also a few Malayalam commentaries (including the Alpabuddhiprabodhanam of Śrīkaṇṭha) written by Kerala authors[4].

## *The Commentary.*

In the colophons found at the end of the various sections of the commentary, the work is referred to as Hṛdayabodhikā. But in certain MSS. the work is also referred to as

3. The commentary Pañcikā is not noticed in the New Catalogus Catalagorum. It is referred to by Śrīdāsapaṇḍita (vide. p 154 of the present volume).

4. There are also a few unidentified and incomplete manuscripts of Aṣṭāṅgahṛdaya-vyākhyā which might be different from any of the above.

हृदयबोधिनी[5] (MS. T 1448).

In his commentary Lalitā on the Aṣṭāṅgahṛdaya, Śaṅkara of Planthol Illam (Vayaskara) refers to Hṛdayabodhikā in the following words :

सुन्दर्यादिष्ववैशद्यादर्थानामल्पचेतसाम् ।
विस्तरादर्थगाम्भीर्याद्व्याख्यां कर्तुं यतामहे ॥
हृद्येन्दुपाठ्यव्याख्यानमतभेदप्रदर्शिनीम् ।
समालम्ब्य गभीरार्थां व्याख्यां हृदयबोधिकाम् ॥

This encomium paid to the work stands fully justified, for the Hṛdayabodhikā quotes and discusses the views expressed in earlier commentaries such as Sarvāṅgasundarī, Indu, Pañcikā Paṭhyam, Hṛdyā, Vyākhyāsāra and Dīpikā. It also draws much on the original works like Caraka, Suśruta, Aṣṭāṅgasaṅgraha, Bhojasaṁhitā, Kharanāda, Āgama, Āśvinasaṁhitā, Nandikeśvarasaṁhitā, etc., for elucidating various technical points.

Commentaries like Sarvāṅgasundarī pay more attention to textual interpretation than explaining the technical points and pointing out the practical ways for treatment and the preparations of medicines. But Hṛdayabodhikā is of great help to physicians in medical practice as well as in preparing medicines. It is with this purpose in mind that the commentator has extracted materials from various other works on Indian medicine.

The fact that the commentary gives the Malayalam equivalents of technical words has made it very useful to physicians of Kerala. Here it may be pointed out that physicians in all parts of India are very often put to great difficulties in identifying the medicinal plants mentioned in the standard works on Ayurveda. In the commentary on Sūtrasthāna itself the Malayalam equivalents of not less than 800 Sanskrit terms are given[6].

5. Aufrecht in his Catalogus Catalagorum notices this work as Hṛdayaprabodhikā. In the New Catalogus Catalagorum the title Hṛdayabodhikā is omitted.

6. Vide Appendix IV.

*The Author.*

From the stanza with which the commentary opens it can be gathered that the author was known as Paṇḍita and that one Vāsudeva[7] was his teacher. The stanza runs as follows:

आयुर्वेदाचार्यान् ब्रह्मादीन् वासुदेवमाचार्यम् ।
नत्वा पण्डितनाम्ना व्याक्रियते हृदयबोधिका टीका ॥

In the colophons at the end of the various chapters the author is mentioned by the name Śrīdāsapaṇḍita. The colophon at the end of the first chapter is given below:

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां सूत्रस्थाने प्रथमोऽध्यायः ।

From this it may be inferred that Śrīdāsapaṇḍita was the commentator's full name and that he was popularly known as Paṇḍita.

Śrīdāsapaṇḍita was a colleague of the author of Vyākhyāsāra, another Keralīya commentary on the Aṣṭāṅgahṛdaya. This is evident from the fact that the same passages are seen quoted in the Vyākhyāsāra and in Hṛdayabodhikā as taken from the work of the teacher of the commentators.

Eg. 1. Vyākhyāsāra:—

अहनि गोसर्गे मध्यंदिनेऽर्धरात्रे पर्वदिनेष्वनङ्गेऽपि वेति सङ्ग्रहदर्शनात् पूर्वोक्त एवार्थो युक्त इत्यस्मद्गुरूणां सिद्धान्तः । सू० VII. 70.

Hṛdayabodhikā:—

अहनि गोसर्गे मध्यंदिनेऽर्धरात्रे पर्वदिनेष्वनङ्गेऽपि वेति सङ्ग्रहदर्शनात् (पूर्वोक्त)क्त एवार्थो युक्त इत्यस्मद्गुरूणां सिद्धान्तः । सू० VII.70.

7. Vāsudeva, the author of Navakhaṇḍa, an ancient Malayalam work on medicine, might be the teacher of Śrīdāsapaṇḍita.

2. Vyākhyāsāra :—

नात्र यथासङ्ख्यं पार्श्वकक्ष्यास्तनानामन्तर इत्यस्मद्गुरवः । सू० XXVII-13.

Hṛdayabodhikā :—

नात्र यथासङ्ख्यं पार्श्वकक्ष्यास्तनानामन्तर इत्यस्मद्गुरवः । सू० XXVII. 13.

Śrīdāsapaṇḍita has quoted from Vyākhyāsāra profusely. A few quotations may be given here :

1. सारकृत् त्वेवमाह — वृत्तं गोपुच्छाकारादि शेषं पूर्वोक्तमत्र वेदनम् । पुष्पवृन्तोपमं तत्र न युज्यते, यतो मूत्रस्रोतःपरीणाहं हि तद् विधातव्यं पुरुषलिङ्गाकारमिति । XIX. 78.

2. खपुरः कुन्दुरुष्कादिनिर्यास इति सारकृत् । XX. 5.

3. सारकृदप्याह — आपूयदर्शनात् सकृदेव न्यसेत् । आहरेत्तचेति पूयदर्शनानन्तरं तत्र न स्थाप्यमित्यर्थः । तत्र न पाटनं कुर्यादिति पिण्डितार्थः । XXIX. 18.

4. सारकृदप्येवमाह — एते माघादयो मासाश्चान्द्रं पक्षमवलम्ब्य प्रोक्ता इति गम्यन्ते । III. 1.

Paṇḍita as a rule quotes and discusses the views of other authors and expresses his own independent views on points at issue. Where he gives his own view, he introduces it in the words पण्डितस्त्वाह । In the following passages Paṇḍita expresses his views :—

पण्डितस्त्वाह — शिरोहृदयवस्त्यादिमर्माण्यस्थिसन्धय इति नाम्नोच्यन्ते । तन्निबद्धाः शिरोहृदयवस्त्यादिसंश्रिताः सिरास्नाय्वादयश्चास्थिसन्धय इत्युच्यन्ते । अस्थिसन्धय इति संज्ञा । स मध्यमो रोगमार्ग इति ।

(Sūtrasthāna Ch. XII, verse 4).

पण्डितस्त्वाह — रागादीनामागन्तुत्वमनुपपन्नं, 'रागादिरोगान् सततानुषक्तान्' इत्यनेन सहजत्वनिर्देशादिति । अत्र ब्रूमहे — आद्यशब्दे-

नादिभवा गृह्यन्ते 'आघमादिभवे खाद्ये' इति वैजयन्ती । रागद्वेषभयादिभवा ज्वरादय इति ।

(Sūtrasthāna, Ch. IV, verse 31).

पण्डितस्त्वाह — तदा शरीरमनवस्थितासृक् अग्निर्विशेषादनवस्थितः तस्माद् रक्षितव्यः पुरुषः इति ।

(Sūtrasthāna Ch. XXVII, verse 52).

*Date.*

The Alpabuddhiprabodhana, a Malayalam commentary on the Aṣṭāṅgahṛdaya by Śrīkaṇṭha follows closely Vyākhyāsāra and Hṛdayabodhikā. In certain places in his commentary, Śrīkaṇṭha has even translated these commentaries into Malayalam for instance:—

Hṛdayabodhikā.

Sūtrasthāna, Ch. I, verse 9

यद्यपि च सर्वशरीरव्यापित्वात्ते सदैव शुक्रार्तवस्थाः स्युः तथापि इह शुक्रार्तवस्थैरिति कृतं विशेषणार्थं गर्भस्य । पित्रोरानन्दावस्थायां अन्त्यधातुनिषेककाले विशेषेण यथा शुक्रार्तवस्थाः ते स्युरिति ।

... ... ... ...

... ... ... ...

समशब्दोपादनेन च त्रिदोषजत्वं सर्वासां प्रकृतीनां ज्ञापयत्याचार्यः । अन्यथा त्रिदोषप्रकृतिः श्रेष्ठेति ब्रूयात् ।

(Printed edn. p. 38)

Alpabuddhiprabodhanam.

ദോഷങ്ങളും കെട്ടൊഴിയാതെയിരിക്കുന്ന ദേഹത്തിങ്കൽ വ്യാപ്തങ്ങളും എന്നിരിക്കേന്നേടത്തു ശുക്ലാർത്തവത്തിങ്കൽ സ്ഥിതിചെയ്യുന്നതു(ന്നേ)തിനെ ചൊല്ലി. അച്ഛന്റേയുമമ്മയുടേയും ആനന്ദാവസ്ഥയിങ്കൽ ശുക്ലം സ്വല്പിക്കുമ്പോഴും വിശേഷിച്ചു അവരോടു ആശ്രയിക്കുന്നു എന്നതിനെ അറിയിപ്പാൻ

... ... ... ... ...

... ... ... ... ...

സമമെന്നശബ്ദത്തെ പ്രയോഗിക്കകൊണ്ടു പ്രകൃതികളെല്ലാമെയും ത്രിദോഷജങ്ങളെന്നറിയിക്കുന്നു ആചാര്യൻ. അല്ലെങ്കിൽ ദോഷപ്രകൃതി ശ്രേഷ്ഠയെന്നു ചൊല്ലിയാൽ മതിയല്ലോ.

(Tran. No. 1478, p. 31, 36)

Nidānasthāna, Ch. VIII.

Introduction.

ज्वरगुल्मातिसारामग्रहणीशोफपाण्डुभिः कर्षणात् कुपितेन वायुना पायोर्वलिषु दुष्टासु जायन्तेऽर्शांसीत्युक्तं, अस्मिन्नध्यायेऽपि अर्शोभिः स्नेहविभ्रमादिभिश्च कुपितोऽनिलः अनलं मन्दीकृत्य पुरीषं द्रवतां नयन्नतीसारान् कल्पते इति वक्ष्यति, एतेनार्शसां हेतुर्ग्रहण्यतिसारौ ग्रहण्यतिसारयोर्हेतुः अर्शांसीति परस्परहेतुहेतुमद्भावः सम्बन्धः ।

(Transcript No. 1458, p. 129)

ജ്വരഗുല്മാതിസാരാമഗ്രഹണീശോഫപാണ്ഡുരോഗങ്ങളെക്കൊണ്ടുള്ള കർശനം ഹേതുവായിട്ട് കുപിതനായിരിക്കുന്ന വായുവിനാൽ ഗുദവലികൾ ദുഷ്ടങ്ങളായിരിക്കുംവിഷയത്തിങ്കൽ അർശസ്സുകൾ ഉണ്ടാകുന്നു എന്ന് മുമ്പിലത്തെ അദ്ധ്യായത്തിൽ ചൊല്ലപ്പെട്ടു. ഈ അദ്ധ്യായത്തിങ്കൽ അർശസ്സുകൾ ഹേതുവായിട്ടും സ്നേഹവിഭ്രമാദികൾ ഹേതുവായിട്ടും കുപിതനായിരിക്കുന്ന വായു അഗ്നിയെ മന്ദനാക്കീട്ട് പുരീഷത്തെ ദ്രവമായ് എന്നതിനെ നയിച്ചിട്ടതിനൊരുത്തനായിട്ട് അതിസാരത്തെ ഉണ്ടാക്കുന്നു എന്നു ചൊല്ലും. ഇതുകൊണ്ട് അർശസ്സുകൾക്കു ഹേതു അതിസാരഗ്രഹണികൾ, അതിസാരഗ്രഹണികൾക്കു ഹേതു അർശസ്സുകൾ എന്നിട്ട് അന്യോന്യം (ഹേതുകൾ ? ഹേതുഹേതുമത്) ഭാവം സംബന്ധം.

(Tran. No. 1475, p. 228)

This praves beyond doubt that Hṛdayabodhikā is earlier than Śrīkaṇṭha's Alpabuddhiprabodhana. This Śrīkaṇṭha may be identified with the Śrīkaṇṭha well versed in Āyurveda[8] and the teacher of Rāghava, the author of Padārthacintana, a commentary on Yudhiṣṭhiravijaya. Rāghava in his commentary refers to Śrīkaṇṭha as follows:

श्रीकण्ठाख्याः समाख्याताः श्रीकण्ठाकुण्ठधीगुणाः ।
सुश्रुता विश्रुता लोके गुरवो मम रक्षकाः ॥

This Rāghava was the teacher of Saṅkara, the author of Śrīkṛṣṇavijayam. In that kāvya Rāghava is referred to with deep respect in the stanza :

8. See History of Sanskrit Literature in Kerala, Part I, p. 180.

विभाति तस्मिन् गिरिजाकटाक्ष-
पात्रीभवन् कश्चन सूरिवर्यः ।
श्रीकोलभूपालकहर्षसिन्धु-
राकाशशी राघवनामधेयः ॥

Rāghava is mentioned in Candrotsava 9, a Maṇipravāla-kāvya of the 15th century and Śaṅkara is referred to in Kokilasandeśa by Uddaṇḍa10, who flourished in the beginning of the 15 century A. D. So Śrīkaṇṭha may be placed in the latter half of the 14th century and it may be tentatively accepted that Śrīdāsapaṇḍita whose work the former has drawn upon much, might have flourished earlier than 1300 A. D.

Manuscript No. C. 977 is the basis of this edition. In reading the proof and preparing the indices given at the end Messrs. Siromani M. Madhavan Unni and M. P. Parameswaran Namputiri have been of great help to me and I acknowledge their services with thanks.

P. K. NARAYANA PILLAI.

---

9 vide. *Candrotsava*, IV. 92.
10. vide *Kokilasandeśa*, I. 60.

## अष्टाङ्गहृदयद्वितीयभागीयाविषयाणाम् अनुक्रमणी ।

## वस्तिविध्यध्यायः १९

## धूमपानविध्यध्यायः २१.

## गण्डूषादिविध्यध्यायः २२.

## आश्च्योतनाञ्जनविध्यध्यायः २३.

## तर्पणपुटपाकविध्यध्यायः २४.

## शस्त्रविध्यध्यायः २६.

## शल्याहरणविध्यध्यायः २८

॥ श्रीः ॥

श्रीमद्वाहटविरचितम्

# अष्टाङ्गहृदयम् ।

श्रीदासपण्डितविरचितया हृदयबोधिकाख्यया व्याख्यया समेतम् ।

---

## द्वितीयो भागः ।

## अथ षोडशोऽध्यायः ।

शोधनादिगणसंग्रहाध्यायादनन्तरं स्नेहाध्यायारम्भः । यतः शोधनं स्नेहस्वेदावन्तरेण न सम्भवति । वक्ष्यति हि — 'स्नेहस्वेदावनभ्यस्ये'त्यादि ।

**अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ।**

स्नेहस्य दोषमार्दवकरणप्राधान्यादग्रे पाठः । स्नेहस्य सर्पिरादेः स्नेहने वा विधिः स्नेहविधिः, तं व्याख्यास्यामः । स्नेहाद्युपयोगार्थं देशादिवैपरीत्येन तद्व्यापच्छमनाय पूर्वमेव घृतादीन् शरावोदञ्चनादीन् व्यापच्छमनयोगद्रव्याणि च चिनुयात् ॥

स्नेहनद्रव्याणां लक्षणमाह —

**गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।**
**औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥ १ ॥**

गुर्वित्यादि । गुर्वादिगुणयुक्तं यद्द्रव्यं तत् स्नेहनं भवति । क्षीरमेवंगुणं स्नेहनम् । विपरीतमतो यल्लघूष्णस्थिररूक्षतीक्ष्णस्थूलकठिनसान्द्रगुणोपेतं तद्विरूक्षणम् । प्रायोग्रहणं विरूक्षणे स्नेहने च योज्यं व्यभिचारज्ञापनार्थम् । गुर्वी वल्मीकमृत्तिका रूक्षणी । सरा हरीतकी रूक्षणी । न च स्निग्धस्य स्नेहने व्यभिचारः । मन्दमृदुशीतं शशमांसं रूक्षणम् । गुरुशीतसरादिगुणो यवो रूक्षणः । तथा राजमाषोऽपि । सूक्ष्मो वातो रूक्षणः । द्रवं काञ्चिकं रूक्षणम् । एवं विरूक्षणेऽपि । तीक्ष्णोष्णं तैलं स्नेहनम् । लघु सर्षपतैलं छागं

G. P. T. 1779. 500. 7-2-1120.

च दुग्धं जाङ्गलं च मांसं स्नेहनम् । उष्णं मत्स्यमाहिषमांसं च स्नेहनम् । कठिनमक्षोलनालिकेरादिफलं स्नेहनमित्यादि द्रष्टव्यम् । अप्रतिज्ञातस्य स्वरूपकथनं विरूक्षणस्य कथमिति चेदुच्यते । विरूक्षणज्ञानमपि स्नेहनविज्ञानाय स्यादिति स्नेहव्यापत्प्रतीकारत्वाच्च शोधनाङ्गत्वाच्च रूक्षणस्योक्तिः । हाटकोऽपि स्नेहने प्रकृते विरूक्षणोपन्यासोऽन्वयव्यतिरेकेण सुतरां स्नेहनस्य सम्यक् प्रतिपादनार्थमित्याह ॥ १ ॥

इदानीं स्नेहनेषु मुख्यतमं चतुष्टयमाह —

सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्याऽनुवर्तनात् ॥ २ ॥

सर्पिरित्यादि । सर्पिषो ज्यायस्त्वादग्रेऽभिधानम् । सर्पिरादिचतुष्टयं स्नेहेषु सर्वस्नेहद्रव्येषु क्षीरमाषामिषादिषु मध्ये प्रकर्षेण वरं श्रेष्ठम् । आशु स्वकार्यकरणात् । स्थावराणां तिलाक्षोलादीनां यः स्नेहस्तत् तैलमित्युच्यते । जङ्गमानां स्नेहः सर्पिः । मांसस्नेहो वसा । अस्थ्यन्तर्गतः स्नेहो मज्जा । स्नेहेषु सर्पिरादिषु चतुर्ष्वेति न वाच्यं निर्धारणानुपपत्तेः । तत्रापि च तेष्वपि मध्ये सर्पिरुत्तमम् कुतः संस्कारस्यानुवर्तनात् । ननु यदि संस्कारमनुरुध्यते सर्पिस्तदानीं मरिचचित्रकादिभिर्द्रव्यैरभिसंस्कृतस्य घृतस्य शैत्यादिगुणविपर्यासः प्राप्तः । न चेदं दृष्टमिष्टं वा यदस्य शैत्यादयो गुणा विनश्यन्त्यौष्ण्यादयश्चोत्पद्यन्त इति । अत्रोच्यते । अनुशब्दोऽत्र सहार्थे । अनेकार्थत्वान्निपातानाम् । अतोऽयमर्थः — सर्पिषो गुणाः संस्कारगुणैः सह वर्तन्ते न तु तैलादीनाम् । तैलवसामज्जानो हि संस्कारवशात् स्वगुणांस्त्यजन्तीति । अत्र चोदाहरणं चन्दनाद्यं तैलम् । अतो द्रव्यान्तरैर(न)भिभूतगुणत्वात् सर्पिषः, इतरेषां च तैलादीनां द्रव्यैरभिभूतगुणत्वादुत्तमत्वम् । अत एव च वातपित्तज्वरादिषु घृतसाध्येषु भेषजं तैलं नेष्टमनिष्टसम्पादनात् । तैलसाध्येषु विकारेषु तदुपशान्त्यर्थं तथाविधद्रव्यसंस्कृतं घृतमभीष्टम् । तद्धि न तथानिष्टहेतुः । तस्मात् सर्वस्नेहेभ्यः सर्पिरेवोत्तमं संस्कारस्यानुवर्तनात् । हाटकोऽप्याह — संस्कारस्यानुवर्तनाद्, येन द्रव्येण संस्क्रियते तमनुवर्तते । स्वगुणानजहत् संस्कारगुणान् गृह्णातीति संस्कारानुवर्तनम् । एतत् तैलादिषु न सम्भवति । तथा हि—चन्दनादितैलादीनां विपरीतैर्द्रव्यान्तरैरौष्ण्यादिनाशो भवतीति । न तु स्नेहनाशः । तस्य बहुत्वाद् । इन्द्वाकारोऽप्याह — संस्कारो नामातिशय-

गुणाधानमित्यर्थः। पाकसंयोगादिः संस्कारः। येन द्रव्यादिना सर्पिः संस्क्रियते तस्य गुणानादाय स्वगुणानत्यजदेव तिष्ठति। तैलादयस्तु स्वगुणान् विहाय संस्कारगुणान् भजन्ते। संस्कारस्यानुरूपावृत्तिरनुवृत्तिः। अनेकशक्तिसम्पन्नत्वा-न्माधुर्यादविदाहित्वाच्च तदन्तःसात्म्यत्वाच्च घृतस्तुतिरियमित्यर्थः। इति ॥ २ ॥

**पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम्।**

पित्तघ्ना इत्यादि। यो यः पूर्वो यथापूर्वम्। यो य उत्तरो यथोत्तरम् इति 'यथा सादृश्ये' इत्यव्ययीभावः। उत्तरमपेक्ष्य पूर्वः, पूर्वमपेक्ष्योत्तरः। तेन चतुर्णां स्नेहानां यथानिर्दिष्टानां सर्पिरादीनां त्रय एव स्नेहाः वसामज्ज-सर्पिःसंज्ञका यथापूर्वत्वेन संबध्यन्ते, न तु तैलाख्योऽपि स्नेहस्तस्य पूर्वत्वा-भावात्। नह्यन्योऽस्मात् कश्चिदुत्तरोऽस्ति, यदपेक्षयैव पूर्वत्वमात्मन आसादयेत्। तस्मात् पूर्वत्वसम्बन्धस्तैलस्य। तदेवं यथापूर्वं पित्तघ्नत्वं वसामज्जसर्पिषाम्। वसा पित्तघ्नी, मज्जा पित्तघ्नतरः, घृतं पित्तघ्नतममित्यर्थः। इतरौ वातकफौ पित्तापेक्षया तौ घ्नन्ति पराकुर्वन्ति इतरघ्नाः। यथोत्तरं त्रयः स्नेहाः मज्जावसा-तैलाख्या वातश्लेष्मघ्नाः। मज्जा वातश्लेष्मघ्नः, वसा वातश्लेष्मघ्नतरा, तैलं वा-तश्लेष्मघ्नतममित्यर्थः। हाटकस्त्वाह — ते च सर्पिरादयः स्नेहा यथापूर्वं पित्तघ्नाः। यथोत्तरमितरघ्नाः। श्लेष्मणि स्नेहप्रतिषेधादितरघ्नशब्देन सामान्यो-क्तावपि वातश्लेष्मघ्ना इति गम्यते। अथ वा द्रव्यान्तरसंस्कृतसर्पिराद्यपेक्षया इतरशब्देन कफस्यापि ग्रहणम्। तेनैव तैलस्यापि पित्तघ्नत्वं सिद्धम्। अक्षा-दीनां वा तैलस्य पित्तघ्नत्वमिति। यो यस्मात् पूर्वः, स तस्मात्पित्तघ्नः। यो यस्मादुत्तरः, स तस्माद् वातघ्नः। तैलस्य पूर्वत्वासम्भवात् पित्तघ्नत्वाभावः। न च सर्पिरितरघ्नं तस्योत्तरत्वाभावात्। वसामज्ज्ञोस्तु यत्र मांसानुगस्वरू-पत्वेन पित्तघ्नत्वं सम्भवति, तत्र पित्तघ्नत्वम्। अत्र च सर्पिषः पित्तघ्नत्वमल्प-मात्रोपेतस्य वक्ष्यमाणस्य बृंहणाख्यस्य। न तु शोधनस्य मध्यमात्रोपेतस्य वा॥

"न सर्पिः केवलं पित्ते पेयं सामे विशेषतः।
सर्वं ह्यनुव्रजेद् देहं हत्वा संज्ञां च मारयेत् ॥".

इति वचनात्। पित्ते केवलमच्छं सर्पिर्न पेयम्। सामे पित्ते विशेषतः केवले पित्ते सर्पिषि पीते पित्तं स्नेहसहायं सर्वं देहमनुव्रजेत्। ततश्चाधिकं रोगं जनयेत्। सामे स्नेहसहायं पित्तं स्रोतःपिधानेन संज्ञां हत्वा मारयेत्। बृंह

णस्य द्रव्यान्तरेण सह प्रयोगादनपायित्वमिति । व्याकारस्त्वाह — ते सर्पिरादयः स्नेहा यथापूर्वं पूर्वानतिक्रमेण पित्तघ्नाः । उत्तरानतिक्रमेण इतरघ्नाश्च । इतरशब्देन वातो गृह्यते । श्लेष्मणि स्नेहनिषेधात् । कफहरद्रव्यसिद्धस्य स्नेहस्य कफहरत्वमस्तीति इतरशब्दः कफेऽपि वर्तत इत्येके । ननु सर्पिर्मज्जवसातैलानां पित्तघ्नत्वे सति यथापूर्वं पित्तघ्ना इति शक्यते वक्तुम् । वसामज्ज्ञोस्तु पित्तकृत्त्वं कफपित्तबलप्रदाविति च । उच्यते । पित्तहरद्रव्यसिद्धानां स्नेहानां पित्तहृत्त्वमित्यदोषः । सिद्धानां स्नेहानामुक्तिरिति कथं ज्ञायते । क्रमः । शुद्धयमकेन स्नेहानामुक्तेः सिद्धानामिति गम्यते । न हि स्नेहनार्थमसिद्धस्नेहानां विधिः । कफमांसबलप्रदाविति पाठश्चेन्नायं दोषः । अक्षनिम्बादितैलानां पित्तहृत्त्वकीर्तनादेवमुक्तिः, तिलोद्भूतमभ्यङ्गेन पित्तहृदिति ॥

घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ॥ ३ ॥

घृतादित्यादि । घृताद् गुरुणः सकाशात् तैलं गुरुतरमित्यर्थः । वसा तैलाद् गुरुतमा । ततोऽप्यतिशयेन मज्जा गुरुतमः । एतच्च प्रयोगवाक्येषूपयुज्यते इत्युच्यते ॥ ३ ॥

इदानीं यमकस्नेहस्त्रिवृतस्नेहः महास्नेह इति तत्र तत्रोच्यते । ते च न ज्ञायन्ते इति तज्ज्ञापनार्थं नामानि परिभाषते —

द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ।

द्वाभ्यामित्यादि । सर्पिरादिभ्यो द्वाभ्यां स्नेहाभ्यां संयुक्ताभ्यां यमको भवति । यथा सर्पिस्तैलाभ्यां, सर्पिर्मज्जभ्यामित्यादि । एवं त्रिभिः स्नेहैः युक्तैस्त्रिवृतो भवति । सर्वैः पुनर्महास्नेहः । अत्र, उच्यते इति शेष इत्यन्ये ॥

इदानीं स्नेह्यानस्नेह्यांश्च निरूपयति —

स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ॥ ४ ॥
वृद्धबालाऽबलकृशा रूक्षाः क्षीणास्ररेतसः ।
वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ॥ ५ ॥
स्नेह्याः

स्वेद्येत्यादि । स्वेद्यादयः स्नेह्याः स्नेहयोग्याः । न स्नेहितः स्वेद्य इत्यर्थः । यश्च संशोध्यः स प्रथमं स्नेह्यः । अर्हार्थे कृत्यप्रत्ययोऽत्र ण्यत् । आसक्तशब्दस्य मद्यादित्रयेण सम्बन्धः । अबला अल्पबला इत्यर्थः । क्षीणास्र-

ब्दस्यासृग्रेतोभ्यां सम्बन्धः। क्षीणरुधिराः क्षीणशुक्राः। वातार्ताश्च। स्यन्दादिषु प्रत्येकमिनिर्योज्यः। स्यन्दोऽभिष्यन्दोऽक्षिरोगः। दारुणप्रतिबोधः कृच्छ्रोन्मीलो वर्त्मरोगविशेषः। एते स्नेह्याः स्नेहार्हाः॥ ४, ५॥

नत्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः।
ऊरुस्तम्भाऽतिसाराऽऽमगलरोगगरोदरैः॥ ६॥

मूर्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः।
अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने॥ ७॥

नत्वित्यादि। अतिमन्दाग्न्यादयो न स्नेह्याः। अतिशब्दो यावत् प्रत्येकं दुर्बलान्तेषु योज्यः। तेनातिदुर्बलो न स्नेह्य इत्यर्थः। अत एवाल्पबलाः स्नेह्याः न त्वतिदुर्बला इति न पूर्वापरविरोधः। अतिमन्दाग्नेः स्नेहजरणाशक्तेर्निषेधः। अतितीक्ष्णाग्नेरत्यग्निवृद्धिकरत्वात्। अतिस्थूलस्याग्निमेदोवृद्धिभयात्। अत्यल्पबलानां जरणाशक्तेर्मन्दाग्निवत् स्नेहव्यापद् जायते। ऊरुस्तम्भादीनां मद्यान्तानां पीडितशब्देन सम्बन्धः। एषु शोधनप्रसङ्गेऽप्यस्नेहनं स्नेहव्यापद्भयात्। स्नेहनं विना शोधनमिति यावत्। अपप्रसूता स्रुतगर्भा न स्नेह्येति लिङ्गवचनविपरिणामः। प्रयुक्ते च नस्यादिकर्मणि आदोषसाम्यात् सर्व एव न स्नेह्याः॥ ६, ७॥

साम्प्रतं चतुर्णां स्नेहानां मध्ये यो येभ्यो हितः तं दर्शयन्नाह। स्नेहप्रसङ्गेन स्नेहानां प्रयोगविषयं दर्शयतीति व्याकारः—

तत्र धीस्मृतिमेधादिकांक्षिणां शस्यते घृतम्।
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु॥ ८॥

तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु।

तत्रेत्यादि—तत्र तेषु स्नेहेषु मध्ये धीप्रभृतिकाङ्क्षिणां स्नेहप्रसङ्गे सति घृतं शस्यते। तस्य तथाशक्तित्वात्। धीर्बुद्धिर्व्यवसायात्मिका। पूर्वविज्ञानजनितसंस्कारसम्भूतं ज्ञानं स्मृतिः। मेधा प्रज्ञा आशुग्रहणसामर्थ्यं वा ग्रन्थार्थयोः। आदिशब्देन स्वरायुर्वर्णबलपुष्ट्यादिपरिग्रहः। केचिदग्निकाङ्क्षिणामिति पठन्ति। ग्रन्थ्यादिरोगिषु, शरीरलाघवदृढत्वार्थिषु, क्रूरकोष्ठेषु च प्राणिषु तैलं शस्यते इति सम्बन्धः॥

वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ॥ ९ ॥
रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च ।
शेषौ

वातेत्यादि । वातादीनां क्षीणधातुना प्रत्येकं सम्बन्धः । वातादिभिः षड्भिः कारणैः क्षीणधातुषु च रूक्षादिषु च । शेषौ स्नेहौ घृततैलाभ्यामन्यौ वसामज्जानौ शस्येते । क्लेशक्षमस्य मज्जवसयोर्विधानादक्लेशक्षमे पुरुषे सर्पिस्तैलयोरेव प्रयोगः सिध्यति । क्लेशक्षमः क्लेशसहः । अत्यग्निषु महाबलवदग्निष्विति द्रष्टव्यम् । अन्यथात्यग्निषु स्नेहनिषेधात् पूर्वापरविरोधः स्यात् । अथवात्यग्निष्वपि वसामज्जानौ अनुजज्ञे अपवादवाक्यत्वात् । अत एवात्यग्नेः स्नेहनिषेधोऽपि मज्जवसाव्यतिरेकेण । अत्रानयोरनुज्ञानादित्यवगन्तव्यम् । अथवात्यग्निविहितं वराहादिमांसम् । तथा तज्जयोर्वसामज्ज्ञोरेवोपयोगे मांसानुगस्वरूपाविति वचनात् । कुपितेन वातेनावृता रुद्धाः पन्थानो देहस्रोतांसि येषां ते वातावृतपथास्तेषु ॥

मज्जवसयोः समानं विषयं प्रदर्श्येदानीं वसाया विषयान्तरमप्याह —

वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च ॥ १० ॥
तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ।

वसेत्यादि । वसा तु तुशब्दो विशेषे । सन्ध्यादिस्थानजातासु रुजासु व्याधिषु प्रायशः । चशब्दः समुच्चये । वक्ष्यमाणेषु च दग्धरुगाहतरुग्भ्रष्टयोनिरुक्कर्णरुक्शिरोरुक्षु च शस्यते ॥

शोधनार्हस्य स्वस्थस्य स्नेहविषये स्नेहनियमः कालनियमश्च क्रियते । हृद्याकारोऽपि सर्वत्र सर्वस्नेहप्राप्तौ विषयभेदो दर्शितः । इदानीं सर्वस्मिन् काले सर्वस्नेहप्राप्तौ स्नेहकालयोर्नियमं दर्शयतीत्याह । अनन्तरं स्वस्थस्य शोधनार्थं च स्नेहानामृतुविशेषेण नियमप्रदर्शनार्थमाहेति हाटकः । कालमुद्दिश्य स्नेहौचित्यमाहेति पाठ्यकारः —

तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे ॥ ११ ॥

तैलमित्यादि । प्रावृट्शब्देन पूर्वोक्तः श्रावणमासो गृह्यते । एवं शेषयोरपि । प्रावृषि श्रावणे मासि स्नेहनप्रसङ्गे वातजयाय तैलं शस्तम् । योज्यमिति वा । वर्षान्ते शरदि कार्तिके मासे घृतं पित्तजयाय । अन्यौ तु वसामज्जानौ माधवे वसन्ते चैत्रे मासे कफोत्क्लेशाय । तुशब्दो विशेषे । वसामज्ज्ञो-

दोषकालयोस्तुल्यत्वेऽपि उत्क्लेशनार्थं प्रयोगो न विरुध्यत इत्यर्थः । अयं चोत्सर्गविशेषणोक्तः सर्वस्नेहः शोध्यस्याशोध्यस्य च ॥ ११ ॥

**ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ।**

ऋतौ साधारणे श्रावणकार्तिकचैत्राख्ये स्नेहः शस्तः । हेतौ सप्तमी । अत्युष्णवर्षशीतेषु ग्रीष्मवर्षाहिमागमेष्वेवं प्रयोगो नेष्यते । श्रावणादीनां साधारणत्वादेवं विधिरित्यर्थः । ऋतौ साधारण इति (कथमुक्तं ? एतदुक्तं)भवति । सङ्कल्पिते साधारणे ऋतौ यथा पूर्वं शोधनस्योक्तं तथेदानीमपि स्नेहने करिष्यमाणे तथाविध एव साधारणऋतुः सङ्कल्प्यः । तत्रापि नियमं दर्शयति— अह्नि दिवसे न निशायाम् । रवौ च विमले निर्मले मेघादिभिरनावृते सातपे शस्तः स्नेहः सर्वोऽपि दिवस एव प्रयोज्यः । ऋत्वेकदेशे ऋत्वभिधानमुपचारात् ॥

शीतोष्णयोः स्नेहप्रतिषेधादिदमुच्यते तैलं त्वरायामित्यादि । व्याकारस्तु तैलं प्रावृषीत्यादिस्वस्थविषयमुक्त्वेदानीं दोषादिभेदादपि स्नेहभेदं दर्शयति तैलं त्वरायामित्यादिनेत्याह । अस्मद्गुरवस्तु तैलं प्रावृषीत्यादिना शोधनार्हस्य स्वस्थस्य स्नेहविषये स्नेहनियमः कालनियमश्च, ऋतावित्यादिना शोध्यस्याशोध्यस्य चातुरस्य स्वस्थस्य च स्नेहनियमः कालनियमश्च, । शीतोष्णयोः स्नेहप्रतिषेधादिदमुच्यते तैलं त्वरायामित्यादीत्याहुः —

**तैलं त्वरायां शीतेऽपि**

तैलं त्वरायामित्यादि । त्वरायां सत्यां स्नेहविषयव्याध्युपशमाय त्वरमाणे शीते हेमन्तशिशिराख्ये ऋतावपि दिवा तैलं योजयेत् । अपिशब्दान्न केवलं वर्षासु । अथ वा तैलं त्वरायामिति, शीघ्रसम्पाद्ये स्नेहकार्ये हेमन्ते शिशिरे च काले तैलं स्नेहनार्थं प्रयोज्यम् । स्नेहकार्यं द्रुतं जनयति । अपिशब्देन प्रावृष्येवेति न नियम इत्यर्थः ।

सर्पिषोऽपि कालभेदमाह, सर्वस्य स्नेहस्याह्नि उपयोगात् रात्रावप्रयोगः प्राप्त इत्याह —

**घर्मेऽपि च घृतं निशि ॥ १२ ॥**

घर्मेऽपीत्यादि । न केवलं शरदि घृतं प्रयुञ्जीत । यावद् घर्मेऽपि ग्रीष्मेऽपि उष्णकाले त्वरायां सत्यां निशि रात्रौ घृतं प्रयुञ्जीत । दाहार्तानां सर्पिषो नोपदेशात् । अत्र तु रात्रावेव सर्पिरेव च ॥ १२ ॥

दोषतोऽप्याह —

**निश्येव पित्ते पवने संसर्गे पित्तवत्यपि ।**

**निश्येवे**त्यादि । तथा केवले पित्ते, कुपिते पवने च कुपिते, तथा पित्तवति संसर्गे पित्तानिले पित्तकफे च निश्येव यथार्हस्नेहो योज्यः । अथवा पित्तादिषु निशि घृतं योज्यम् । न केवलं घर्मकाल एव सर्पिर्निशि योज्यं, किन्तु पित्ते दोषे पित्तजनिते रोगे च, पवने पवनजनिते रोगे च निशि घृतं योज्यमित्यर्थः ॥

**निश्यन्यथा वातकफाद्रोगाः स्युः पित्ततो दिवा ॥ १३ ॥**

**निश्यन्यथे**त्यादि । अन्यथा शीते काले निशि घृतोपयोगाद् वातकफाद्धेतो रोगाः स्युः । पित्ततो दिवा, उष्णे काले दिवा तैलोपयोगात् पित्तनिमित्ता रोगाः स्युरिति सम्बन्धः । व्याख्याकारोऽप्याह — निश्यन्यथा विहितप्रकारादन्यप्रकारेण घृतप्रयोगे वातकफयोः कोपः, उष्णकाले दिवा तैलोपयोगे पित्तकोपः स्यात् । उक्तवांश्च —

"सर्वं सर्वस्य च स्नेहं युञ्ज्याद् भास्वति निर्मले ।
ऋतौ साधारणे दोषसाम्येऽनिलकफे कफे ॥
दिवा निश्यनिले पित्ते संसर्गे पित्तवत्यपि ।
त्वरमाणे तु शीतेऽपि दिवा तैलं प्रयोजयेत् ॥
उष्णेऽपि रात्रौ सर्पिश्च दोषादीन् वीक्ष्य चान्यथा ।
निश्यश्नुते वातकफाद् रोगानहनि पित्ततः ॥

इति । अन्यत्रापि —

न प्रावृष्येव तिलजं हेमन्ते शिशिरे दिवा ।
स्नेहनार्थं प्रयुञ्जीत विकारे कफवातयोः ॥
न शरद्येव सर्पिः स्यादुष्णकाले तु पैत्तिके ।
विकारे निशि युञ्जीत संसर्गे पित्तवत्यपि ॥
उष्णकाले दिवा तैलप्रयोगात् पित्ततो भयम् ।
शीतकाले निशि घृते युक्ते वातकफाद् भयम् ॥"

इति ।

सर्पिः शरदि पातव्यं वसा मज्जा च माधवे ।
तैलं प्रावृषि नात्युष्णशीते स्नेहं पिबेन्नरः ॥
वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः ।
श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे ॥

अत्युष्णे वा दिवा पीतो वातपित्ताधिकेन वा ।
मूर्छां पिपासामुन्मादं कामिलां वा समीरयेत् ॥
शीते रात्रौ पिबन् स्नेहं सद्यः श्लेष्माधिकोऽपि वा ।
आनाहमरुचिं शूलं पाण्डुतां वा समृच्छति ॥
जलमुष्णं घृते पेयं यूषं तैलेऽनुशस्यते ।
वसामज्ज्ञोऽस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा ॥

इति चाह । श्लेष्मानुबन्धादिभ्यो दोषेभ्यः शरदि वसन्ते च सर्पिरादीनां पानमयुक्तम् । ब्रूमः । शरदि तत्साध्यस्य सर्पिषः श्लेष्मानुबन्धपरिहारार्थं तिक्तस्य पानं विहितम् । मधौ तु वसामज्जानौ कफं वर्धयत एव । एवं च सति वमनं सुखेन क्रियते । माधवे प्रतिक्षपिता (ना ? नां)वातप्राबल्यात् तच्छमनार्थं प्रयुज्यते । तैलस्य प्रावृषि पित्तानुबन्धेऽपि तत्प्रतिपक्षौषधसंस्कृतस्यानपायित्वमिति न्यासे । अरुणदत्तोऽप्याह— तैलं प्रावृषीत्यादि । तैलं प्रावृषि शस्यते इति सम्बन्धः । एवमुत्तरत्रापि । स्नेहनार्थं सर्वस्यैव स्नेहस्य प्रसङ्गे नियमोऽयं क्रियते । तैलं प्रावृष्येव । वर्षान्त एव सर्पिः । वसामज्जानौ माधव एव इति । वर्षासु तैलं वर्षान्ते सर्पिः वसामज्जानौ माधव इति योऽयं नियमः स किञ्चिदपेक्ष्यैव वर्तते आहोस्विदनपेक्ष्येत्यस्मिन् पर्यनुयोग इदमाह— ऋतावित्यादि । श्रावणादावृतौ साधारणे संशोधनात् पूर्वं स्नेहनार्थं स्नेहस्तैलादिकः शस्तः । तथांह्रि वासरे न निशायां तथा विमले रवौ जलदनीहारादिना अस्थगिते खरांशौ स्नेह इति । सामान्यशब्दप्रयोगात् सर्वस्नेहः सर्पिरादिचतुष्प्रकारो गृह्यते । तैलमित्यादि । त्वरायां सत्यां व्याधिक्रियां प्रति प्राप्तकाले स्नेहयोग्यतायां सत्यां शीते हेमन्तशिशिराख्ये काले तैलं संशोधनात् पूर्वं स्नेहनार्थं शस्तम् । नान्यः स्नेहः । अपिशब्दान्न केवलं वर्षासु शस्तमित्यर्थः । सर्वस्य स्नेहस्याह्न्युपयोगाद् रात्रावप्रयोगः प्राप्तः इत्याह—घर्मेऽपि चेत्यादि । न केवलं शरदि घृतं प्रयुञ्जीत । न च घर्म एव निश्युपयुञ्जीत । यावत् पित्ते कुपिते तज्जे वा विकारे, तथा पवने कुपिते स्नेहसाध्ये घर्मे घृतं निश्युपयुञ्जीत । न दिवा न च तैलवसामज्जानो वा. तथा पित्तवति पित्ताधिके संसर्गे, वातपित्ताख्ये, श्लेष्मपित्ताधिक्ये च कुपिते, तज्जे वा विकारे स्नेहसाध्ये घर्मे घृतमेव निश्युपयुञ्जीत । पित्ते पवन इत्येतद्दोषविकारोभयोपलक्षणार्थं वेद्यम् ।

पित्तवतीति भूम्नि मतुप्। निश्यन्यथेत्यादि। अन्यथोक्तप्रकारादपरेण प्रकारेण यथा शीतकाले निशि घृतोपयोगाद् वातकफाद्धेतो रोगा भवेयुः, तथा दिवा उष्णकाले तैलोपयोगाद् पित्ताद् रोगाः स्युः। वसामज्ज्ञोस्त्वनिश्चितरूपत्वात् तयोर्नोष्णकाले, नापि शीते त्वरायां सत्यामुपयोगस्तन्त्रान्तरे दर्शितः। तथा चोक्तम् —

यथासत्वं तु (स? शै)त्योष्णे वसामज्ज्ञोस्तु निर्दिशेत्।

इति ॥ १३ ॥

स्नेहस्य कालनियममुक्त्वा कथं स्नेह उपयुज्यत इति योजनां दर्शयति— स्नेहानां प्रयोगकालमुक्त्वा इदानीं प्रयोगभेदं दर्शयतीति ह्याकारः। युक्त्येत्यादिना सर्वस्नेहाना-मवचारणं ब्रूत इति पाठ्यकारः।

**युक्त्यावचारयेत्स्नेहं भक्ष्याद्यन्नेन वस्तिभिः।**
**नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः ॥ १४ ॥**

युक्त्येत्यादि। युक्तिर्योग उपयोगलक्षणः युक्त्या मात्राकालक्रियाभूमिदेहदोषस्वभावानुगुणया स्नेहं सर्वं सर्पिराद्यमवचारयेदुपयुञ्जीत। केन सहेत्याह भक्ष्यादिनान्नेन सह। भक्ष्यं शशाङ्ककिरणादि। भक्ष इति वा पाठः। आदिशब्देन भोज्यलेह्यपेयस्य त्रिविधस्याप्यन्नस्य ग्रहणम् —

"भक्ष्यं भोज्यं तथा पेयं लेह्यं चान्नं चतुर्विधम्।

इति। देशादीन् निरूप्य युक्त्या कस्यचिद् भक्ष्येण कस्यचिदन्नेन सहेति पाठ्यकारः। युक्त्या यथायोग्यं देशकालाद्यानुकूल्येन भक्ष्यादिभिर्युक्त्या योगेन सहेति ह्याकारः। तथा वस्तिभिः बहुवचननिर्देशात् निरूहानुवासनोत्तरवस्तिभिः सह। तथा नस्यादिभिश्च। मूर्धतर्पणं शिरोवस्तिः। एवं भक्ष्यादिना प्रयुज्यमानस्य स्नेहस्य चतुष्षष्टिसङ्ख्या विचारणा भवन्ति ॥ १४ ॥

कथमित्याह—

**रसभेदैककत्वाभ्यां चतुष्षष्टिर्विचारणाः।**
**स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः ॥ १५ ॥**

रसभेदेत्यादि। रसभेदश्चैककत्वं च ताभ्यां रसभेदैककत्वाभ्यां स्नेहस्यावचार्यमाणस्य चतुष्षष्टिर्विचारणा भवन्ति। * उच्यन्ते। त्रिषष्टि रसभेदैः सह स्वयं चेति चतुःषष्टिधा विचारणाः प्रयोगाः। अथवा विविधं

---

* तत्र रसभेदा एकैकहीना इत्यादिग्रन्थेन त्रिषष्टिधा व्याख्याताः। तैः सहोपयुक्तस्य तथा एकक एक एव केवलस्नेह इत्यर्थः। तस्य भाव एककत्वं तेन सहोपयुक्तस्य चतुःषष्टिर्विचारणाः।

चार्यते प्रयुज्यतेऽनया स्नेह इति विचारणा। अथवा विलम्ब्य चारणा विचारणा। अथवा विर् ईषदर्थे चर प्रतियत्ने प्रतियत्नः संस्कारः ईषत् संस्कारहेतवः। प्रयोगविशेषा विचारणा अल्पमात्रा कल्पना इत्यर्थाल्लभ्यते। तस्माद् भक्ष्याद्यन्ने रसभेदसम्भवः। एको यः स्नेहः केवलमुपयुज्यते। न च पीयते। एकशब्देन वस्तिनस्याभ्यञ्जनादिकं गृह्यते। कथमेता एव विचारणा उच्यन्ते नाच्छपेयम् इत्याह। स्नेहस्येत्यादि। क्रमाद् यथासङ्ख्यं स्नेहस्यान्याभिभूतत्वादन्येन भक्ष्यादिना बहुना तथा रसभेदेन च सहोपयुक्त्या अभिभूतत्वात् तथाऽल्पत्वाच्च अल्पोपयोगित्वात् मूर्धकर्णाक्षितर्पणनस्या(द्दि ? दि)षु हि पान इव प्रभूतस्यावचारयितुमशक्यत्वाच्च चतुःषष्टिर्विचारणाः स्मृताः, आयुर्वेदविद्भिर्मुनिभिरिति शेषः। रसभेदैः सह प्रयुक्ते अन्याभिभूतत्वात् केवलप्रयोगेऽल्पत्वाच्चेति क्रमार्थः। सङ्ख्याग्रहणमच्छपानशमनबृंहणादीनां विचारणासंज्ञा नेति सूचयितुम्। विचारणासंज्ञा कथं क्रियते इति चेत् स्नेहमवचारयेद् इति यत्रोक्तं तत्राल्पमात्रा कार्येति सूचयितुम्। यत्र पुनरच्छ इति व्यवहारः तत्रैव बहुमात्रा कल्पना कार्येति ॥ १५ ॥

**यथोक्तहेत्वभावाच्च नाच्छपेये विचारणा।**
**स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात् ॥ १६ ॥**

यथोक्तेत्यादि। स्नेहस्य विचारणासंज्ञात्वे यथानिर्दिष्टो यो हेतुः तस्य यथोक्तस्य हेतोरन्याभिभूतत्वादिलक्षणस्य चाभावाद् अविद्यमानत्वाद् योऽच्छपेयः केवल एव तस्मिन्नच्छपेये केवलस्नेहपाने न विचारणासंज्ञा, केवलोपयोगित्वात् बहूपयोगित्वाच्चेत्यर्थः। अन्याभिभूतत्वमल्पत्वं च न विद्यतेऽच्छपेये तत्र पानसंज्ञैव। यत्र पिबेदिति वक्ष्यति तत्र बहुमात्रा। यत्रावचारयेदिति तत्र भक्ष्यादिभिः सह वा, केवलं स्त्यानस्य लेहनादिकं वा कार्यमिति सूचयति। नन्विह केवलः स्नेहो न विचारणेत्युच्यते। प्राक् च केवलस्यैव स्नेहस्य वस्त्याद्युपयोगो विचारणेत्यभ्यधायि। तदेतत् पूर्वापरव्याहतमिव मन्यामहे। नैतदस्ति। अच्छपेय इत्यस्य अयमर्थः। अच्छः केवलो यः स्नेहः पीयते स विचारणा न भवति। केवलस्नेहपानं विचारणेति न स्मर्यते। मूर्धादितर्पणादिना तु केवलस्य स्नेहस्य य उपयोगः सा विचारणेति। उक्तं च मुनिना—

**ओदनश्च विलेपी च रसो मांसं पयो दधि।**
**यवागूः सूपशाके च यूषः काम्बलिकः खडः।**

सक्तवस्तिलपिष्टं च मद्यं लेहास्तथैव च ।
भक्ष्यमभ्यञ्जनं वस्तिस्तथैवोत्तरवस्तयः ॥
गण्डूषः कर्णतैलं च नस्तःकर्माक्षितर्पणम् ।
चतुर्विंशतिरित्येताः स्नेहस्य प्रविचारणाः ॥
अच्छपेयस्तु यः स्नेहो न तामाहुर्विचारणाम् ।

इत्यादि ॥

स्नेहस्येत्यादि । स्नेहस्य सोऽच्छपेयाख्यः कल्पः प्रयोगः श्रेष्ठः प्रशस्ततमः । कुत इत्याह स्नेहकर्मणां तर्पणमार्दवादीनां आशुसाधनात् शीघ्रसम्पादनात् ॥ १६ ॥

प्रयोगभेदमुक्त्वेदानीं अच्छपेयस्नेहस्य मात्राभेदं त्रिविधं मात्रालक्षणं चाभिकृत्याह —

**द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ।**
**ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम् ॥ १७ ॥**
**कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ।**

द्वाभ्यामित्यादि । द्वाभ्यां यामाभ्यामग्निबलापेक्षयोपयुक्ता या स्नेहमात्रा जाठरानलवशात् जरां याति सा तस्य मात्रा ह्रस्वा । यामः प्रहरः । या चतुर्भिर्यामैर्जीर्यति सा तस्य मध्यमा । या अष्टाभिर्यामैर्जीर्यति सा उत्तमा मात्रा । एवं क्रमाद् यथाक्रमं ता ह्रस्वमध्योत्तमाः मात्राः कल्पयेदिति वान्वयः । दोषदूष्याद्यानुगुण्येन ताभ्यश्च तिसृभ्यो ह्रसीयसीमतिशयेन ह्रस्वां चतुर्थीमपि कल्पयेद् वैद्य इति शेषः । तेन जरणकालानुक्तेर्दोषादिपारतन्त्र्योक्तेश्च ह्रसीयस्या बहुविधमानत्वं दर्शितम् । 'ह्रस्वमध्योत्तमा' इति निर्देशे 'ङ्यापोरित्या'दिना ह्रस्वः । ह्रस्वा मात्रा यामद्वयजरणलक्षणा । ततोऽप्यर्वाक्कालेन या जरां गच्छति सा ह्रसीयसी । दोषादीन् दोषदूष्यभेषजदेशकालबलशरीराहारसत्वसात्म्यप्रकृतीः वीक्ष्यालोक्य । द्विविधो हि यामः — उक्तं च मौहूर्तिकैः ॥

"पादोनास्तु चतस्रः सार्धाः सप्तापि नाडिका यामः ।
पूर्वः प्रहरकनामा तस्यार्धे भीषणो दोषः ।

इति ।

अत्र महतां यामानां ग्रहणम् । तथा चोक्तम्—
"अहोरात्रमहः कृत्स्नमर्धाहं च प्रतीक्ष्यते ।

प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ॥

अल्पाभ्यादीनामल्पो यामो प्राह्नः । तदर्थं ह्रसीयसीमिति । ह्रस्वतमा ह्रसीयसी । प्रागेव तु ह्रसीयसीमिति — यत्राप्यन्यतमा मात्रा योज्या, तत्राप्यज्ञातकोष्ठत्वात् प्राक् प्रथममेव ह्रसीयसीं कल्पयेत् ।

अज्ञातकोष्ठे हि बहुः कुर्याज्जीवितसंशयम् ।

इति वचनात् । अज्ञातकोष्ठे पुरुषे उत्तममात्राविषयेऽपि पूर्वं ह्रसीयसीमेव कल्पयेत् । ततो ह्रस्वामनन्तरं मध्यमामनन्तरमुत्तमाम् । एवं मध्यममात्राविषये ह्रसीयसीं, ह्रस्वमात्राविषयेऽपि ह्रसीयसीं प्रकल्पयेत् । अतिप्रत्यवायतया । एवकारोऽवधारणे । तु शब्दो यथोत्तरमिति क्रमनिर्देशार्थः । तुशब्दोऽवधारण इतीन्दुः । ह्याकारोऽप्याह — महायामविषयेऽपि प्रथमं ह्रसीयसीमेव प्रयुञ्जीत कोष्ठादिपरिज्ञानार्थम् । उक्तं च सारमुष्टौ—

उत्तमाविषये मध्यां मध्यमाविषयेऽवराम् ।
स्नेहमात्रां प्रयुञ्जीत भिषक् कोष्ठादिवित्तये ॥

इति । अन्यैस्तु पलद्वयपलचतुष्टयपलषट्कसङ्ख्यावच्छिन्ना मात्रा उक्ताः । नैतद् युज्यते । यतो जाठरानलशक्तिमनपेक्ष्य स्नेहमात्रा प्रयुज्यमाना अनर्थायैव। मुनेरपि नैतन्मतम् । तद्ग्रन्थो हि — अहोरात्रमहः कृत्स्नमित्यादिना पठितः ॥ १७ ॥

अधुना शोधनशमनबृंहणभेदात् त्रिविधस्य स्नेहस्य कालमात्रालक्षणमभिकृत्याह । अथवाधुना ह्रस्वादिमात्राणां विषयभेदेन शोधनशमनबृंहणस्नेहः किं कुर्यादित्याह

**ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः ॥ १८ ॥**

ह्यस्तन इत्यादि । ह्यस्तनेऽन्ने पूर्वदिनाहारे जीर्ण एव जीर्णमात्र एव न त्व(न्ना)भिलाषे सति । न क्षुदुत्पत्तिः प्रतीक्ष्या । एवकारः कालातिक्रमपरिहारार्थः शुद्धये शोधनार्थं शोधनाङ्गस्नेहनायेत्यर्थः । न च स्नेहेनैव शुद्धिरभिप्रेता । बहुरुत्तमया मात्रया स्नेहोऽच्छः केवलः पेयत्वेन शस्यते । सञ्जातबुभुक्षेण तु पीतो जाठरानलस्य दीप्तत्वात् शोधनकार्यमकुर्वाणस्तद्योग्यतामनुत्पादयन्नाश्वेव जरामुपैति । वमनमपि बुभुक्षितस्य न सम्पद्यते कफापचितेः पूर्वोक्ताद्धेतोः । ह्याकारस्त्वाह — बहुरिति ह्रस्वा मात्रा, नोत्तमा अहोरात्रजरणलक्षणा । अथ कथं बहुरिति ह्रस्वमात्रा गम्यते इति चेद् उच्यते । समानतन्त्रादवगम्यते—

स्वस्थस्य स्नेहने मात्रा या ह्रस्वा सा विधीयते
अहरर्धेन जीर्णायां तस्यां लघु च भोजनम् ॥

इति ॥ १८ ॥

**शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ।**

**शमन** इत्यादि । शमनो यो रोगस्य शमनायोपयुज्यते, स्नेहः स क्षुद्वतः सञ्जातबुभुक्षस्य पुरुषस्य शस्यते । क्षुद्वत इत्यनेन जातायां बुभुक्षायां न जीर्णमात्र एव अन्ने । शोधन इव शमनो हि स्नेहो यत्र तत्रस्थं दोषं कुपितं शमनरूपत्वाच्छमयति । यदि पुनर्जीर्णमात्र एवाहारे स्नेहोऽयमबुभुक्षितस्यैवोपयुज्यते, तदानीं स्रोतसां कफाद्युपलेपानिवर्तनात् तत्सम्पृक्तोऽसौ स्नेहो न सर्वं शरीरमश्नुयात् । अप्राप्नुवंश्च न तं दोषं शमयेत् । तस्मात् क्षुद्वत एवायं शस्यते । ततः स्नेहे जीर्णेऽन्नं शस्यते । तत्राप्यनन्न एवान्नवर्जितः केवल एव भक्ष्यादिविचारणारहितः । अच्छ एव पेय इत्यर्थः । अन्नेन सहापि कुपितदोषशमनाय प्रयुज्यते इति प्राप्तौ निषेधः । सोऽपि मध्यमात्रश्च शस्यते । मध्यमया मात्रया । चशब्दादुत्तमया मात्रया च शस्यते । उत्तमा मात्रापि शमनार्थं प्रयुज्यते । यथावपीडके दर्शिता । बहुमात्रस्य न प्रचुरप्रयोग इति चशब्देनोक्तिः । अत्र चोत्तमया मात्रया स्नेहपाने दिनान्तरे पथ्यं कार्यम् । पुनः स्नेहप्रयोगः । पुनरन्यस्मिन्नहनि पथ्यं कार्यम् । मध्यमया मात्रया स्नेहपाने तु लघुभो-(जः?जि)नो नाऽर्धयाममात्रे अन्नकांक्षा भवति । तदा रात्र्यारम्भे त्रियामार्धे वा गते लघ्वन्नप्रायं द्रवप्रायं भोजनं भोज्यं मात्रयैव । ग्रन्थकारो हि शमने स्वल्पभोजनमेवानुजज्ञे । वक्ष्यति हि —

उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ।

इति । सुश्रुते चोक्तम्—

परिषिच्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम् ।
यवागूं पाययेदुष्णां सुकृतामल्पतण्डुलाम् ॥
देयो यूषो रसो वा स्यादकृतः सौरमान्वितः ॥
कृतो वाप्यल्पसर्पिष्को विलेपी वा विधीयते ।

इति ॥

**बृंहणो रसमद्याद्यैः सभक्तोऽल्पः**

**बृंहण** इत्यादि । यस्तु स्नेहो बृंहणः शमनाविशेषः स रसमद्याद्यैः सह उक्तः । सभोजनो योज्य इति । 'रस इत्यविशेषोक्तौ ज्ञेयो मांसरसो बुधैः ।' आदिशब्देन क्षीरगुडादेर्द्रवरूपस्य ग्रहणम् । तथा च सह भक्तेन ओदनादिना।

इति वर्तते । सभक्तश्च शस्यते । यस्तु बृंहणः स रसमद्याद्यैः सभक्तः समाजनो योज्य इति हाटकः । एष च स्नेहोऽल्पो ह्रसीयसीतोऽपि मात्रातोऽल्पः । अल्पमात्रया योज्यः ॥

हितः स च ॥ १९ ॥

बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ।
स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ॥ २० ॥
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ।

हितश्च स इत्यादि । स च बृंहणः स्नेहो बालवृद्धादिभ्यो हितः । हितयोगे चतुर्थ्याः प्रायिकत्वात् सप्तमी । बालादीनामितरेतरद्वन्द्वः । पिपासार्तः प्रसक्ततृडार्तः प्रसक्ततृट्पीडितः । स्नेहद्विषः स्नेहद्वेषिणो ये स्वभावेन स्नेहं द्विषन्ति । स्त्रीस्नेहयोश्च नित्यशब्देन सम्बन्धः, स्त्रीनित्येषु स्नेहनित्येषु चेत्यर्थः । उष्णे ग्रीष्मादौ काले च । कृशेषु नरेषु हितः ॥

स च बृंहणः स्नेहः उपयुक्तः किं कुर्यादित्याह — प्राङ्मध्येत्यादिना सभक्तस्य बृंहणस्य त्रैविध्यं ब्रूत इति पाठ्यकारः ।

प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ॥ २१ ॥
व्याधीन् जयेद् बलं कुर्यादङ्गानां च यथाक्रमम् ।

प्रागित्यादि । प्राक् च मध्यं च उत्तरं च प्राङ्मध्योत्तरं भक्तं यस्मिन् स्नेहे स एवम् । हाटकोऽपि प्राक् च मध्यं च उत्तरं च भक्तं यस्मिन् स्नेहे स एवमित्याह । तेनायमर्थः—भक्तस्यान्ते उपयुक्तोऽधोदेहजान् व्याधीन् जयेत्, मध्ये उपयुक्तो मध्यदेहजान्, भक्तस्य प्रागुपयुक्त ऊर्ध्वदेहजानित्यरुणदत्तः । हाटकस्त्वाह— भक्तस्यादावधोदेहजान् व्याधीन् जयेत् । एवं मध्ये मध्यजान् अन्ते चोर्ध्वजान् यथाक्रमं जयेत् । यथाक्रमं चाङ्गानां शरीरावयवानामधो मध्योर्ध्वसंज्ञकानां बलं कुर्यादिति । इन्दुकारोऽप्याह— प्राग्भक्तं भक्तस्य प्राक्, मध्यभक्तो भक्तस्य मध्ये, उत्तरभक्तो भक्तस्योत्तरश्च । असौ बृंहणो भोजनात् प्राक् पीतोऽधःकायगतान् रोगान् नाशयति । तत्र बलं च जनयति । मध्ये पीतो मध्यकायस्य, उपरि पीत ऊर्ध्वकायस्य । उक्तं च —

स्नेहः प्राग् भोजनात् कुर्यादूरुजङ्घाकटीबलम् ।
वेगानुलोम्यमारोग्यमधः कायगदक्षयम् ॥

मध्ये महत्त्वाग्निबलस्थिरताकुक्षिरुक्च्छमान् ।
इन्द्रियस्थिरतामूर्ध्वमूर्ध्वजत्रुगदक्षयम् ॥

इति । पालकाप्ये चोक्तं—

स्नेहः प्राग् भोजनात् पीतः (कश्चित् ?) कायबलावहः ।
पश्चात् पीतस्तु पूर्वार्धरोगहा बलवर्धनः ॥
सभक्तो बृंहणः पथ्यो बलाग्न्यूर्जस्करस्तु सः ।

इति । इदं चोक्तं—

मारुतेऽभ्यधिके सर्पिः सदा सलवणं हितम् ।
केवलं त्वधिके पित्ते कफे सत्र्यूषणं तथा ॥

इति । अन्यत्रापि —

मारुते लवणं सर्पिः पित्ते केवलमिष्यते ।
वैद्यो दद्याद् बहुकफे क्षारत्रिकटुकान्वितम् ॥

इति ॥

**वार्युष्णमच्छेऽनु पिबेत् स्नेहे तत्सुखपक्तये ॥ २२ ॥**
**आस्योपलेपशुद्ध्यै च तौरवारुष्करे न तु ।**
**जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ॥ २३ ॥**
**तेनोद्गारविशुद्धिः स्याच्चतश्च लघुता रुचिः ।**

**वार्युष्णमित्यादि ।** अच्छे अच्छपेये स्नेहे उत्तममध्यमह्रस्वमात्रोपयोजिते अनु पश्चाद् उष्णं वारि पिबेत् । किमर्थं तत्सुखपक्तये तस्य स्नेहस्य सुखेन पाकाय । तथा आस्योपलेपशुद्ध्यै च स्नेहविलिप्तस्यास्यस्य विशुद्धये । तुरवतैले भल्लातकतैले वाच्छपेये सत्युष्णोदकं न पिबेत् । तयोरत्युष्णवीर्यत्वादिति भावः । तुरवस्य विकारः स्नेहः तौरवः 'तस्य विकारः' इत्यण् । एवमारुष्करः । तौवरेति केचित् पठन्ति । चिरपीते च स्नेहे जीर्णाजीर्णं प्रति संशये सति भूयोऽप्युष्णजलं पिबेत् । अनुपानापेक्षं पुनर्ग्रहणं वीप्सार्थम् । तेनोष्णोदकपानेन उद्गारस्य विशुद्धिर्भवेत् । ततश्च जीर्णाजीर्णविशङ्कातोऽधिकमङ्गलाघवं रुचिश्च स्नेहस्य पातुः स्यात् । संग्रहे त्वन्यदप्युक्तम् —

ततो गुरुप्रावरणो निवाते शयने स्थितः ।
जरणान्तं प्रतीक्षेत तृ(ष्ण ?ष्य)न्नुष्णाल्पवारिपः ।
शिरोरुग्भ्रमनिष्ठीवमूर्च्छा[1]दाहारुचिक्लमैः ॥

१. मूर्च्छासादारतिक्लमैरिति मुद्रितसंग्रहपाठः ।

जानीयाद् भेषजं जीर्यज्जीर्णे तच्छान्तिलाघवात् ।
अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिः ॥ इति ॥

भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ॥ २४ ॥
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ।
उष्णोदकोपचारी स्यात् ब्रह्मचारी क्षपाशयः ॥ २५ ॥
न वेगरोधी व्यायामक्रोधशोकहिमातपान् ।
प्रवातयानयानाध्वभाष्यात्यासनसंस्थितीः ॥ २६ ॥
नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ।
यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ॥ २७ ॥
सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ।

भोज्योऽन्नमित्यादि । श्वः स्नेहं पास्यन्, तथा तस्मिन्नेव दिवसे स्नेहं पिबन्, तथा श्वः स्नेहं पीतवानपि । अपिः समुच्चये । स नरोऽन्नं मात्रया भोजयितव्यः । किंभूतमन्नं — द्रवोष्णम् । अत्र चोभयथा समासः । द्रवेण मुद्गयूषादिना सहोष्णमन्नं द्रवोष्णम् । तथा केवलं द्रवं च तदुष्णं च द्रवोष्णं विलेप्यादिकं केवलमेवेति । तथा अनभिष्यन्दि अकफकृत् । तथा नातिस्निग्धं अर्थादीषत् स्निग्धम् । तथा असङ्करं सङ्करवर्जितम् । पथ्यापथ्यान्नमिश्रीभावः सङ्करः । अपथ्येनामिश्रितमित्यर्थः । ननु मात्राशी सर्वकालं स्यादित्यनेन अल्पया मात्रया भोजनस्य सिद्धत्वे किमर्थमिह पुनर्मात्राग्रहणम् । ब्रूमः । (तत्र) मात्राशब्दः प्रमाणार्थः, इह त्वल्पार्थः । तेनायमर्थः । यावदच्छपस्य सम्यग् यथाकालं परिणमति तावतोऽप्य(ल्पो ? ल्पौ)दनेन स्वल्पं भोज्यः । स्नेहपानेऽजीर्णोत्पत्तौ महानत्ययः स्यादिति दर्शयितुं मात्राग्रहणम् । उक्तं च —

"पीतस्नेहस्य वाजीर्णे छर्दरुच्यग्निमन्दताः ।
देहक्षयश्च शोफश्च प्रसेकः सकफस्रुतिः ॥" इति ।

तथासौ स्नेहपाता उष्णोदकोपचारी स्यात् उष्णोदकमुपचरितुं सेवितुं शीलमस्य स एवम् । तथा ब्रह्मचारी ललनासङ्गरहितः । क्षपाशय इति

१. 'स्यन्दि' मुद्रिताष्टाङ्गहृदयपाठः २. 'यावदन्नमस्य' इति मुद्रितसुन्दरीपाठः.

'अधिकरणे शेतेः' इत्यच् । क्षपाशय इत्यनेन दिवास्वप्नस्य रात्रिजागरणस्य च निषेधः । यान्यहानि स्नेहं पिबति तान्यहानि व्यायामादींस्त्यजेत् । तथा तावन्त्यन्यान्यप्यहानि स्नेहपानरहितानि व्यायामादींस्त्यजेत् । अहानीत्यत्यन्तसंयोगे द्वितीया । सर्वकर्मसु स्वेदवमनविरेचनादिषु अयमुष्णोदकोपचारी स्यादित्यादिकः क्रमो विधिरित्यर्थः । यापनादिष्वहस्सु जीर्णवर्जे(?)नायं विधिरिति प्रदर्शनार्थं प्रायोग्रहणम् । व्याधिक्षीणेषु च प्रायोऽयमेव (वि)धिः । अत्राप्यतीसारादिष्वहःस्वप्नादीनामनुज्ञानात् प्रायोग्रहणम् ॥

**उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ॥ २८ ॥**

उपचार इत्यादि । तुर्व्यतिरेके । शमने स्नेह उपयुक्ते उपचारो भोजनादिर्विरिक्तवत् कार्यः । यथा विरिक्ते पेयादिकः क्रमस्तथाऽस्मिन्नपीत्यर्थः । ॥ २८ ॥

**त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ।**
**सम्यक् स्निग्धोऽथवा यावदतः सात्मीभवेत्परम् ॥ २९ ॥**

त्र्यहमित्यादि । मृदौ कोष्ठे सति पुरुषस्त्रिदिनमच्छं स्नेहं पिबेत् । क्रूरे कोष्ठे सप्ताहं पिबेत् । मध्यकोष्ठस्तु अत एव लक्षणादधिगम्यते । यथा — 'चत्वार्यहानि पञ्च वा स्नेहं पिबेद्' इति । यदि च त्र्यहेण सम्यक् स्निग्धलक्षणं न स्यात्, तदा चतुष्पञ्चरात्रमपि स्नेहं पिबेत् । मध्यकोष्ठस्तु षड्रात्रमपि पिबेद् इत्याह — सम्यक् स्निग्धोऽथवा यावद् इति । अथवा नैष नियमः । वातानुलोम्यमित्यादिः सम्यक् स्निग्धलक्षणोत्पत्तिरेव नियमः । अतः सप्ताहादप्यूर्ध्वमच्छः स्नेहः पेयो यावत् स्निग्धलक्षणं स्यात् । अतः परं स्नेहः सात्मीभवेत् । सात्मीभूते च स्नेहे यो दोषः स सङ्ग्रहे कथितः । यथा —

'सात्मीभूतो हि कुरुते न मलानामुदीरणम् ।
अतियोगेन वा व्याधीन् यथा पानातियोजनात्[1] ॥

इति ॥ २९ ॥

**वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ।**
**स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्ययः ॥ ३० ॥**

1. 'यथाम्भो ह्यतियोजनात्' इति मुद्रितसुन्दरीपाठः

**अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ।**

स्निग्धलक्षणमाह — वातानुलोम्यमित्यादि । सम्यक् स्निग्धे पुरुषे वातानुलोम्यादि क्रमान्तं लक्षणं भवति । वर्चः शकृत्, स्निग्धं तथासंहतं शिथिलम् । रूक्षेऽस्निग्धे विपर्ययो वैपरीत्यं यथोक्तेभ्यो लक्षणेभ्यः । अतिस्निग्धे तु स्नेहस्यातियोजनात् पुनः पाण्डुत्वादयो भवन्ति । स्रवशब्दस्य घ्राणादिभिः समासः ॥

**अमात्रयाहितोऽकाले मिथ्याहारविहारतः ॥ ३१ ॥**

**स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः ।**
**कण्डूकुष्ठज्वरोत्क्लेशशूलानाहभ्रमादिकान् ॥ ३२ ॥**

**अमात्रयेत्यादि** । अमात्रया पीतः अतिमात्रः स्नेहः सर्पिरादिः शोफादीन् करोति । तथा अहितो यो यस्य प्रतिषिद्धः स्नेहः । तथा अकाले ग्रीष्मादौ पूर्वं प्रतिषिद्धे । तथा मिथ्याहारविहारतो हेतोः द्रवोष्णमित्यादिविपर्ययेण उष्णोदकोपचारी स्यादित्यादिविपर्ययेण च शोफादीन् करोति । उत्क्लेशो दोषादीनाम् । आदिशब्देन बलक्षयजाड्यवाग्ग्रहादयः सङ्ग्रहोक्ता गृह्यन्ते ॥ ३२ ॥

**क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ।**
**तक्रारिष्टखलोद्दालयवश्यामाककोद्रवाः ॥ ३३ ॥**

**पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु ।**
**यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम् ॥ ३४ ॥**

**चिकित्सामाह — क्षुदित्यादि** । स्नेहविधिभ्रंशे सति क्षुत्तृष्णादिसाधनं चिकित्सा । क्षुत्तृष्णाशब्देन क्षुत्तृष्णानिग्रहौ गृह्येते । उल्लेखनं वमनम् । रूक्षशब्दस्य पानादित्रयेण सम्बन्धः । तक्राणि चारिष्टं चेत्येवं समासः । खलो व्यञ्जनविशेषः प्रागुक्तः । उद्दालः शालिविशेषः । यथास्वं प्रतिरोगं चेति । यथास्वं दोषानुगुण्येन । प्रतिरोगं यद् यस्मिन् रोगे स्वे स्वेऽध्याये उक्तं तदपि साधनम् ॥ ३४ ॥

स्नेहव्यापत्साधनस्य विलक्षणस्वभावत्वात् प्रसङ्गेन विरूक्षणस्य सम्यक्कृतातिकृतलक्षणमुच्यते —

**विरूक्षणे लङ्घनवत्कृतातिकृतलक्षणम् ।**

विरूक्षण इत्यादि । विरूक्षणे सम्यगुत्पन्ने तथात्यर्थोत्पन्ने च लङ्घनवत् कृतातिकृतलक्षणं ज्ञेयम् । कृतं चातिकृतं च कृतातिकृते तयोर्लक्षणम् । कृत-शब्देन सम्यक्कृतमुच्यते । तत्र लङ्घनस्य सम्यक्कृतस्य यल्लक्षणमुक्तं विमले-न्द्रियतादि तदेव विरूक्षणस्यापि सम्यक्कृतस्य लक्षणं बोध्यम् । तथातिलङ्घनस्य यल्लक्षणमतिकार्श्यादि तदेव विरूक्षणस्यातिकृतस्य लक्षणं विज्ञेयम् । विरूक्षणा-(ति)योगलक्षणं तु स्नेहातियोगलक्षणैरेवोक्तम् ॥

स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् ॥ ३५ ॥
स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेकं वमनं पुनः ।
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ॥ ३६ ॥

स्निग्धेत्यादि । उक्तेन प्रकारेण स्निग्धो यदा वमनेन विना विरेकमेव कारणवशेन करोति तदा पुरुषः पूर्वं स्निग्धोऽप्यनन्तरं स्निग्धादिगुणयुक्तरसभुक् स्वेदमाचरन् दिनत्रयं स्थितः सन् विरेकं कुर्यात् । धन्वोत्थो रसो जाङ्गलदेश-मांससमुद्भूतो रसः । मांसरसस्य स्वभावत एव स्निग्धद्रवत्वात् स्निग्धद्रवग्रहण-मधिकयोगायेति वेद्यम् । उष्णमुभयथा वीर्यतोऽग्निसंयोगाच्च । एवम्भूतं रसं भुङ्क्ते यः स एवम् । वमनं पुनरिति । यदा तु स्नेहादनन्तरं वमनमेवोपयुङ्क्ते तदा एकाहमनेनैव प्रकारेण स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् स्थितः । अन्यच्च दिनं द्वितीयमहः तत्करैः उत्क्लेशनकरैः सङ्ग्रहोक्तैस्तिलमाषगुलदध्या-दिभिः कफमुत्क्लेश्य स्थानात् प्रच्याव्य स्थितो वमनं कुर्यात् । एवं द्व्यहं स्थितो वमनं कुर्यात् । तत्करैः कफकरैरिति वा । 'कफो हेतु— 'इत्यादिना हेतोः ॥ ३६ ॥

मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।
स्नेहोचिताश्च ये स्नेह्यास्तान्पूर्वं रूक्षयेत्ततः ॥ ३७ ॥
संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ।

मांसला इत्यादि । मांसलत्वादियुक्ताः पुरुषा ये शोध्यत्वेन स्नेहयितु-मिष्टाः, तान् स्नेह्यान् । पूर्वं प्रथमम् । रूक्षयेत् । ततो रूक्षयित्वानन्तरं संस्नेह्य शोधयेत् । किमेवं सति भवतीत्याह— एवं सति मांसलादीनां स्नेहस्य सदृशत्वात् या स्नेहव्यापदाशङ्क्यते सा न जायते । मांसला उपचितमांसाः । मेदुरा मेदस्विनः ॥

**अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ॥ ३८ ॥**

न केवलं स्नेहव्यापदेवं न जायते यावद्रूक्षस्य स्नेहः प्रयुक्तः असात्म्यत्वाद् मलान् वातादीन् ईरयितुं शोधयितुम् । अलं पर्याप्तं भवतीति फलद्वयम् । असात्म्यतां गत इति हेतुगर्भम् ॥ ३८ ॥

**बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।**
**योगानिमाननुद्वेगान् सद्यःस्नेहान् प्रयोजयेत् ॥ ३९ ॥**

बाल इत्यादि । बालवृद्धादिषु पूर्वं बृंहणस्नेहविषयत्वपरिपठितेषु । यथायथं स्नेहविषये यः परिहारः शीतोदकादिः तमसहिष्णुष्वक्षमेषु सद्यः स्नेहाभिधानान् अनुद्वेगकरान् । इमान् योगान् वक्ष्यमाणान् । प्रयोजयेत् । बालादिषु पूर्वं बृंहणस्नेहविषयत्वपठितेषु, तथा ये स्नेहे प्रयुज्यमाने वर्ज्यपरिहारं कर्तुं न शक्नुवन्ति तेषु चेतीन्दुः ॥ ३९ ॥

के ते योगा इत्याह —

**प्राज्यमांसरसास्तेषु पेया वा स्नेहभर्जिता ।**
**तिलचूर्णश्च सस्नेहफाणितः कृशरास्तथा ॥ ४० ॥**
**क्षीरपेया घृताढ्योष्णा दध्नो वा सगुडः सरः ।**
**पेया च पञ्चप्रसृता स्नेहैस्तण्डुलपञ्चमैः ॥ ४१ ॥**
**सप्तैते स्नेहनाः सद्यः स्नेहाश्च लवणोल्बणाः ।**

प्राज्येत्यादि । तेषु बालादिषु । प्राज्यमांसरसाः प्रभूताज्यमांसरसाः जाङ्गलजा आनूपजाश्च यथायोग्यम् । प्राज्यमांसरसाः पुष्टमांसरसा इति हृद्यांकारः । तथा स्नेहभर्जिता पेया च । हाटकस्त्वाह — 'प्राज्यमांसरसाः प्रभूताज्यमांसरसाः तेषु मांसरसेषु अधिकरणभूतेषु सिद्धा पेया वा । किम्भूता स्नेहैः सह भर्जिता पक्वा' इति । इन्दुनाप्येवमुक्तम् । तथा तिलचूर्णश्च सस्नेहफाणितः सर्पिरादिना युक्तः क्षुद्रगुडेन च युक्तः । तथा कृसरस्तिलौदनः । तथेति स्नेहफाणितयुक्त इत्यर्थः । कृसरस्तिलमिश्रा विलेपीति हाटकः । दध्नः सरः (മമലയിഠ) पेया च पञ्चप्रसृता पञ्चप्रसृताख्या पेया । स्नेहैश्चतुर्भिः प्रसृतसम्मितैः पञ्चमेन तण्डुलेन च कृता चतुर्णां स्नेहानां चत्वारि प्रसृतानि तण्डुलस्य प्रसृतमिति पञ्चप्रसृताख्या पेया । तथा चागमः —

'सर्पिस्तैलवसामज्जतण्डुलप्रसृतैः श्रृता ।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता ॥'

इति । द्वे पले प्रसृतः । एते सप्त पूर्वोक्ताः सद्यः शीघ्रं स्नेहनाः । न केवलमेत एव स्नेहना इत्याह — स्नेहाश्च लवणोल्बणाः अपक्वा ये लवणाढ्याः स्नेहाः सर्पिरादयस्तेऽपि सद्यः स्नेहनाः ॥

कस्मादित्याह —

**तद्ध्यभिष्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ॥ ४२ ॥**

हि यस्मात् । तत् लवणम् । अभिष्यन्दि मालिन्येन स्रोतसां स्रावकम् अरूक्षत्वादिगुणयुक्तम् । सूक्ष्मं सूक्ष्मस्रोतोगामि । व्यवायि देहमाखिलं व्याप्य पाकाय कल्पते ॥ ४२ ॥

**गुडानूपामिषक्षीरतिलमाषसुरादधि ।**
**कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥ ४३ ॥**

कुष्ठादिषु स्नेहयोग्यत्वे सत्यपि गुडादि स्नेहनार्थं, न प्रकल्पयेत् न योजयेत् । कुष्ठादीनां मत्वर्थीयोऽकारः, तेन कुष्ठिनामित्याद्यर्थेऽवतिष्ठते ॥ ४३ ॥

तर्हि कथं स्नेह्या इत्याह —

**त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ।**
**स्नेहान् यथास्वमेतेषां योजयेदविकारिणः ॥ ४४ ॥**

त्रिफलेत्यादि । एतेषां कुष्ठादीनां यथास्वमध्यायेषु पथ्यत्वेनाभिहितैस्त्रिफलादिभिर्विपाचितान् साधितानविकारिणः स्नेहान् योजयेत् ॥ ४४ ॥

**क्षीणानां त्वामयैरग्निदेहसन्धुक्षणक्षमान् ॥ ४५ ॥**

क्षीणानामित्यादि । आमयैर्व्याधिभिः क्षीणानां पुनः पुंसाम् अग्निदेहसन्धुक्षणक्षमान् स्नेहान् योजयेत् । अग्निश्च देहश्चाग्निदेहौ तयोः सन्धुक्षणाश्च क्षमाश्च तान् । यथासङ्ख्येनात्र सम्बन्धः । अग्नेः सन्धुक्षणा दीपनाः देहस्य क्षमाः पुष्ट्यावहाश्च तान् । अत्रायं भावः — व्याधिभिः क्षीणानां वह्निरपि क्षीणो भवति । अतस्तेषां न केवलं ये पुष्ट्यावहा वह्निमान्द्यमावहन्ति, अथवा ये वह्निसन्धुक्षणा न पुष्ट्यावहाः ते स्नेहा उपयोक्तुं न युक्ताः । किं तर्हुभयकारिण एव योज्या इति ॥ ४५ ॥

उपसंहरति —

दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ।
दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ४६॥

दीप्तेत्यादि । स्नेहोपसेवी यः पुमानभ्यासेन स्नेहमुपसेवते स दीप्तान्तराग्नित्वादियुक्तो भवतीति प्रदिष्टः । सद्भिरैरागमविद्भिरिति शेषः । प्रत्यग्रधातुः अनवधातुः वातादिभिरनुपहतधातुः । मन्दजरः मन्दवलीपलितः । हृद्याकारस्तु स्नेहोपसेवी अनुरूपस्नेहसेवी वह्निदेहदेशाद्यविरोधेन स्नेहसेवीत्याह ॥ ४६ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
षोडशोऽध्यायः ॥

---

## अथ सप्तदशोऽध्यायः ।

शोधनप्रसङ्गेन स्नेह उपयुज्यते । तेन स्निग्धे देहे शोधनीयानां दोषाणां मार्दवाय स्वेदस्य प्रसङ्गः । अतस्तत्परिज्ञानार्थमध्यायोऽयमारभ्यते ।

अथातः स्वेदविधिमध्यायं व्याख्यास्यामः ।

स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ।

स्वेद इत्यादि । स्वेदनं स्वेदः तस्य विधिर्विधानम् । तत्र द्विविधः स्वेदः । अग्निकृतोऽनग्निकृतश्च । तत्राग्निकृतः स्वेदस्तापादिभेदेन चतुर्विधो भवति । अनग्निकृतोऽनेकविधः 'स्वेदो हितस्त्वनाग्नेय' इत्यादिना वक्ष्यमाणः । चतुर्विध इति सङ्ख्याग्रहणं शास्त्रान्तरोक्तानां स्वेदानां सङ्करप्रस्तरादीनामन्तर्भावाय ।

सङ्करः प्रस्तरो नाली परिषेकोऽवगाहनम् ।
जेन्ताकोऽश्मघनः कर्षूः कुटी भूः कुम्भिरेव च ।
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश ॥

इति चरके । वस्त्रबद्धैरबद्धैर्वा पिण्डैः सङ्करः । स्विन्नानां द्रव्याणामुपरि प्रावृत्य शयनं प्रस्तरः । पिशितादिपक्वैः काञ्जिकादिभिः पूर्णे पिहितमुखे कुम्भादौ नालीं न्यस्य स्वेदो नाल्याख्यः । तेनैव द्रवेण सेकः परिषेकः । तेन द्रवेण पूर्णे कुम्भकटाहादौ स्थितिरवगाहः । कुटीगृहमध्यस्थिते कन्दुके वातहरकाष्ठतप्ते विगतधूमे तत्सम्बन्धिनीं पिण्डिकामालिङ्ग्य स्वेदो जेन्ताकः ॥

*शयानस्य प्रमाणेन घनामश्ममयीं शिलाम् ।
तापयित्वा मारुतघ्नैर्दारुभिः सम्प्रदीपितैः ॥
व्यपोह्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा ।
शिलामथ प्रकुर्वीत कौशेयाविकसंस्तराम् ॥
तस्यां स्वभ्यक्तसर्वाङ्गः स्वपन् स्विद्यति ना सुखम् ।
और्णिकाजिनकौशेयप्रावाराद्यैः स संवृतः ॥
इत्युक्तोऽश्मघनः स्वेदः, कर्षूस्वेदः प्रवक्ष्यते ।
खानयेच्छयनस्याधः कर्षूं स्थानविभागवित् ॥
दीप्तैर्विधूमैरङ्गारैस्तां कर्षूं पूरयेत् ततः ।
तस्या उपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ॥

कुटीगृहेऽङ्गारपात्रसहिते शयनात् (स्वेदः) कुटीस्वेदः । (†प्रशस्तायां निवातायां समायां भुवि भूस्वेदोऽश्मघनस्वेदविधिसदृशः) । वातहरोष्णद्रवपूर्णायां भूखानितायां कुम्भ्यां तप्तायोगुडं पाषाणं वा निक्षिप्य तदूष्मणा स्वेदः कुम्भिसंज्ञकः । करीषादिभिर्दग्धस्य कूपस्योपरि शयनात् स्वेदः कूपसंज्ञकः । अग्निपात्रस्याधस्ताच्छयनात् स्वेदो होलाकः इत्येतेषामन्तर्भावाय सङ्ख्याग्रहणम् । तापात्मकत्वेऽपि सर्वस्वेदानां कस्यचिदेव तापसंज्ञोपपद्यते । सङ्ख्याग्रहणं परमतनिरासार्थमिति पाठ्यकारः ॥

तापादीनेव लक्षयति—

**तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥ १ ॥**

ताप इत्यादि । तापस्वेदोऽग्नितप्तेन वसनेन, तथा फालेनाग्नितप्तेन । फालमयोमयं कर्षणसाधनं (ഒകാൗ്) इति भाषा । तथा हस्ततलेनाप्यग्नितप्तेन । आदिग्रहणाद् दारुपाषाणसिकताकंसताम्रादीनि गृह्यन्ते ॥ १ ॥

**उपनाहो वचाकिण्वशताह्वादेवदारुभिः ।**
**धान्यैः समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥ २ ॥**

---

* अत्र अश्मघनकर्षूस्वेदयोर्विधिर्न दृश्यत इति चरकसंहिताया उद्धृत्य लिखितः ।

† पुरुषायतमात्रां च भूमिमुत्कीर्य खादिरैः ।
काष्ठैर्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः ।
पत्रभङ्गैरवच्छाद्य शयानं स्वेदयेत्ततः ॥
इति सुश्रुतसम्मतो भूस्वेदः ।

उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैः ।
केवले पवने श्लेष्मसंसृष्टे सुरसादिभिः ॥ ३ ॥

पित्तेन पद्मकाद्यैस्तु

**उपनाह** इत्यादि । उपनह्यते चर्मपट्टादिनेति उपनाहः । उष्णपिण्डबन्धन उपनाहः । केवले पवने वचादिभिरुपनाहस्वेदः कार्यः । किण्वं सुराप्रकृतिद्रव्यं (कहुर ७७८) धान्यैरिति सामान्योक्तावपि तिलातसीमाषादीन्युष्णवीर्याणि स्निग्धानि वातशमनानि प्रयोज्यानि, उष्णवीर्याणां स्वेदयोग्यत्वादिति समस्तग्रहणं गन्धैरेव युज्यते । अत एव संग्रहेऽवदत् — सर्वगन्धानिति । समस्तग्रहणं गन्धैरेव युज्यते, 'सङ्ग्रहे सर्वगन्धानिति वचनादि'ति हाटकः । **गन्धैः** गन्धद्रव्यैः कुष्ठागरुतगरसुरसुरदार्वादिभिः, तथा रास्नादिभिः । हृद्याकारस्तु धान्यैर्मुद्गादिभिः समस्तैर्गन्धैश्च कुष्ठादिभिः । समस्तशब्दः काकाक्षिवदुक्त इत्याह । किम्भूतैः पूर्वोक्तैः । **उद्रिक्तलवणैः** लवणाढ्यैः । तथा स्नेहश्च चुक्रं च तक्रं च पयश्च तैः प्लुतैरालोलितैः । **चुक्रम्** अम्लम् । तक्रस्य चुक्रत्वादेव ग्रहणे सिद्धे तक्रग्रहणमतिशयाय । अतिशयेन साल्वलाख्ये स्वेदे तक्रं प्रयोज्यमिति । **श्लेष्मसंसृष्टे पवने सुरसादिभिः**—सुरसयुगादिना गणेन उपनाहः कार्यः । उद्रिक्तलवणैरित्यनुवर्तते । पित्तेन संसृष्टे पवने **पद्मकाद्यैः** पद्मकादिगणेनोपनाहः । पित्तेनेत्यत्र तृतीया अप्राधान्ये "सहयुक्तेऽप्रधाने" इति । तेन वाते बलवति किञ्चिदेव पित्तेन संसृष्टे पद्मकादिभिरुपनाहः कार्य इत्येवं बोध्यम् । नाधिकेन पित्तेन युक्ते पवने, नापि तुल्येन पित्तेनेति । एवं बुक्तं — 'ग्रैष्मः प्रायो मरुत्पित्ते' विधिः कार्य इति । ग्रैष्मो विधिः प्रायेण सर्वः शीतः, तत्र स्वेदो दूरोत्सारित एव । तस्मात् किञ्चित् पित्तेन संसृष्टे पवने पद्मकादिभिरुपनाहः कार्य इति वेद्यम् । हाटकोऽप्याह — 'ग्रैष्मः प्रायो मरुत्पित्ते' इति वचनात् किञ्चित् पित्तेन संसृष्टे पवने पद्मकादिभिरुद्रिक्तलवणैरुपनाहः कार्यः । तुल्येन पित्तेन युक्ते पवने "दाहकृत् तेजसा युक्तः" इति वचनात् पित्तानुरोधेन ग्रैष्मः शीत एव विधिः कार्यः स्वेदो दूरोत्सारित इति । ननूपनाहो वातहरः कथं पित्ते विधीयत इति चेद्, उच्यते । पद्मकादिगणस्य मधुरशीतत्वात् क्षीरादिद्रवाप्लुतस्योपनाहने पित्तशमनम् । पैत्तिके तथाधौ स्वेदसाध्ये द्रवस्वेदः कार्यः ।

पित्तसंसृष्टयोर्वातकफयोः स्वेदनं द्रवैः ।
तापोष्माणौ श्लेष्महरावुपनाहस्तु वातहा ॥

रक्तपित्तयोः केवलयोः स्वेदः कश्चिदपि न भेषजम् । उक्तं च —

"रक्तपित्तविकारेषु स्वेदनं न भिषग्जितम् ।
दोषान्तरयुतेषूक्तं किञ्चित्कालाद्यपेक्षया ॥

इति । एते च त्रय उपनाहाः केवले वायौ तथा श्लेष्मयुक्ते पित्तयुक्ते च क्रमेण योज्याः ॥

इमे च साल्वलाभिधानाः स्वेदा इत्याह —

साल्वलाख्यैः[1] पुनः पुनः ।

साल्वलाख्यैरिति । पुनः पुनरिति । असकृदेतैः स्वेदः कार्य इत्यर्थः । अन्यस्वेदवदनपायित्वात् पुनः पुनरित्युक्तम् । निरपायो हि यथायं साल्वलापरसंज्ञ उपनाहाख्यः स्वेदो, न तथापरे स्वेदा इति । साल्वल इत्याख्या संज्ञा येषां तैः साल्वलाख्यैः । एतेषां धान्यगन्धदशमूलादीनां काञ्जिकादिभिः पिष्टानां कल्कैः स्नेहाम्ललवणोत्कारिकादिभिर्बन्धः साल्वलसंज्ञ इत्यर्थः । उक्तं च धन्वन्तरिणा—

"काकोल्यादिः स वातघ्नः सर्वाम्लद्रव्यसंयुतः ।
सानूपमांसः[2] सुस्विन्नः सर्वस्नेहसमन्वितः ॥
सुखोष्णः स्पष्टलवणः साल्वलः[3] परिकीर्तितः ।"

इति । हाटकस्त्वाह — एवं संस्कृतानि पद्मकादीन्येव साल्वलाभिधानानीति । पाठ्यकारोऽप्याह—पद्मकादिगणेन यः कृत उपनाहस्तस्य साल्वलसंज्ञा इति । चन्द्रटे च प्रोक्तम् —

'काकोल्यादिः स वातघ्नः सर्वाम्लद्रव्यसंयुतः ।
प्रभूतस्नेहलवणः साल्वलेत्यभिधीयते ॥'

इति ।

'उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैः' इति त्रिष्वपि स्नेहेषु योज्यम् ।

---

१. 'साल्वणाख्यैः' मुद्रिताष्टाङ्गहृदयपाठः. २. 'सानूपौदकमांसस्तु सर्व', ३. 'साल्वणः' इति च मुद्रितसर्वाङ्गसुन्दर्याम् ।

बन्धनात्मकश्चायं साल्वणाख्यः स्वेद इति बन्धनोपायभूतांश्चर्मपट्टादीनाह —

स्निग्धोष्णवीर्यैर्मृदुभिः चर्मपट्टैरपूतिभिः ॥ ४ ॥
अलाभे वातजित्पत्रकौशेयाविकशाटकैः ।
रात्रौ बद्धं दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् ॥ ५ ॥

स्निग्धेत्यादि । साल्वलाभिधानैर्बहुशः प्रलिप्य चर्मपट्टैर्बध्नीयात् । चर्मपट्टानामलाभे वातजित्पत्रादिभिः । वातजित्पत्रम् एरण्डादीनां पत्रम् । रात्रावेभिर्बद्धमुपनद्धं गात्रावलम्बं दिवा मुञ्चेत् । दिवाकृतं दिवाबद्धं विदाहपरिहारार्थं रात्रौ मुञ्चेत् । अरुणदत्तोऽप्याह— 'चर्मपट्टैर्बद्धं दिवाकृतं रात्रौ मुञ्चेत् । किम्भूतैः स्निग्धोष्णवीर्यैः तथापूतिभिरदुर्गन्धैः, सपरिकर्मिकत्वात्? । चर्मपट्टानामलाभे अभावे वातजित्पत्रैरेरण्डपत्रादिभिः तथा कौशेयादिभिर्बद्धं रात्रौ, दिवा मुञ्चेत् । दिवा तु बद्धं रात्रौ मोक्तव्यम्' इति । वचनं हि—'अम्ललवणमधुरप्रगाढैः स्निग्धैः सुखोष्णैः साल्वलाभिधानैः बहुशः प्रदिह्योष्णवीर्यापूतिमृदुरोमचर्मभिस्तदहरेव वातहरपत्राविककौशेयैरुपनद्धमङ्गमहःस्थितं विदाहपरिहारार्थं निशि मुञ्चेद् । दिवा वा निशि वा बद्ध'मिति । हाटकस्तु—'वचादिभिः सुरसादिभिश्च पद्मकादिवदुपनाहः कार्य इति केचिद् वदन्ति' इत्याह ॥ ५ ॥

ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभिः ।
पत्रभङ्गेन धान्येन करीषसिकतातुषैः ॥ ६ ॥
अनेकोपायसन्तप्तैः प्रयोज्यो देशकालतः ।

ऊष्मेत्यादि । ऊष्मा बाष्पः । ऊष्माख्यः स्वेद उत्कारिकादिभिः प्रयोज्यः । यवमाषैरण्डबीजातसीकुसुम्भबीजादिभिः पिष्टस्विन्नैर्लप्सिकाकृतियः स्वेदनोपायः सा उत्कारिका । 'वातहरद्रव्यैः पिष्टैः सस्नेहैः क्षीरादिलोलितैः पक्वे घनाकृतिरुत्कारिका, तस्या ऊष्मणा स्वेद' इति हृद्याकारः । उत्कारिका(വാട്ടുകുറുക്കി) लोष्टं मृत्पिण्डः (മംടോട്) कपालं मृत्कपालं कर्परं वा (ഓട്) उपलं (പാറ) पांसुः धूलिः (പൊടി) लोष्टादीनामूष्मस्वेदसाधनत्वं तापस्वेदसाधनत्वं च बोध्यम् । तथा पत्रभङ्गेन पत्राणां भङ्गः समूहः पत्रभङ्गः निकृत्तकिसलयसमूहः (ഒടിഞ്ഞുവൽ) तथा धान्येन । करीषो गवादिशकृच्चूर्णः (ചാണകപ്പൊടി) सिकता वालुका (മണൽ) तुषो धान्यत्वक् (ഉമി) एतैरुत्कारिकादिभिस्तप्तैः स्वेदो विधातव्यः । किंभूतैः, अनेके च ते उपायाश्च तैः सन्तप्ता

उष्णीकृता ये उत्कारिकादयस्तैरनेकोपायसन्तप्तैरभिमतैः । कथं प्रयोज्यः—देश-कालतः । ल्यब्लोप इयं पञ्चमी । तेन देशकालावपेक्ष्य उत्कारिकादिभिः प्रयोज्य इत्यर्थः । उपलक्षणं चेदम् । दोषदूष्यादीनप्यपेक्ष्य स्वेदोऽयं प्रयोज्यः । हाटकोऽप्याह — 'एभिर्देशकालतो देशकालापेक्षया कालस्योपलक्षणत्वाद् दोषादीनप्यपेक्ष्य अनेकोपायसन्तप्तैरभिमतैर्देशकालदोषदूष्याद्यपेक्षया धान्यवान्याम्लादि निमज्जनादुत्थितबाष्पैः स्वेदो योज्यः' इति । लोष्टकपालपाषाणान् अग्निवर्णान् सन्दंशेन गृहीत्वा स्वेद्यदोषाद्यपेक्षयाम्बुनि धान्याम्लशुक्तादौ वा निमज्जयेत् । तैरुद्भूतबाष्पैः स्वेदः । गोशकृतार्द्रेण पिण्डीभूतेनोष्णेन स्वेदः । एवमनेकोपायसन्तप्तत्वम् ॥

अधुना द्रवस्वेदमाह—

शिग्रुवारणकैरण्डकोरण्डसुरसार्जकात् ॥ ७ ॥
शिरीषवासावंशार्कमालतीदीर्घवृन्ततः ।
पत्रभङ्गैर्वचाद्यैश्च मांसैश्चानूपवारिजैः ॥ ८ ॥
दशमूलेन च पृथक् सहितैर्वा यथामलम् ।
स्नेहवद्भिः सुराशुक्तवारिक्षीरादिसाधितैः ॥ ९ ॥
कुम्भीर्गलन्तीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।
वाससाच्छादितं गात्रं स्निग्धं सिञ्चेद्यथासुखम् ॥ १० ॥

शिग्र्वित्यादि । शिग्रुवारणादीनां पत्रसमूहैः । शिग्रुवीरणकैरण्डेति वा पाठः । तथा वचाद्यैर्वचादिगणोक्तैस्तथा मांसैरानूपैस्तथा जलजैः । आनूपग्रहणेनैव वारिजग्रहणे सिद्धे पुनर्वारिजग्रहणं विशेषेण वारिजा ग्राह्या इति सूचयितुम् । तथा दशमूलेन च यथामलं यथादोषं पत्रभङ्गादिभिः पृथग् व्यस्तैः सहितैर्वा द्वाभ्यां त्रिभिर्वा चतुष्पञ्चादिभिर्वा समस्तैर्वा यथामलं स्नेहवद्भिः । अत्रापि यथामलमिति सम्बध्यते । यो यस्य दोषस्य योग्यो घृताद्यन्यतमः स्नेहः, तेन युक्तैस्तथा यथामलं सुरादिसाधितैः कुम्भाद्यन्यतमं पूरयित्वा रुजार्दितं पीडार्तं गात्रमङ्गं वाससाच्छादितं तथा स्निग्धं सद् यथासुखसंस्पर्शं दोषपीडादिवशात् कदाचिदत्युष्णं कदाचिदीषदुष्णं सिञ्चेत् । कुम्भी स्थाली । गलन्ती अनवरतधारया जलं या स्रवति । नाडी वंशादिमयी । कुम्भी (കുടം) गळन्ती (കിണ്ടി) नाळी (കുഴൽ) इति पाठ्यकारः ॥ १० ॥

---

१, वीरण, २. कारंज इति च मुद्रिताष्टाङ्गहृदयपाठः ।

परिषेकं द्रवस्वेदमाख्याय अवगाहं द्रवस्वेदमाह—

तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले ।
अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥ ११ ॥

तैरेवेत्यादि । तैरेव पूर्वोक्तैः स्वेदद्रवैः पूर्णं पूरितम् । कुण्डमवगाह्य रोगी तिष्ठेत् । कीदृशि दोषे । सर्वाङ्गगेऽनिले सर्वशरीरव्यापिनि वायौ । कुण्डग्रहणमुपलक्षणार्थम् । (तेन) कटाहद्रोण्यादेरपि परिग्रहः । अर्शःकृच्छ्रादिरुक्षु चावगाह्यातुरः तिष्ठेत् । आदिशब्देन हस्तपादादिपीडासु च ॥ ११ ॥

सामान्यस्वेदाचरणप्रकारं स्वेदभेदांश्च दर्शयति—

निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ।

निवात इत्यादि । निवाते अपगतवाते देशे स्थित्वा स्वेदमाचरेत् । वातस्य शीतस्पर्शत्वात् तत्सम्बन्धे न स्वेदोत्पत्तिरिति तन्निषेधः । किंभूतः । अन्तः स्नेहपानेन बहिश्चाभ्यङ्गादिना स्निग्धः । जीर्णान्नश्च ह्यस्तनमन्नं जीर्णं यस्य स एवम् ॥

कीदृशं स्वेदमाचरेदित्याह—

व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥ १२ ॥

व्याध्याद्यपेक्षया यथायोग्यं मध्यं वा वरं वोत्कृष्टमवरम् अल्पं वा स्वेदमाचरेत् । कथं जीर्णान्न इति । अजीर्णे स्वेदविधानात् । 'विष्टम्भे स्वेदनम्' इत्यादि । उच्यते । अस्य सामान्यविधित्वात् तस्य च विशेषविधित्वाददोषः । आमाजीर्णाद्याक्रान्तेन तु पुरुषेणाजीर्णेऽन्ने नैव स्वेद आचरणीयः । ननु तत्रामे स्नेहनिषेधात् कथं स्निग्धस्य स्वेदविधिः । अत्रोच्यते । तदपि पूर्वेण समानम् उत्सर्गापवादत्वात् । अस्निग्धस्य सतः किञ्चिदेव तापाख्यः स्वेदोऽजीर्णिनः । उक्तं च—

तापाख्यं स्वेदनं कुर्यादस्निग्धस्य शरीरिणः ।
अजीर्णिनोऽग्निवृद्ध्यर्थं विष्टम्भोपशमाय च ॥

इति ॥ १२ ॥

अस्निग्धस्यापि कश्चित् स्वेदविषयमाह—

कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ।

कफार्त इत्यादि । दोषापेक्षया स्वेदमाहेति हाटकः । यः पुरुषः कफार्तः स रूक्षोऽन्तर्बहिः स्नेहहीनः सन् रूक्षणं स्नेहहीनं स्वेदमाचरेत् । न तु स्नेहयुक्तं स्वेदमाचरेत् । कफानिलसंसर्गे रूक्षस्निग्धं केनचिदंशेन रूक्षं केनचिदंशेन स्निग्धं पर्यायेण वा रूक्षं स्निग्धं स्वेदमाचरेत् । अथवा रूक्षः पुरुषः स्निग्धं स्वेदमाचरेत् वा ॥

स्थानापेक्षयापि स्वेदविशेषमाह—

आमाशयगते वायौ कफे पक्वाशयाश्रिते ॥ १३ ॥
रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ।

आमाशयेत्यादि । आमाशयं गतः पक्वाशयमाश्रितः "द्वितीयाश्रिता—" इति समासः । वायावामाशयगते कफे पक्वाशयाश्रिते यथासङ्ख्येन रूक्षपूर्वं स्नेहपूर्वं च स्वेदमाचरेत् । आमाशयस्थिते वाते आदौ रूक्षः स्वेदः कार्यः । पश्चात् स्निग्धः । तथा पक्वाशयगते कफे आदौ स्निग्धस्वेदः पश्चाद् रूक्ष इत्यर्थः । कुत एवं नियम इत्याह—स्थानानुरोधतः कफवातयोः स्थानयोरनुरोधेन स्थानवशेन । वायुर्यत आमाशयगत आगन्तुस्तच्च स्थानं श्लेष्मणस्तद्वशात् स्थानिनं कफमपेक्ष्यादौ रूक्ष एव स्वेदो योज्यः, पश्चात् स्निग्धः स्वेदः । कफश्च पक्वाशये आगन्तुः, स्थानं तद्वायोः, अतस्तदनुरोधात् स्थानिनं वायुमपेक्ष्य प्रथमं स्निग्धः स्वेदः, पश्चाद् रूक्षः । उक्तं च—'तत्रान्यस्थानसंस्थेषु तदीयाश्च' इति । तथाहि—

'आगन्तुं शमयेद् दोषं स्थानिनं प्रतिकृत्य वा' ॥

इति च । तस्मात् पूर्वं रूक्षेण स्थानिनं कफं प्रतिकृत्य पश्चादागन्तुकस्य वायोः शमनं स्निग्धस्वेदाख्यं योज्यमिति । ननु वायोरामाशये कोपोऽनुपपन्नः । यतो मरुल्लघ्वादिगुणयुक्तः । आमाशयस्तु गुरुमृदुपिच्छिलोऽतः शम एवोपपन्नः इति केचित् । एतदयुक्तम् । बलिनो ह्यन्याश्रयस्यापि कोपो युक्तः ॥

"ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि"

इति वचनात् ॥

पुनरपि स्थानतो विशेषमाह—

अल्पं वंक्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा ॥ १४ ॥

अल्पमित्यादि । वङ्क्षणयोरल्पं स्तोकं स्वेदमाचरेत् । दृशोर्मुष्कयोर्हृदि च स्वल्पमत्यल्पं स्वेदमाचरेत् । न वेति । अथवा दृगादिषु

स्वेदं नाचरेत् । 'महत्त्वे मुष्कयोः' इति विशेषविधिः । अथवा महत्त्वे मुष्कयोरिति विहितः स्वेदोऽत्राल्प इति विशेषः । स्वल्पमतिशयेनाल्पं वा अत्यन्तं स्वेदनिवृत्तिर्वा दृगादिषु । उक्तं च—

"न चक्षुर्हृदयादीनि तेजःस्थानानि स्वेदयेत् ।
मुक्ता(वली)भिः शीताभिः शीतलैर्भाजनैरपि ॥
जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत् ।
व्याधौ स्वेदनसाध्ये वा मृदुना स्वेदयेद् भिषक् ॥"

इति । तेजःस्थानत्वं नाम चक्षुष्याग्नेयत्वमभिप्रेतम् । हृदये तेज इत्यात्मा । तत्स्थानस्वेदात् तयोर्म्लानिरिति । चक्षुषी अपि शीतलेन पिधायैव स्वेदः कार्यः । तदुक्तम्—

"पद्मोत्पलादिभिः सक्तुपिण्ड्या वाच्छाद्य चक्षुषी ।
शीतैर्मुक्तावलीपद्मकुमुदोत्पलभाजनैः ॥
मुहुः करैश्च सजलैः स्विद्यतो हृदयं स्पृशेत्" ।

इति । हृदयस्य महामर्मत्वादाच्छादनविधानं शीतलैः । वस्तिमुष्कयोरपि वस्त्रा-विनाच्छाद्य स्वेदः कार्यः । मर्मत्वादिति वेद्यम् ॥ १४ ॥

स्वेदस्य सम्यग्योगातियोगलक्षणं चिकीर्षुरिदमाह—

**शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ।**
**स्याच्छनैर्मृदितः स्नातः ततः स्नेहविधिं भजेत् ॥ १५ ॥**

शीतेत्यादि । शीतशूलयोः क्षये जाते सति अङ्गानां पाणिपादादीनां च मार्दवे मृदुत्वे जाते सति स्विन्नो नरः स्यात् । अन्यच्च ।

"लाघवं मार्दवं चाङ्गे शैत्यस्तैमित्यनाशनम् ।
कर्मक्षमत्वं श्रद्धान्ने स्यात् स्विन्ने शूलसंक्षयः ॥"

इति । शनैरित्यादि । एवंविधे सम्यग्योगलक्षणेऽधिगतेऽनन्तरं स च स्विन्नः शनैर्मृदितो मन्दं मर्दिताङ्गः उष्णोदकेन स्नातः सन् स्नेहोक्तविधिं "उष्णोदकोपचारी स्यात्" इत्यादिकं भजेद् इति ॥ १५ ॥

स्वेदस्य सम्यग्योगलक्षणमुक्त्वातियोगलक्षणमाह—

**पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनभ्रमाः ।**
**सन्धिपीडाज्वरश्यावरक्तमण्डलदर्शनम् ॥ १६ ॥**
**स्वेदातियोगाच्छर्दिश्च**

पित्तेत्यादि । स्वेदस्यातियोगात् पित्तास्रकोपादयो भवन्ति छर्दिश्च। स्वेदस्यातियोगाद् उष्णत्वात पित्तास्रयोः समानयोः कोपः, सौम्यधातुक्षयात् तृड्ढुत्पत्तिः मूर्छादयश्च । मूर्छा मोहः । सदनशब्दः स्वराङ्गाभ्यां सम्बध्यते। सन्धिपीडा श्लेष्मक्षयात् । ज्वरस्वेदयोः सन्तापात्मकत्वं समानम् । श्यावानां रक्तानां च मण्डलानां च दर्शनमुत्पत्तिः । 'श्यावानि रक्तानि च मण्डलानि भ्रमत आतुरः पश्यती'ति इन्दुः । अस्रं रुधिरम् आस्रं वा ॥

अस्र आस्रश्च पुल्लिङ्गो के(शे ? दे) क्री रुधिरेऽश्रुणि ।

इति यादवः ।

**तत्र स्तम्भनमौषधम् ।**

**विषक्षाराग्न्यतीसारच्छर्दिमोहातुरेषु च ॥ १७ ॥**

तत्रेत्यादि । तत्र स्वेदातियोगे स्वेदातियोगोद्भवे वा व्याधौ। स्तम्भनं वक्ष्यमाणमौषधं भवति । विषादीनामातुरेण सम्बन्धः । विषातुरे च स्तम्भनमौषधमिति प्रसङ्गोक्तिः । आतुरग्रहणमेतद् रोगप्रसक्त्युपलक्षणार्थम्। तथा चामातिसारे स्तम्भनस्यापथ्यत्वं वक्ष्यति । तेनात्रा(मदोषरहितो)ऽतिसार उच्यते। मोहातुरो मूर्च्छाभिभूतः । मेहातुर इति वा पाठः ॥ १७ ॥

स्वेदनस्तम्भनयोः सामान्येन लक्षणमाह—

**स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा ।**

स्वेदनमित्यादि। गुरु यद् द्रव्यं तीक्ष्णमुष्णं च तद् बाहुल्येन स्वेदनं भवति । प्रायोग्रहणाद् व्यभिचारसूचनार्थाद् भयशोकक्रोधादिकं गुरुत्वादिरहितमपि स्वेदनं गृह्यते । अन्यथा अतो वैपरीत्येन लघु मन्दं शीतं च सर्वं स्तम्भनं भवति । अत्रापि प्राय इत्यन्वेति । गुरुणा सलिलादिना सेकेन स्तम्भनं भवति ॥

स्तम्भनं नाम गतिनिरोधकं पूर्वोक्तं सविस्तरं दर्शयति—

**द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम् ॥ १८ ॥**

**स्वेदनं स्तम्भनं श्लक्ष्णं रूक्षसूक्ष्मसरद्रवम् ।**

द्रवेत्यादि । द्रवादिगुणयुक्तं द्रव्यं स्वेदनं भवति । श्लक्ष्णादिगुणयुक्तं च स्तम्भनम् । सररूक्षसूक्ष्मद्रवाणां संस्कारसंयोगादिविशेषेणोभयरूपत्वमिति न दूषणता ॥

अधुना रसतोऽपि स्तम्भनमाह—

**प्रायस्तिक्तं कषायं च मधुरं च समासतः ॥ १९ ॥**

**प्राय** इत्यादि । प्रायः संक्षेपेण तिक्तं कषायं मधुरं च स्तम्भनं भवति । प्रायोग्रहणं क्वचिद् व्यभिचारदर्शनात् । एकेन चकारेण कटुकाम्ललवणानां स्वेदनत्वमुक्तम् ॥ १९ ॥

अनन्तरं प्रासङ्गिकस्य स्तम्भनस्य सम्यग्योगादिलक्षणमाह—

**स्तम्भितः स्याद् बले लब्धे यथोक्तामयसंक्षयात् ।**

**स्तम्भितः स्यादिति** । बले लब्धे जाते सति यथोक्तानां स्तम्भ्यानामामयानां क्षयाच्च स्तम्भितो नरः स्यात् । एवं सम्यग्योगो विज्ञेयः ॥

**स्तम्भत्वक्स्नायुसङ्कोचकम्पहृद्वाग्घनुग्रहैः ॥ २० ॥**

**पादोष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत् ।**

**स्तम्भेत्यादि** । स्तम्भोऽङ्गस्तम्भनम् । त्वक् च स्नायुश्च तयोः सङ्कोचः । हृदयादीनां ग्रहेण सम्बन्धः । तत्र स्तम्भादीनां द्वन्द्वः । स्तम्भादिभिस्तथा पादादिभिः श्यावैरतिस्तम्भितमादिशेत् । एवं स्तम्भनातियोगो विज्ञेयः ॥

स्वेदाविषयान् दर्शयति—

**न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥ २१ ॥**
**स्तम्भनीयक्षतक्षीण*क्षाममद्यविकारिणः ।**
**तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ॥ २२ ॥**
**पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ।**
**भ्रष्टदग्धगुदग्लानिक्रोधशोकभयान्वितान्[1] ॥ २३ ॥**
**क्षुत्तृष्णाकामिलापाण्डुमेहिनः पित्तपीडितान् ।**
**गर्भिणीं पुष्पितां सूतां मृदु वात्ययिके[2] गदे ॥ २४ ॥**

**न स्वेदयेदित्यादि** । अतिस्थूलादीन् न स्वेदयेत् । अतिस्थूलस्य मेदुरत्वात् स्वेदेन मेदोविलयनादत्यन्तं शरीरक्षोभः स्यात् । ततो रोगोत्पत्तिः । रूक्षादीनामतिकार्श्यं भवेत् । यः स्तम्भनीयत्वेनोक्तः तं न स्वेदयेत् । हृद्याकारस्त्वाह—

"रूक्षस्य कार्श्यं स्वेदेन दुर्बलस्य बलक्षयः ।
पित्तकोपो मूर्छितस्य स्तम्भनीये विरुद्धता" ॥ इति

---

१. 'भयार्दितान्' क. पाठः. २. 'चात्ययिके' इति मुद्रिताष्टाङ्गहृदयपाठः.

* क्षामेति स्थाने पित्तेति व्याख्यारीत्या पाठः प्रतीयते ।

**क्षतक्षीण** उरःक्षतवान् । पित्तविकारवान् कामिलादियुक्तः । **मद्यविकारी** मदात्ययादियुक्तः । **तिमिराभयी** च न स्वेदनीयः। तत्रापि पित्तवृद्धिः । अधरकायस्वेदनादपि पित्तादेरूर्ध्वप्राप्त्या दृष्टिरोगवृद्धिरित्यर्थः । उदरी दकोदरी । तस्य स्वेदेन द्रवीभवन्ति दोषाः । दकोदरिणः स्वेदो निषिद्ध इति कथं ज्ञायते इति चेद् । उच्यते । समानतन्त्रात् तत्सिद्धिः । तथाहि —

"पाण्डुर्मेही रक्तपित्ती तृडार्तः
क्षतक्षीणो मूर्छनो जीर्णभक्तः ।
दकोदरी गर्भिणी पानपश्च
न स्वेद्याः स्युर्यश्च मर्त्योऽतिसारी ॥" इति ।

विसर्पकुष्ठशोषेषु धातुक्लेदनं स्यादिति निषेधः । आढ्यरोगो वातशोणितं तद्वान् । दुग्धदधिस्नेहमधुपु पीतेष्वजीर्णेषु न स्वेदः कार्यः । पीतक्षीरस्य स्वेदादुत्क्लेशः तेनापक्तिः । दध्यादीनामुष्णत्वात् तद्विरोधः । पीतदुग्धादीनां यावज्जरणकालं कृतवमनविरेचनस्याबललाभात् स्वेदो न योज्य इतीन्दुः । कृतविरेचनानां शरीरसादभ्रमादयो भवन्ति परिहारदिवसेषु स्वेदात् । भ्रष्टगुदोऽतिसारादिभिः । दग्धगुदः क्षारादिना । ग्लान्यादीनामर्दितेन सम्बन्धः । क्षुद्वतः स्वेदादत्यन्तं शरीरग्लानिः । कामिलापाण्डुमतोः स्वेदेन पित्तातिवृद्ध्या रोगवृद्धिः यस्मादध्येष्यते 'पित्तप्रधाना' इत्यादि । तथा —

**"यः पाण्डुरोगी सेवेत पित्तलं तस्य कामिलाम् ।"**

इत्यादि । मेहिनस्तु स्वेदेन स्वेदवृद्ध्या रोगवृद्धिः । **पित्तपीडिताः** पित्तप्रकृतयः । गर्भिण्याः स्वेदेन गर्भव्यापत् शरीरक्षोभो वा । पुष्पितायाः रक्तातिप्रवृत्तिः स्यात् । सूतायाः कार्श्यम् । मृदु वेति । अत्ययः कृच्छ्रम् । अत्यये भवत्यात्ययिकः । एतान् अतिस्थूलादीन् निषिद्धस्वेदानपि आत्ययिके व्याधौ विषूचिकादौ सति मृदु किञ्चित् स्वेदयेदेव । उक्तं च —

"प्रतिषिद्धे नरे स्वेदः कार्यः संशुद्धिमिच्छता ।
मात्रया प्रतिषिद्धं तु सुस्विन्नं न कदाचन ॥"
इति ॥

**अस्विन्नं स्वेदयेद् धीरः पुनरास्वेदलक्षणात् ।**
**अतिस्विन्नं हिमै रूक्षैर्योजयेदाहिमागमात् ॥**

इति । अन्यत्र च —

स्वेदसाध्ये गदे पुंसि निषिद्धस्वेदने सति ।
अतीक्ष्णकल्पनौ कार्यौ स्वेदौ तापद्रवात्मकौ ॥

इति ॥

ऊष्मा स्वेदश्चाष्टविधस्तीक्ष्णत्वान्मारुतेऽधिके ।
कफोल्बणे च कर्तव्यस्तद्भेदांश्च निबोध मे ॥
पिण्डस्सङ्करनामैकौ नालीसंस्तरनामकौ ।
घनाश्मकुम्भीकूपौ च कुटी जेन्ताकसंज्ञितः ॥
पाषाणलोष्टमृत्पिण्डानयोलोहादिपिण्डकान् ।
कृत्वाग्निवर्णान् सन्दंशेनाम्लेऽम्भसि निमज्जयेत् ॥
तेनोष्मणाम्बरच्छन्नं श्लेष्ममेदःसमुत्थितम् ।
ग्रन्थिमङ्गं च शूलार्तं स्वेदयेदेष पिण्डकः ॥
वस्त्रबद्धैरबद्धैश्च वातहृद्द्रव्यपिण्डकैः ।
कृसरापायसादीनां पिण्डैर्वा सङ्कराह्वयः ॥
पिण्डेन क्रियमाणत्वादेकत्वमनयोर्मतम् ।
वातघ्नद्रव्यसम्पूर्णे घटे वह्न्युपरि स्थिते ॥
घटान्तरं बुध्नदेशे सुषिरेण समन्वितम् ।
सन्धेयं च तयोः सन्धिं मृदाद्यैरुपलेपयेत् ॥
तस्याननं च बध्नीयाद् घनैर्वस्त्रादिभिर्दृढम् ।
द्वारं च कृत्वा तत्पार्श्वे नालीं लोहमयीं न्यसेत् ॥
गजशुण्डाग्रसंस्थानामन्यथा वा यथेच्छति ।
तया विनिर्गतं बाष्पमासीनः शयितोऽपि वा ॥
गृह्णीयादनृजुत्वेन न त्वचं बाधते ह्यसौ ।
नालीस्वेदोऽयमाख्यातः संस्तरोऽतः प्रवक्ष्यते ॥
वातघ्नपत्रभङ्गादीन् मांसादीन् वा यथायथम्
संस्वेद्य पात्रे सञ्छन्नवदने रुद्धमारुते ॥
गृहे तृणकटं कृत्वा तस्योपरि विसारयेत् ।
स्वेदद्रव्यं स्ववच्छन्नं कौशेयादिभिरावृतः ॥

शयीत तस्मिन् संस्तीर्य स्वेदनात् संस्तरः स्मृतः ।
दग्ध्वा नरायामसमां शिलां पवननाशनैः ॥

काष्ठैर्भस्मापोह्यात्र वातघ्नैरवसेचयेत् ।
द्रवैस्तत्र प्रसार्योक्तां शय्यां प्रावृतदेहवान् ॥

शयीत तत्र शयनात् स्वेदोऽश्मघनसंज्ञितः ।
वातघ्नं द्रव्यमुत्क्वाथ्य कुम्भ्यामन्य(त ? त्र)वाथ तत् ॥

समाश्लिष्य च यः स्वेदो स कुम्भीसंज्ञकोऽथ वा ।
निधाय कुम्भीं भूगर्ते तां तदूर्ध्वं प्रकल्पयेत् ॥

आसनं शयनं वात्र स्थितः स्विद्यति ना सुखम् ।
तस्यामयोगुळान् क्षिप्त्वा वह्निवर्णांस्तदूष्मणा ॥

स्वेदश्च कुम्भीसंज्ञः स्यादथ कूपः प्रवक्ष्यते ।
कूपे वातहरद्रव्यपूर्णदग्धे विधूमके ॥

द्रवैः काञ्चिकदध्याद्यैरवसिक्ते तदूर्ध्वतः ।
शय्यां प्रस्तार्य तत्रस्थः सुस्विन्नः स्यात् स कूपजः ॥

कुटीं नात्युच्चविस्तारामच्छिद्रामुपकल्पयेत् ।
तद्भित्तिं वातहृद्द्रव्यैरत्युष्णैः श्लक्ष्णकल्कितैः ॥

घनं प्रलिम्पेदेतस्यामुष्णप्रावरणावृतः ।
तस्यां हसन्तिकाङ्गारवृतायां स्विद्यति स्फुटम् ॥

कुटीस्वेदोऽयमाख्यातो जेन्ताकोऽतः प्रवक्ष्यते ।
वास्तुशास्त्रप्रशस्तायां भूमौ पुष्करिणीतटे ॥

अष्टारत्नीरपक्रम्य कारयेत् कूटमन्दिरम् ।
षोडशारत्निविस्तारं तावन्मात्रसमुच्छ्रयम् ॥

तज्जलाभिमुखद्वारं बहुवातायनावृतम् ।
मृत्स्नारचितसम्भित्तिं मसृणीकृतभूतलम् ।
अरत्न्युन्नतिविस्तारां पिण्डीं तत्र प्रकल्पयेत् ॥

अनुभित्तिसमां श्लक्ष्णदेहामाद्वारवर्तनाम् ।
कूटमन्दिरमध्ये स्यात् सप्तहस्तसमुन्नतम् ॥

चतुष्किष्कुविनिर्मुक्तं प्रत्याशं परिणाहतः।
कन्द्वाकारं बहुच्छिद्रं पूरयेद् वातनाशनैः॥
काष्ठैः सरलगायत्रीसुरदार्वादिसम्भवैः।
आदीप्य विगते धूमे तप्ते तन्मन्दिरे पुनः॥
वातघ्नतैलेनाभ्यक्तः संवृताङ्गश्च वाससा॥
शयीत पिण्ड्यां पृष्ठेन पार्श्वाभ्यामुरसा तथा।
यावत् स्वेदोद्गमः पिण्ड्या स्रावो देहस्य लाघवम्॥
तावन्न मुञ्चेत् तां पिण्डीं सा हि द्वारस्य वेदिनी।
ततो निर्गन्तुमीहेत सुस्विन्नो निर्गतोऽपि च॥
उष्णार्तः सहसा सिञ्चेन्नाक्षिणी शीतवारिणा।
जेन्ताकोऽयं समाख्यातः स्वेदराजो बहुव्यथः॥
हिमानीपिहिते देशे व्याधिते बलवत्तमे।
कफवातोल्बणे व्याधौ योज्यो हेमन्तशीतयोः॥

इति॥ २४॥

अधुना अवश्यस्वेद्यानाह—

**श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु।**
**स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे॥ २५॥**
***महत्त्वे मुष्कयोः खल्यामायामे वातकण्टके।**
**मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते॥ २६॥**
**स्वेदं यथायथं कुर्यात्तदौषधविभागतः।**

श्वासेत्यादि। श्वासादीनां विबन्धान्तानां द्वन्द्वः। तत इनिः। श्वासादिमत्सु यथास्वं स्वेदं कुर्यात्। श्वासकासादयस्तु अवश्यं स्वेद्या एवेत्यर्थः। 'खल्ली तीव्ररुजान्विते'ति वातव्याधौ वक्ष्यते' आयामवातकण्टकौ च। शुक्राघातः शुक्ररोधः। आढ्यमारुत ऊरुस्तम्भः। यथायथं स्वेदं कुर्यात्। कथं, तदौषधविभागतः तेषां श्वासादीनां तेषु वा औषधानि तदौषधानि तेषां विभागो यथास्वमुपयोगः, तेन तदौषधविभागेन। तृतीयार्थे तसिल्। तेनैतदुक्तं भवति — 'यद्वा

* इत उत्तरम् 'अङ्गमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे' इत्यधिकपाठो मुद्रिताष्टाङ्गहृदयसङ्ग्रहे च दृश्यते।

श्वासे स्वेद उपयुज्यते तदा श्वासोक्तैरेवौषधैः स्वेदो योज्यः । एवं कासादिष्वपि ना मौषधविभागेन औषधविशेषेणेति हृद्याक्षरः

॥ २७ ॥

एवमग्निकृतः स्वेद उक्तः । अनग्निकृतस्य स्वेदस्य विषय उच्यते —

स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ॥ २७ ॥

स्वेदो हित इत्यादि । मेदसा कफेन वा पवने आवृते सत्यनाग्नेयोऽग्नि-संबन्धरहितः स्वेदो हितः । अनाग्नेय इति 'अग्नेर्ढक्' इति ढक् । ततो नञ्-समासः ॥

कोऽसावनाग्नेयः स्वेद इत्याह —

निवातं गृहमायासो गुरुप्रावरणं भयम् ।
उपनाहाहवक्रोधभूरिपानक्षुदातपः ॥ २८ ॥
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ।

निवातमित्यादि । निवातं वातरहितं गृहम् । गुरु प्रावरणं कम्बलरल्लकादि । भयं भयानकैः स्वप्नव्याघ्रराजपुरुषदर्शनादिभिः । उपनाहोऽप्यनाग्नेयः, उपनाहस्य द्वैविध्यात् । तत्र 'उपनाहो वचा किण्व' इत्यादिनाग्नेयः । तत्र तापोष्मितसवसनेत्यनुवृत्तेः । अनाग्नेयस्तूपनाहः 'स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभि'-रित्यादिकः । हाटकोऽपि वचाकिण्वेत्यादिरुपनाहोऽग्नितापानुवृत्त इत्याह । आहवः समरः । पानं मद्यपानम् । भूरिपानशब्देन बहुमद्यपानमभि-प्रेतम् । (क्षुदिति) क्षुन्निग्रहः । एतानि दश निवातगृहादीनि अग्निगुणादृते अग्नियोगं विना शक्त्यैव नरं स्वेदयन्ति ॥ २८ ॥

स्वेदः किमर्थमुक्त इत्याह —

स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः ।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ २९ ॥

स्नेहक्लिन्ना इत्यादि । अनेन स्वेदफलं निर्दिशन् उपदिशन् आत्मतन्त्रयुक्तिं दर्शयति — ये दोषा वातादयः कोष्ठस्थाः ते स्नेहक्लिन्नाः शुद्धिभिर्वक्ष्यमाणाभिर्वमनविरेचनलक्षणाभिर्निर्ह्रियन्ते निष्कास्यन्ते । ये धातुषु रसादिषु गताः स्वेभ्यः स्थानेभ्यः, तथा ये स्रोतोलीनाः स्रोतसि

१. 'धार्य' क. मुद्रितपुस्तकपाठश्च । २. 'नीत्वा' क. पाठः ।

गतास्तथा ये च शाखास्थिषु बाह्वां नलकास्थिषु स्थितास्ते सर्वे अनन्तरोक्तप्रकारेण स्नेहेन क्लिन्नाः शुद्धियोग्यत्वमापादिताः सन्तो यथोक्तेन स्वेदेन द्रवीकृत्य शाखादिभ्यः कोष्ठं नीताः प्रापितास्ततः कोष्ठाद् वक्ष्यमाणाभिः शुद्धिभिर्निर्ह्रियन्ते । शाखास्थिग्रहणं तत्स्थेषु दोषेष्वत्यन्तस्वेदयोग्यताप्रतिपत्त्यर्थम् । अथवा धातुगा ये वृद्ध्या कोष्ठाद् धातुषु गताः ; शाखास्था ये धातुष्वेव स्थिताः कोपं याताः । अत्राप्यस्थिग्रहणं प्राधान्यार्थम् । बाह्वादिनलकानां ग्रहणम् एषां दोषाणां कोष्ठानयनम् । वाशब्दः प्रकारवाची । ये च कोष्ठाद् धातुगा वा ये च स्रोतोलीनाः ये च शाखास्थिसंस्था एते दोषाः स्नेहक्लिन्नाः स्वेदेन द्रवीकृत्य कोष्ठं नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते । सम्यक् शब्दस्योभयत्राप्यन्वयः । अन्ये त्वाहुः— ये पूर्वं कोष्ठगा धातुगा वा भूत्वा पश्चात् तेभ्यः स्रोतस्सु लीना ये च शाखास्थिष्वेवात्यन्तमवस्थिता उभयेऽपि ते स्नेहक्लिन्नाः स्वेदैर्द्रवीकृत्य कोष्ठं नीताः सन्तः शुद्धिभिर्निर्ह्रियन्ते । न केवलं कोष्ठात् प्रसृतानामेव पुनः कोष्ठानयनं धातोश्च प्रसृतानां शाखास्थिसंस्थानां चेति मनीषा ॥ २९ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
सप्तदशोऽध्यायः ।

---

## अथाष्टादशोऽध्यायः ।

स्निग्धस्विन्नशरीरस्य शुद्धिः कार्येति सम्प्रति ।
विधानमुच्यते साधु सङ्क्षेपाद् वमिरेकयोः ॥
वक्त्रेण दोषहरणं वमनं तद्विरेचनम् ।
गुदेन दोषक्षयकृदुभयं रेकसंज्ञितम् ॥
अहृतश्लेष्मणो रेकादुरःस्थो गलितः कफः ।
अग्न्याधारमवच्छाद्य वह्निमान्द्याय कल्पते ।
कफान्तता विरेकस्य लक्षणं च कफे हृते ॥
अन्यथा प्रथमाद् वेगात् प्रभृति स्यात् कफस्रुतिः ॥

इति पूर्वं कफहरणार्थमाह—

**अथातो वमनविरेचनविधिमध्यायं व्याख्यास्यामः[1] ।**

---

१. 'व्याख्यास्याम इति ह स्माहुरात्रेयादयो महर्षयः' क. पाठः.

हाटकस्त्वाह— पूर्वेऽध्याये "दोषाः शुद्धिभिर्निर्ह्रियन्ते" इत्युक्तम्। इदानीं तेषां वमनविरेचनवस्त्यादिसंज्ञकानां निर्देशः क्रियते। तत्र च वमनविरेचनयोर्दोषस्थानस्यैकत्वेनैकरूपत्वादेकस्मिन्नध्याये निर्देशः। यच्छरीरपूर्वभागान्मुखेन दोषनिर्हरणं तद् वमनशब्दवाच्यम्। द्रव्ये वमनकार्ये कारणोपचारात्। यदधो भागाद् गुदेन दोषनिर्हरणं तद् विरेचनाख्यम्। वमनं च विरेचनं च तयोर्विधिः। तत्र यथोद्देशस्तथा निर्देश इति पूर्वं वमनविधिमाचष्टे। अथवा विरेकात् पूर्वं वमनस्योपन्यासो हृतकफस्य हि सम्यग् विरेको भवति तथा चोक्तं—"विरिच्यते मन्दकफस्तु सम्यक्" इति॥

**कफे विदध्याद्वमनं संयोगे वा कफोल्बणे।**
**तद्वद्विरेचनं पित्ते**

कफ इत्यादि। श्लेष्मणि केवले वृद्धे तद्विकारेषु च छर्दनं कुर्यात्। संयोगे वा कफोल्बण इति। वाशब्दः समुच्चये। उद्रिक्तकफे संसर्गे च वातकफे पित्तकफे वा वमनं कुर्यात्। तद्वदित्यादि। यथा कफे कफाधिके वा संयोगे वमनं कुर्यात् तथैव पित्ते केवले पित्तोल्बणे वा संयोगे विरेचनं कुर्यादिति तद्वच्छब्दस्यार्थः॥

केभ्यो वमनं देयमित्याह—

**विशेषेण तु वामयेत्॥ १॥**

**नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः।**
**कुष्ठमेहापचीग्रन्थिश्लीपदोन्मादकासिनः॥ २॥**
**श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः।**

विशेषेण त्वित्यादि। विशेषेण पुनर्नवज्वरातिसारादीन् वामयेत्। नवज्वरादयः षोडश विशेषेण वमनयोग्याः। अन्ये चारोचकविषूचिकाजीर्णादयो बहवो वाम्याः। नवज्वरादीनां द्वन्द्व इनिश्च। स्तन्यदोषा बालामयोक्ताः॥

**अवाम्या[1] गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः॥ ३॥**
**बालवृद्धकृशस्थूलहृद्रोगि[2]क्षतदुर्बलाः।**
**प्रसक्तवमथुप्लीहतिमिरकृमिकोष्ठिनः॥ ४॥**
**ऊर्ध्वप्रवृत्तवाय्वस्रदत्तवास्तिहतस्वराः।**
**मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः॥ ५॥**
**उदावर्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः।**

---

१. 'अवम्या' इति मुद्रितपुस्तकपाठः, २. 'हृद्रोग' क. पाठः.

**अवाम्या** इत्यादि। गर्भिण्यादय अवाम्याः। वाम्यावाम्यत्व युक्तिः सङ्ग्रहोक्ता द्रष्टव्या। "विहितप्रतिषिद्धेषु प्रवर्तननिवर्तने कार्ये।" तत्रोपपत्तीनां निरूपणम्। ऐहिकार्थविधानस्य निषेधस्य युक्तिहीनचिन्तने न क्षतिः काचिदिति संग्रहविस्तरः। अर्शांसि विद्यन्ते यस्य सोऽर्शसः। "अर्श आदिभ्योऽच्" । अरुणदत्तस्त्वाह—'तत्र गर्भिण्या वमनाद् गर्भव्यापद् आमगर्भभ्रंशाश्च दारुणरोगस्याघोरक्तपित्तादेरुद्भूतिः। रूक्षस्य वायुर्वाग्घनुहस्तादीनां परायत्तीकरणं अङ्गग्रहणं च कुर्यात्। क्षुधितस्य वायुना क्षपितशरीरत्वात् बलक्षयः स्यात्। बालादीनामौषधबलाक्षमत्वाद् बलोपरोधः स्यात्। हृद्रोगिप्रभृतीनां हृदयोपरोधः। प्रसक्तच्छर्दीनामुदानो वायुरुत्क्षिप्य प्राणानपि हिंस्यात्। एवमन्येष्वपि यथायोगरोगोद्भवश्चिन्त्यः' इति ॥

**ऋते विषगराजीर्णविरुद्धाभ्यवहारतः ॥ ६ ॥**

**ऋत** इत्यादि। गर्भिण्यादीनामपि निषिद्धवमनानां विषाद्यभ्यवहारे सति वमनं विधेयमेव। शीघ्रतरविकारित्वादेषां विषादीनाम्। विषाद्यभ्यवहारमन्तरेणैतेऽवाम्याः ॥ ६ ॥

**प्रसक्तवमथोः पूर्वे प्रायेणामज्वरोऽपि च।**
**धूमान्तैः कर्मभिर्वर्ज्याः सर्वैरेव त्वजीर्णिनः ॥ ७ ॥**

**प्रसक्तवमथोरि**ति प्रसङ्गोक्तिः। प्रसक्तवमथुः प्रततप्रवृत्तछर्दिः तस्य **पूर्वे** पुरः स्थिता ये गर्भिण्यादयो दुर्बलान्तास्तथा आमज्वरश्च ते **धूमान्तैः कर्मभिः** वमनविरेचनास्थापनानुवासननस्यधूमैः प्रायेण वर्ज्यास्त्याज्याः न केवलं वमनेनेति। धूमान्तग्रहणं गण्डूषादिकर्मणः परिहारार्थम्। प्रायोग्रहणम् अष्टममासाया गर्भिण्या निरूहावर्ज्यत्वसूचनाय। तथा सद्योभुक्तज्वरितस्य सतो वमनानुज्ञानार्थम्। अथवा प्रायोग्रहणं स्थिरगर्भाया गर्भिण्या निरूहानुज्ञानाय। अपिचशब्दो विशेषविधिव्यञ्जकः कस्याञ्चिदामज्वरावस्थायां वमनं शस्यते इति। वक्ष्यति च 'तत्रोत्क्लिष्टे समुत्क्लिष्टे' इति। **सर्वैरि**त्यादि। तुशब्दो विशेषे। **अजीर्णिनः सर्वैरेव** वमनादिभिर्गण्डूषादिभिश्च स्वेदकबलाभ्यङ्गादिभिश्च वर्ज्याः। आमदोषभयात् तैर्वमनादयो न सेव्या इत्यर्थः। तथा चोक्तम्—"आमसन्नोऽनलो नालं वक्तुं दोषौषधाशनम्" इति। अत्रापि प्रायोग्रहणमनुवर्तते। सद्योऽजीर्णिनो हि वमनमनुज्ञातमेव। वचनं हि—"अजीर्णी तु सर्वैरेव वमनवर्ज्यैः परिह-

तेव्यः आमदोषभयात् । नवज्वरश्च दोषस्तम्भभयादि"ति । हृद्याकारस्तु वमनस्याजीर्णे विधानाद् वमनवर्जितैः सर्वैर्वर्ज्या इति सिध्यतीति वदन् प्रायोग्रहणं नानुवर्तयति ॥ ७ ॥

इदानीं विरेचनसाध्याः कथ्यन्ते—

विरेकसाध्या गुल्मार्शोविस्फोटव्यङ्गकामलाः ।
जीर्णज्वरोदरगरच्छर्दिप्लीहहलीमकाः ॥ ८ ॥

विद्रधिस्तिमिरं काचः स्यन्दः पक्वाशयव्यथा ।
योनिशुक्राशया रोगाः कोष्ठगाः कृमयो व्रणाः ॥ ९ ॥

वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ।
वाम्याश्च कुष्ठमेहाद्याः

विरेकेत्यादि । गुल्मादयो विरेकसाध्याः विरेकेण साध्या उपक्रम्याः । पक्वाशये व्यथा पक्वाशयव्यथा । वाम्याश्चेति । चः समुच्चये । ये च कुष्ठमेहाद्याः वाम्यप्रकरणे वमनार्हा उक्ताः ते च विरेच्याः । बम्याश्चेति वा पाठः ॥

न तु रेच्यो नवज्वरी ॥ १० ॥

अल्पाग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः ।
सशल्यास्थापितक्रूरकोष्ठातिस्निग्धशोषिणः ॥ ११ ॥

नत्वित्यादि । तुरवधारणे । नवज्वरी न तु रेच्यः नैव विरेच्यः । तस्य हि विरेचनमपक्वान् दोषान् निर्हरद् वातकोपायैव स्यात् । यथा किलावस्थावशाद्यक्ष्मादीनां मृदुविरेच्यत्वं तथा न नवज्वरस्येति च तुशब्दार्थः । तथा पठिष्यति ।

बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।
ऊर्ध्वाधो यक्ष्मिणः कुर्याद् ... ... ॥

इति । तथातीसारस्याप्यपेक्ष्यते —

'अपि चाध्मानगुरुताशूलस्तैमित्यकारिणि प्राणदा प्राणदे'त्यादिना । एवं नवज्वरस्य स्वल्पविरेच्यत्वं न कदाचिदपीति । हृद्याकारोऽप्याह—तुरवधारणे । अतिसारादीनां त्रयाणां कदाचिद् विरेचनमीषदनुज्ञायते न त्वामज्वरस्येति ।

१. 'वम्याश्च' मुद्रितपुस्तकपाठः.

अल्पाग्न्यादयः शोष्यन्ता न विरेच्याः । तत्राल्पाग्निरल्पबलत्वाद् भेषजबलं न सहते । अधोरक्तपित्तातिसारिणावतिप्रवृत्त्या हन्यात् । क्षतपायुः क्षतगुदः तस्य प्राणोपरोधकरीं रुजां जनयेत् । सशल्यस्य क्षते वायुराश्रितो जीवितं हन्यात् । आस्थापितस्य भेषजवेगासहनाद् बलोपरोधः स्यात् । क्रूरकोष्ठस्यौषधोद्धता दोषा अप्रवर्तमाना हृदयशूलपर्वभेददाहमूर्च्छादीन् जनयेयुः । अतिस्निग्धस्य चातियोगभयं स्यात् । शोषिणः क्षीणधातुतया मलबलत्वान्मलक्षये देहनाशः स्यादिति निषेधः ॥ ११ ॥

इदानीं वमनविरेचनयोः प्रयोगक्रमः प्रदर्श्यते—

अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ।
श्वोवाम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः ॥ १२ ॥

निशां सुप्तं सुजीर्णान्नं पूर्वाह्णे कृतमङ्गलम् ।
निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ १३ ॥

वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः ।
आकण्ठं पाययेन्मद्यं क्षीरमिक्षुरसं रसम् ॥ १४ ॥
यथाविकारविहितां मधुसैन्धवसंयुताम् ।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ १५ ॥
ब्रह्मदक्षाश्विरुद्रेन्द्र भूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामाः भूतसङ्घाश्च पान्तु वः ॥ १६ ॥
रसायनमिवर्षीणाममराणामिवामृतम् ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १७ ॥

ओं नमो भगवते भैषज्यगुरवे वैडूर्यप्रभराजाय तथागतायाऽर्हते सम्यक् सम्बुद्धाय । तद्यथा—ओँ भैषज्ये भैषज्ये महाभैषज्ये समुद्गते स्वाहा ।

प्राङ्मुखं पाययेत् पीते मुहूर्तमनुपालयेत् ।
तन्मना जातहृल्लासप्रसेकः छर्दयेत्ततः ॥ १८ ॥

१. 'श्वो वम्यमि'ति च. पाठः. २. 'पायितान्' मुद्रितपुस्तकपाठः. ३. 'भूतग्रामाश्च' इति च. पाठः.

अङ्गुलिभ्यामनायस्तो नालेन मृदुनाथवा ।
गलताल्वरुजन्वेगानप्रवृत्तान् प्रवर्तयन् ॥ १९ ॥
प्रवर्तयन्प्रवृत्तांश्च जानुतुल्यासने स्थितः ।
उभे पार्श्वे ललाटं च वमतश्चास्य धारयेत् ॥ २० ॥

अथेत्यादि । अथेति मङ्गले । प्रत्यवायबाहुल्यान्मङ्गलवचनम् । पञ्चकर्मणां व्यापद्बहुलत्वादातिमङ्गलपरेण पुरुषेण भवितव्यमिति ज्ञापनार्थोऽथशब्द इति हृद्याकारः । वाम्यावाम्यज्ञानादनन्तरमित्यन्ये । साधारणे श्रावणादौ काले यथाविधि स्नेहस्वेदाध्यायोक्तक्रमेण स्निग्धस्विन्नं पुरुषं भैषज्यमात्रां प्राङ्मुखं पाययेदिति वक्ष्यमाणेन सम्बन्धः । 'प्राङ्मुखमासीनमातुरमौषधमात्रां पाययेत्' इति योग इति हृद्याकारः । साधारण इति स्वस्थवृत्तोपलक्षणम् । आतुरवृत्ते तु व्याध्यादिवशाद् वमनमाचरेत् तत्कालाद्यनुरूपेणैव विधानेन । किं भूतमातुरं पाययेदित्याह—श्वो वाम्यं प्रातर्वमनार्हं मत्स्यादिभिरुत्क्लिष्टकफम् । उत्क्लिष्ट इत्यन्तर्भावितण्यर्थत्वाद् उत्क्लेशितः स्थानाच्चलितः कफो यस्य सः उत्क्लिष्टकफः । श्वोवाम्यमित्यनेन वमनात् पूर्वमेकमहः श्लेष्मोत्क्लेशकान्नप्रयोगं दर्शयति । वम्यमिति पाठे 'अर्हे कृत्यतृचश्च' इति अर्हार्थे 'पोरदुपधादि'ति यत् । तिलादिभिरित्यादिशब्देन ग्राम्यानूपौदकमांसरसघृतफलशाकादयो गृह्यन्ते । तथा निशां सुप्तं सकलां रात्रिं सुप्तमित्यर्थः । 'कालाध्वनो'रिति द्वितीया । अत एव यथोचितः सकलनिशास्वापो लक्ष्यते । तथा सुष्ठु जीर्णमन्नं यस्य तम् । कदा पाययेत्—पूर्वाह्णे । किंभूतम् । कृतं मङ्गलं यस्य तम् । मङ्गलमित्युपलक्षणम् । कृतदेवद्विजगुरुवृद्धार्चनमपीति द्रष्टव्यम् । कृतहोमबलिप्रायश्चित्तस्वस्तिवाचनमिति च । हृद्याकारस्तु कृतमङ्गलमिति अथशब्दद्योतितमेवावश्यकर्तव्यमिति ज्ञापनार्थमुक्तमित्याह । तथा निरन्नमकृताहारं तस्मिन् दिवसेऽन्नमनुपसेव्यमित्यर्थः । आतुरवशात् किञ्चित् स्निग्धम् । कथमित्याह—पेयया पीतघृतम् । हृद्याकारोऽप्याह—ईषत् स्निग्धमिति—यद्यसम्यक् स्निग्धः तं पेयया मण्डेन सह पीतघृतं पाययेदिति संबन्ध इति । पाठ्यकारस्तु—ईषत् स्निग्धं वा पेयया पीतसर्पिषमित्यनेन सुरादिविशेषमुद्दिश्य सर्पिषा सह पेयां पीत्वा श्लेष्माणमुत्क्लेशयेदित्यर्थ इत्याह । निरन्नमिति क्रियाविशेषणं वा । सिक्थरहितं यथा भवति तथा पेयया पीतसर्पिषमित्यर्थः। तथासौ वम्यो वृद्धो बालो वा दुर्बलो वा क्लीनो वा भीरुर्वा भवति तदा रोग-

नुरोधादाकण्ठमातिमात्रं मद्यादिकानामन्यतमं पाययेत्। अनन्तरं भैषज्यमात्रां पाययेत्। आकण्ठग्रहणं बहुत्वोपलक्षणार्थम्। मद्यमित्युपलक्षणम्। यूषतक्रतुषोदकयवागूमण्डान् पायितानित्यर्थः। सङ्ग्रहेऽप्युक्तं—'भीरुकृशबालसुकुमारान् वा दोषानुरोधेनाकण्ठं पीतयूषेक्षुरसमांसमद्यादीनामन्यतमम्' इति। किंभूतां मात्रां, यथाविकारं विहितां रोगानुसारेण साधिताम्। तथा मधुसैन्धवाभ्यां संयुताम्। किं कृत्वा? मृद्वादिभेदेन कोष्ठं विभज्य विचार्य मृदुमध्यक्रूरलक्षणं कोष्ठं विचार्य। श्लेष्माधिक्येन मृदुत्वं, श्लेष्ममध्यत्वेन मध्यत्वं, कफहीनत्वेन क्रूरत्वमिति बोध्यम्। "श्लेष्मोत्तरश्छर्दयते ह्यदुःखम्" इति वचनात्। किंभूताम्। मन्त्रैरभिमन्त्रिताम्। तानेव मन्त्रानाह—ब्रह्मेत्यादिना। ब्रह्मेत्यादि वेदवादिमन्त्रः। ओं नम इत्यादि सौगतः। संग्रहे चोक्तं— इत्येवमभिमन्त्र्योदङ्मुखः प्राङ्मुखमातुरं पाययेत् इति। स्वस्थवृत्तपक्षे आतुरग्रहणं तत्कालावस्थया व्याख्येयमितीन्दुः। हृद्याकारोऽपि—प्राङ्मुखमासीनमातुरमौषधमात्रां पाययेदित्याह॥

पीते सत्यौषधे आतुरस्तन्मना वमनगतचित्तो मुहूर्तं नाडिकाद्वयमनुपालयेत् प्रतीक्षेत। न किञ्चित् कुर्वाणो मुहूर्तमासीत। पीतमिति वा पाठः। भैषज्यमात्रां पीतं सन्तमातुरं मुहूर्तं तन्मना अनुपालयेदिति। ततोऽनन्तरमातुरो जातहृल्लासप्रसेकः सन् छर्दयेत्। हृल्लासो हृदुपरोधः। प्रसेको निष्ठीवनम्। कथं वमेत्। अङ्गुलीभ्यामथवा उत्पलकुमुदैरण्डजेन मृदुना नालेन वमेत्। कीदृक्। अनायस्तः अनायासेनेत्यर्थः। कथम्। गलश्च तालु च तदरुजन् अपीडयन्। तथा अप्रवृत्तान् वेगान् न प्रवर्त्तयन् स्वयं प्रवृत्तांश्च वेगानुन्मुखीभूतान् प्रवर्तयन्। जानुप्रमाणे पीठे उपविष्टः। अस्य चातुरस्य छर्दयतो द्वे पार्श्वे ललाटं च धारयेत्। परिचारक इति शेषः।

**प्रपीडयेत्तथा नाभिं पृष्ठं च प्रतिलोमतः।**

नाभिं च प्रपीडयेत् पृष्ठं च प्रतिलोमेन पीडयेत्॥

**कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति॥ २१॥**

**वमेत्स्निग्धाम्ल[1]लवणैः संसृष्टे मरुता कफे।**

---

1. 'स्निग्धोष्ण' इति च. पाठः.

कफ इत्यादि । इत्युक्तप्रकारेण कफे तीक्ष्णोष्णकटुकैर्द्रव्यैर्वमेत् । पित्ते पित्तयुक्ते श्लेष्मणि स्वादुहिमैः स्वादुशीतैर्वमेत् । वायुना युक्ते कफे स्निग्धाम्ललवणैर्वमेत् ॥

किमवधि छर्दयेदित्याह---

**पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥ २२ ॥**

पित्तस्येत्यादि । व्याध्यादिबलापेक्षया यावत् पित्तदर्शनं स्यात् श्लेष्मणो वा छेदोऽन्तः स्यात् तावद् वमेत् ॥२२॥

**हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ।**
**वमेत्पुनः पुनः**

हीनवेग इति । हीनवेगः स्तोकप्रवृत्तदोषो नरः। कणादिभिरसकृद् वमेत् ॥

**तत्र वेगानामप्रवर्तनम् ॥ २३ ॥**

**प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ।**
**अयोगस्तेन निष्ठीवकण्डूकोठज्वरादयः ॥ २४ ॥**
**निर्विबन्धं प्रवर्तन्ते कफपित्तानिलाः क्रमात् ।**
**सम्यग्योगे**

तत्रेत्यादि । तेषु सम्यग्योगायोगातियोगेषु मध्ये यद् वेगानामप्रवर्तनम् असावयोगः। अयोगलक्षणमित्यर्थः । सविबन्धा च या प्रवृत्तिर्वेगानां स्वल्पं स्वल्पमागमनं सोऽप्ययोगः । अथवा केवलस्य दोषादिरहितस्यौषधस्य प्रवृत्तिः सोऽप्ययोगः । तेन वमनायोगेन निष्ठीवादयो जायन्ते । स्युरिति वा ॥

सम्यग्योगे तु कफपित्तानिला निर्विबन्धं निःसङ्गं प्रवर्तन्ते। आगमो हि —

'क्रमात् कफः पित्तमथानिलश्च
यस्यैति सम्यक् स तु वान्त इष्टः' ।

इति ॥

**अतियोगे तु फेनचन्द्रकरक्तवत् ॥ २५ ॥**
**वमितं क्षामता दाहः कण्ठशोषस्तमो भ्रमः ।**
**घोरा वाय्वामया मृत्युः जीवशोणितनिर्गमात् ॥ २६ ॥**

अतियोगे तु पुनः फेनचन्द्रकरक्तवद् वमितं वस्तु भवति। फेनश्च चन्द्रकं च रक्तं च तानि विद्यन्ते यस्य वमितस्य तदेवम्। तथा क्षामतादयश्च भवन्ति। तमस्तिमिरदर्शनम्। दारुणाश्च वातरोगाः तथा जीवाख्यस्य रक्तस्य निर्गमादतिप्रवृत्त्या मृत्युर्वा भवति॥ २६॥

**सम्यग्योगेन वमितं क्षणमाश्वास्य पाययेत्।**
**धूमत्रयस्यान्यतमं स्नेहाचारमथादिशेत्॥ २७॥**

**सम्यग्योगेन** वमिते सति मुहूर्तमाश्वास्य च शीतवातादिना धूमत्रयस्यातुराद्यपेक्षया मृदुमध्यतीक्ष्णाख्यस्य धूमस्यान्यतममेकं शिरश्शुद्ध्यर्थं पाययेद् वैद्यः। चक्षुषी चाञ्जयेन्मधुना। यथाह—

'सम्यग्योगेन वमितो हृदयक्षोभशान्तये।
अक्षमात्रं पिबेत् कल्कं द्राक्षाया मधुकस्य वा॥
शिरःशुद्ध्यै पिबेद् धूमं चक्षुषी मधुनाञ्जयेत्।
वमनाच्चलितो दोषस्तथा समुपशाम्यति॥'

इति। अथानन्तरं स्नेहाचारम् 'उष्णोदकोपचारी स्यादि'त्यादिकमादिशेच्च॥ २७॥

**ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखाम्बुना।**
**भुञ्जानो रक्तशाल्यन्नं भजेत्पेयादिकं क्रमम्॥ २८॥**

तत इत्यादि। तत ऊर्ध्वमग्निबलापेक्षया तस्मिन्नेवाहनि सायमपराह्णे भोजयेत्। प्रभाते वापरस्मिन् वाहनि पूर्वाह्णे। यद्यातुरस्याग्निर्बलवान् ततः सायाह्ने भोजयेत् यदि वा स्वल्पबलस्ततो द्वितीयेऽह्नीत्यर्थः। क्षुद्वान् बुभुक्षितः प्रशस्तबुभुक्षावानित्यर्थः। प्रशंसायां मतुबत्र स्मर्यते—

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः'॥

इति। सुखाम्बुना स्नातः उष्णोदकेन परिषिक्तगात्रः रक्तशाल्यन्नं पूर्वं भुञ्जानः रक्तशालितण्डुलसंबन्ध्यन्नं पूर्वं भुञ्जानः पेयादिकं क्रमं भजेदिति योगः। पेया आदिः प्रथमं यस्य क्रमस्य स पेयादिकः। क्रमः परिपाटिः। आनुपूर्वीत्यर्थान्तरम्। क्रमो नाम न स्वतन्त्रः किन्तु पदार्थान्तरसापेक्षः। अत्र तु पेयादिकमपेक्षते। केचिच्च रक्तशालिग्रहणमुपलक्षणम्। अन्यदपि लघुशालिव्रीह्यादिकं भोज्यमेवे-

त्याहुः । केचित् तु—

'ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखाम्बुना ।
पुराणरक्तशालीनामस्नेहलवणोषणम् ।
भुञ्जानो रक्तशाल्यन्नं भजेत् पेयादिकं क्रमम् ।'

इति पठन्ति । अस्य व्याख्या—तत ऊर्ध्वमग्निबलापेक्षया तस्मिन्नेवाहनि सायमपराह्णे द्वितीये वा दिवसे प्रभाते पूर्वाह्णे क्षुद्वान् प्रशस्तबुभुक्षः सुखाम्बुना स्नातः पेयादिकं क्रमं भजेदिति योगः । किमुपादानं पेयादिकमित्यत्राह—पुराणरक्तशालीनां पुराणा वर्षं स्थिताः वर्षमुषिताः । तेषां रक्तशालीनां तण्डुलैः कृतं पेयादिमस्नेहलवणोषणं स्नेहादिरहितम् । कीदृशो रक्तशाल्यन्नं भुञ्जानः रक्तशालितण्डुलान्नं नित्यमभ्यवहरन् रक्तशालीनां पेयादिकं क्रमं भजेदिति योगः । भुञ्जान इत्यत्र भुजिष्यन्निति च संबन्धः शानचोऽर्थः । सात्म्यप्रदर्शनार्थमिति केचित् । तेनायमर्थः—रक्तशालीनामन्नं भुञ्जानो रक्तशालीनां पेयादिकं क्रमं भजेत् कलमषष्टिकादीनामन्नं भुञ्जानस्तेषामिति । उक्तवांश्च—'ततोऽग्निबलं क्षुधां चावेक्ष्य सायाह्नेऽपरे वाह्नि सुखोदकपरिषिक्तः पुराणानां रक्तशालितण्डुलानां सुसिद्धासिक्थमन्नमस्नेहलवणकटुकमल्पस्नेहलवणकटुकं वा द्रवप्रायमुष्णोदकानुपानं प्रातः प्रातरुपयुञ्जानो विधिमिममपेक्षेत' इति । विलेप्याः प्रभृति उष्णोदकानुपानमन्यत्रापि विहितम् । अग्निवृद्ध्यर्थमन्नजीर्त्यर्थं च —

'उष्णं वारि पिबेदन्ने विलेप्यादौ विशुद्धिषु ।
कफोच्छेदाय वृद्ध्यर्थमग्नेरन्नस्य पक्तये ॥'

इति ॥ २८ ॥

अधुना तमेव पेयादिकं क्रमं वमनविरेचनसाधारणमाह—

**पेयां विलेपीमकृतं कृतं च**
**यूषं रसं त्रीनुभयं तथैकम् ।**
**क्रमेण सेवेत नरोऽन्नकालान्**
**प्रधानमध्यावरशुद्धिशुद्धः ॥ २९ ॥**

पेयामित्यादि । प्रधाना च मध्या चावरा च प्रधानमध्यावराः । प्रधानमध्यावराश्च ताः शुद्धयश्च ताभिः शुद्धः प्रधानमध्यावरशुद्धिशुद्धः । प्रधानशुद्धिशुद्धो मध्यशुद्धिशुद्धो अवरशुद्धिशुद्धश्च । नरोऽनन्तरं क्रमेण यथासंख्यं त्रीनन्नकालान् उभयं चान्नकालमेकं चान्नकालं पेयादीन् पञ्च

क्रमेण सेवेत। प्रधानशुद्धिशुद्धस्त्रीनन्नकालान्, मध्यशुद्धिशुद्धो द्वावन्नकालौ, अवरशुद्धिशुद्ध एकमन्नकालं पेयां भजेदिति क्रमशब्दार्थः। विलेप्यादिष्वप्येवं योज्यम्। तेनैतदुक्तं भवति। भोजनं हि प्रत्यहमुभयकालं प्रतिष्ठितम्। तत्र यः प्रधानरूपया वक्ष्यमाणलक्षणया शुद्ध्या शुद्धः स प्रथमे दिवसे सायमेकमन्नकालं पेयां सेवेत उपयुञ्जीत। द्वितीये दिवसे द्वावन्नकालौ पेयामुपयुञ्जीत। एवं त्रीनन्नकालान् पेयोपयुक्ता भवति। ततस्तृतीये दिवसे द्वावन्नकालौ चतुर्थे दिवसे प्रातरेकमन्नकालं च विलेपीं सेवेत। एवं त्रीनन्नकालान् विलेप्युपयुक्ता भवति। पेया यवागूः। सा तु समण्डा प्रविरलसिक्था च। विलेपी प्रक्षीणमण्डा संहतसिक्था च। तथा चतुर्थे दिवसे सायमेकमन्नकालम् अकृतयूषं सेवेत। पञ्चमे द्वावन्न-कालावकृतयूषं सेवेत। एवमकृतो यूषस्त्रीनन्नकालानुपयुक्तो भवति। षष्ठे दिवसे द्वावन्नकालौ सप्तमे दिवसे प्रातरेकमन्नकालं च कृतं यूषं सेवेत। एवं कृतयूष-स्त्रीनन्नकालानुपयुक्तो भवति। सप्तमे सायमेकमन्नकालम् अष्टमे द्वावन्नकालौ च मांसरसं सेवेत। एवं मांसरसस्त्रीनन्नकालान् सेवितो भवति। इति प्रधानशुद्धि-शुद्धस्य पेयादीनां क्रमेण प्रत्येकमन्नकालत्रयसेवने क्रमः। एवं मध्यशुद्धिविशुद्धेन पेयादयः क्रमेण प्रत्येकमन्नकालद्वयमासेव्याः। तथा स्वल्पशुद्धिशुद्धेन पेयादयः क्रमेणैकमन्नकालमासेव्याः। ह्याकारोऽप्याह—प्रधानशुद्ध्या आढकदोषनिर्हरण-लक्षणया मध्यशुद्ध्या अर्धाढकहरणलक्षणया अवरशुद्ध्या प्रस्थलक्षणया शुद्धो य-थासंख्यं त्रीन् द्वौ एकमन्नकालान् सेवेत पेयादीन्। तत्र प्रधानशुद्धौ सप्तभिर्दिनैः प्रकृतिभोजनप्राप्तिः। तथा हि—त्रिष्वन्नकालेषु पेया त्रिष्वन्नकालेषु विलेपी त्रिष्वसंस्कृतो यूषस्त्रिषु संस्कृतश्च त्रिषु रस इति पञ्चदशान्नकालाः सप्तभिर्दिनैः प्राप्यन्ते। अष्टमे च दिने प्रकृतिभोजनम्। मध्यमे च शोधने दशभिरन्नकालैः षष्ठे दिने प्रकृतिभोजनप्राप्तिः। अधमे पञ्चभिरन्नकालैः तृतीयेऽह्नि प्रकृतिभोजन-प्राप्तिरिति। स्नेहलवणादियोगः कृतत्वं तद्राहित्यमकृतत्वम्। उक्तं च—

'साम्लैः सस्नेहलवणैः शुण्ठीमरिचहिङ्गुभिः।
संयोगः कृतता ज्ञेया तद्राहित्यादसंस्क्रिया॥

घृतेन डाडिमाम्लेन सैन्धवेन च संस्क्रिया।
शुद्धिरुक्ता रसादीनां न तीक्ष्णैस्तत्र संस्क्रिया॥'

इति । अथवा एवं योजना— पेयां विलेपीमकृतं कृतं च यूषम् अकृतं कृतं च रसं प्रधानमध्यावरशुद्धिशुद्धश्च नरो यथासंख्येन त्रीनन्नकालान् उभयमन्नकालमेकमन्नकालं पेयादींश्चतुरः क्रमेण सेवेत । एतदुक्तं भवति । प्रथमे दिवसे सायमेकमन्नकालं द्वितीये द्वावन्नकालौ पेयां सेवेत । तृतीये दिवसे द्वावन्नकालौ चतुर्थे दिवसे प्रथमं चान्नकालं विलेपीं सेवेत । चतुर्थेऽह्नि सायमन्नकालं पञ्चमे द्वावन्नकालौ च अकृतयूषं सेवेत । षष्ठे एकमन्नकालम् अकृतं रसं तमेव द्वितीयमन्नकालं सप्तमे प्रातरन्नकालं कृतं रसं सेवेत । अकृतोऽल्पस्नेहलवणः । ततोऽन्यः कृतः । एवं द्वादशेऽन्नकालेऽतीते पुनरन्नगुणानां क्रमोपयोगेन सप्तसु दिनेषु गतेषु प्रकृतिभोजनं सेवेत । वमनदिनाच्चतुर्दशे पञ्चदशे वाह्नि प्रकृतिभोजनमित्यर्थः । तथा चागमः— अथैनं सायाह्ने अपरे वाह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां सुक्लिन्नां मण्डपूर्वां सुखोष्णां यवागूं पाययेद् अग्निबलमभिसमीक्ष्य । एवं द्वितीये तृतीये चान्नकाले । चतुर्थे त्वन्नकाले तथाविधानामेव शालीनां सुक्लिन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत् । एवं पञ्चमे षष्ठे चान्नकाले । सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विःप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत् । एवमष्टमे नवमे चान्नकाले । दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसस्य रसेन । दकलावणिकेन नातिसारवता भोजयेत् । उष्णोदकानुपानमन्नम् । एवमेकादशे द्वादशे चान्नकाले । अत ऊर्ध्वमन्नगुणान् क्रमेणोपयुञ्जानः सप्तरात्रेण प्रकृतिभोजनमागच्छेदिति । अत ऊर्ध्वं मांसरसभोजनादूर्ध्वं सप्तरात्रेण प्रकृतिभोजनमागच्छेत् । सप्तरात्रमन्नगुणान् क्रमेणोपयुञ्जानः स्निग्धगुर्वादीन् गुणान् आनुपूर्व्या अभिवर्धयन्निति । केचिदेवं व्याचक्षते—

अकृतं कृतयूषं च तनु संस्कारकं रसम्' ।

इति विशेषलक्षणवचनाद् यूष एव कृतविशेषणः न रसः । स च सप्तमाष्टमनवमेष्वन्नकालेषु कदाचिदकृतः कल्पयितव्यः । परतश्च त्रिष्वन्नकालेषु रसनिर्देशः । एवं पूर्वोक्ताविरोधेन द्वादशैवान्नकालाः । यथासंख्यं वा अकृतं कृतयूषं चेति व्युत्क्रान्तश्चशब्दः । तनुरिति पौरोगवज्ञैः कृत उक्तः । सूदशास्त्रं च —

'यश्च स्यादकृतो यूषो रसो यश्च कृतो भवेत् ।
कृतसंज्ञो लघुस्तत्र तनुरिष्टो यतः स हि ॥'

इति। प्रत्येकं कृताकृतत्वं हि संस्कृतासंस्कृतत्वम्। उपकल्पनीयेऽध्याये असंस्कृतो यूष उक्तः। रसश्च कृतः। उदकलावणिकनिर्देशात् तस्य हि लक्षणं तज्ज्ञैरुक्तं —

यवनीमरिचाजाजीलवणैः संस्कृतस्तनुः।
रसको हिङ्गुधान्याढ्यो भवेदुदकलावणः॥

इति। कृतेन रसेनाकृतस्य रसस्याकृतेन यूषेण कृतस्य च यूषस्य ग्रहणम्। अन्यथा हि यूषरससूपानां गुरु विद्याद् यथोत्तरमित्यागमाद् अकृतयूषानन्तरं कृतमांसरसोपदेशो दोषवान् स्यात्। त्रिष्वेवान्नकालेषु यूषस्य कृताकृतस्य त्रिष्वेवान्नकालेषु रसस्य च कृताकृतस्योपयोग इति। यच्च विशिष्टयोगशुद्ध्यपेक्षं क्वचिन्निर्दिष्टं प्रागेव मांसरसादिकं तद् विकारावस्थापेक्षमिति। एवं त्रयोऽन्नकालाः प्रधानायां शुद्धौ तत्र काष्ठागतमग्निमान्द्यमिति मध्यमावरयोरपि द्विश एकशः क्रमेणैव पेयादय इति अकृतयोर्यूषरसयोरुपयोगश्चरकेण नेष्टः। तथा हि तद्ग्रन्थः पूर्वमुक्तः— 'अथैनं सायाह्ने परे वाह्नि सुखोदकपरिषिक्तम्' इत्यारभ्य 'यावदत ऊर्ध्वमन्नगुणान् क्रमेणोपयुञ्जानः सप्तरात्रेण प्रकृतिभोजनमागच्छेदि'ति। अस्य ग्रन्थस्य पूर्वोक्तपक्षाविरोधेनैवं वा योजना। अतो वमनदिनादूर्ध्वं सप्तरात्रेण प्रकृतिभोजनमागच्छेत्। सप्तमे दिने प्रकृतिभोजनप्राप्तिरसंस्कृतयोर्यूषरसयोरस्वीकारेण इति। नन्वकृतयूषरसयोः परिग्रहापरिग्रहकृतः संशय इति। उच्यते। अग्न्यपेक्षत्वान्नायं दोषः योऽतिदुर्बलाग्निस्तस्य शोधनेनाप्यग्नेर्मान्द्यात् तद्विवृद्ध्यर्थमकृतयोरपि रसयूषयोः प्रयोगः संस्कारकद्रव्यसंयोगादितरस्मिन् गुरुत्वम्। युक्तिसिद्धं मध्यमाग्निविषयं चरकवचनमित्यदोषः। कृताकृतत्वं यूषरसयोरन्यत्राप्युक्तम् 'अथास्य सुखाम्बुना स्नातस्यापराह्णे शृङ्गिवेरसिद्धामुष्णां यवागूं दद्यात्। ततः प्रभृति भक्तकालेषु यवाग्वादिसंसर्गः तिस्रो यवाग्वः सशृङ्गिवेराः तिस्रो विलेप्यस्तीण्यकृतयूषाणि त्रीणि कृतयूषाणि त्रयः कृता जाङ्गलरसाः' इति। सौश्रुते चोक्तम्—

"हृतदोषप्रमाणेन स चाहारक्रमः स्मृतः।
त्रीणि चापि प्रमाणानि प्रस्थोऽर्धाढकमाढकम्॥
प्रस्थेऽप्येकाग्रतः पेया यवागूः सूपकल्पिता।
द्वे चैवार्धाढके देये तिस्रश्चाप्याढके गते॥
विलेपीमुचिताद् भक्ताच्चतुर्थांशकृतां तथा।
दद्यादुक्तेन विधिना क्लिन्नसिक्थामपिच्छिलाम्॥

घृतेन सैन्धवेनाथ पुनर्यूषेण बुद्धिमान् ।
द्वितीयमंशमुचितादकृताख्येन योजयेत् ॥

ततस्तु कृतसंज्ञेन हृद्येनेन्द्रियबोधिना ।
त्रीनंशान् वितरेद् भोक्तुमातुरायेति तं यथा ॥

ततो यथोचितं भक्तं भोक्तुमस्मै विचक्षणः ।
लावैणहरिणादीनां रसैर्दद्यात् सुसंस्कृतैः ॥"

इति । अत्राप्यसंस्कृतरसस्यावचनं पूर्ववद् व्याख्येयम् । स्नेहपीतादीनां सर्वेषां सामान्योऽयमन्नक्रमः । तत्र वमने भोजनमप्यनुजज्ञे सुश्रुतः । यथा—

"ततोऽपराह्णे सुविरिक्तदेह-
मुष्णाभिरद्भिः परिषिक्तगात्रम् ।
कुलत्थमुद्गाढकिजाङ्गलानां
यूषै रसैश्चाप्युपभोजयेत्तु" ॥

इति । उद्रिक्तश्लेष्मविषयोऽयं विधिरित्यवगन्तव्यम् । उक्तं च—

'कृतेऽपि वमने श्लेष्मण्यनुच्छिन्ने चलात्मके ।
रूक्षैर्यूषैः कुलत्थादेरन्नं भुञ्जीत मात्रया ॥'

इति । पेयादीनां साधितेन जलेन पाकः । उक्तं च—

'मण्डप्रधानां सुस्विन्नतण्डुलां विश्वसाधिताम् ।
पेयां पिबेत् सकृच्छुद्धो द्विस्त्रिर्वैवं विलेपिकाम् ॥'

'उचितान्नाच्चतुर्थांशतण्डुलस्तु विलेप्यकः ।
विलेप्यतण्डुलार्धांशैः पेया कल्प्या तयोर्जलम् ॥

चतुर्गुणं पञ्चगुणं तण्डुलाद् प्राह्यमुच्यते ।
पेयादिसाधने वारि पक्वार्धांशावशेषितम् ॥
प्रायं निरपवादोऽयं विधिः सर्वत्र युज्यते ।'

इति । प्रधानमध्यावरेति "ङ्यापोः संज्ञाच्छन्दसोः" इति ह्रस्वः । त्रीनन्नका-
लान् इत्यत्यन्तसंयोगे द्वितीया ॥ २९ ॥

अधुना अनेन पेयादिक्रमेण यत् फलं भवति तत् दृष्टान्तमाह—

यथाणुरग्निस्तृणगोमयाद्यैः
सन्धुक्ष्यमाणो भवति क्रमेण।
महान् स्थिरः सर्वपचस्तथैव
शुद्धस्य पेयादिभिरन्तराग्निः ॥ ३० ॥

यथेत्यादि। यथा बाह्योऽग्निरणुरल्पः सन् तृणगोमयकाष्ठादिभिः सूक्ष्मैः क्रमेण सन्धुक्ष्यमाणो दीप्यमानो महान् स्थिरः सर्वपचश्च क्रमेण भवति महान् भवति स्थिरश्चिरकालावस्थायी च भवति सर्वपचश्च भवति। सर्वं पचतीति सर्वपचः सर्वं च पक्तुं शक्नोति। तथैव तेनैव प्रकारेण शुद्धस्य नरस्य शोधनेनान्तराग्निरौदर्योऽग्निरणुः सन् पेयादिभिः क्रमेण महान् स्थिरः सर्वपचश्च भवति। सर्वग्रहणेन पथ्यापथ्यमुच्यते। अपथ्यमपि पचतीत्यर्थः। सर्वपच इति पचेरजन्तस्य सर्वशब्देन सह षष्ठीसमासः ॥ ३० ॥

ननु प्रधानमध्यावरशुद्धिशुद्ध इत्युक्तम्। तत्र न ज्ञायते का प्रधाना शुद्धिः का मध्या का अवरेति। अतो द्वयोरपि वमनविरेचनयोर्वेगसंख्यया कृतदोषप्रमाणतः प्रवृत्तदोषदर्शनतश्च शुद्धित्रयलक्षणमुच्यते जघन्येत्यादिना॥

जघन्यमध्यप्रवरे तु वेगा-
श्चत्वार इष्टा वमने षडष्टौ।
दशैव ते द्वित्रिगुणा विरेके
प्रस्थस्तथा स्याद्द्विचतुर्गुणश्च ॥ ३१ ॥

जघन्ये अधमे मध्ये मध्यमे प्रवरे उत्तमे च वमने यथासंख्यं चत्वारो वेगाः षड् वेगाः अष्टौ वेगा इष्टा आचार्यैः। विरेके तु जघन्ये त एव वेगा दश इष्टाः। मध्ये विरेके द्विगुणा दश विंशतिर्वेगा इष्टाः। प्रवरे विरेके त्रिगुणा दश त्रिंशद् वेगा इष्टा इति वमनविरेचनयोः वेगसङ्ख्यया सम्यग्योगलक्षणम्। वेगो हि स्वस्थानाद् दोषाणां प्रवृत्तिविरामोपलक्षितः। तथा जघन्यमध्यप्रवरे विरेके यथासङ्ख्येन प्रस्थो द्विगुणः चतुर्गुणश्च स्यादिति सम्बन्धः। प्रस्थोऽधमे तथा भेदलक्षणं स्यादिति भावः। द्विगुणः प्रस्थः प्रस्थद्वयं मध्ये। चतुर्गुणः प्रस्थः चत्वारः प्रस्थाः प्रवरे लक्षणम्। तथेति

समुच्चये। न केवलं वेगमानं स्यादिति तुशब्दस्यार्थः। ननु वमनमतिक्रम्य विरेके परिमाणलक्षणं किमिति उच्यते। वमनाद् विरेचनस्य प्राधान्याख्यापनार्थं क्रमभङ्गः। विरेचनस्य पूर्वकर्मतया वमनं न विपरीतम्। प्रधानाङ्गतया हि गुणो वर्तते। वमनं विरेचनस्याङ्गम्। हीनगुणसम्पादनाय प्रधानप्रवृत्तिः। अतो गुणभावादप्रधानं वमनम्। विरेकः प्रधानः। उक्तं च—

'वमेर्विरेचनं मुख्यं विरेकाद् वस्तिरुत्तमः।
सिरावेधः समो बस्तेरधिकः कैश्चिदिष्यते॥'

इति ॥ २१ ॥

दोषपरिमाणतोऽपि विरेके भेदमाह—

**पित्तावसानं वमनं विरेका-**
**दर्धं कफान्तं च विरेकमाहुः।**

पित्तेत्यादि। अन्ये पुनराचार्याः पित्तावसानं वमनमुत्कृष्टमाहुः। विरेकाच्च प्रस्थपरिमाणेनार्धमाहुः। न विरेकवेगसङ्ख्यानादर्धमुक्तत्वाद् वमनवेगानाम् अपि तु प्रस्थपरिमाणादर्धं तेन जघन्ये वमनेऽर्धप्रस्थं मध्ये प्रस्थः प्रवरे प्रस्थौ द्वाविति। तथा कफान्तं विरेकमाहुः कफान्ते विरेके प्रवरत्वम्। तथा चागमः—

'प्राप्तिश्च विट्पित्तकफानिलानां
सम्यग् विरिक्तस्य भवेत् क्रमेण।'

इति। व्याकारोऽप्याह — पित्तेत्यादिना त्रिविधानां वमनविरेचनानामुत्तमं वदति। पित्तावसानं वमनं श्रेष्ठमिति शेषः। विरेकादर्धं द्विप्रस्थप्रस्थार्धप्रस्था उत्तममध्यमाधमे वमने कफान्तं च विरेकमाहुः। चशब्दोऽवधारणार्थः। श्लेष्मावसानो विरेकः श्रेष्ठः, नान्यौ। उक्तं च —

'त्रीणि दोषप्रमाणानि प्रस्थोऽर्धाढकमाढकम्।
तत्रावरं प्रस्थमात्रं द्वे शेषे मध्यमोत्तमे॥
पुरीषबहुलः पूर्वः पित्तप्रायस्तु मध्यमः।
श्लेष्मान्त उत्तमो दृष्टो मुनिभिस्तत्त्वदर्शिभिः॥'

इति। अन्ये त्रयाणामपि वमनविरेकाणामुत्तमत्वं वर्णयन्ति। तथा हि—

'हीनमध्योत्तमे दोषे हीनमध्योत्तमैर्हृते।
कफान्तत्वं विरेके स्याद् वमने पित्तदर्शनम्॥'

इति॥

हृतस्य दोषस्य प्रमाणप्रकारमाह—

द्वित्रान्सविट्कानपनीय वेगान्
मेयं विरेके वमने तु पीतम् ॥ ३२ ॥

द्वित्रानिति। द्वौ वा त्रयो वा द्वित्राः 'सङ्ख्ययाऽव्यय' इति बहुव्रीहेः 'बहुव्रीहौ सङ्ख्येये डच्' इति डच्। सह विशा पुरीषेण वर्तन्त इति सविट्काः। तत्र विरेके द्वित्रान् सपुरीषान् वेगानपनीय मुक्त्वान्यन्मेयं मातव्यम्। प्रस्थादिना दोषस्य मातुमिष्टत्वाद् वमने पुनः यत् परिमाणं पीतमौषधं तदपनीय त्यक्त्वा मेयं दोषवेगाः मातव्याः इत्यर्थः। प्रतिनियतप्रमाणयोः पित्तश्लेष्मणोः प्रकोपनिमित्तं बहुत्वं तस्यापि निर्हरणे नियमः कृत इति ॥ ३२ ॥

अथैनं वामितं भूयः स्नेहस्वेदोपपादितम्।
श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत् ॥ ३३ ॥

अथेत्यादि। आनन्तर्यमङ्गलयोरथशब्दः। अथ वमनादनन्तरं कृतमङ्गलमेनं नरं वामितं भूयः पुनरपि स्नेहस्वेदाभ्यामुपपादितं पुनरपि विरेकाङ्गत्वेन स्निग्धं सम्यक् स्नेहनादूर्ध्वं निवृत्तस्नेहपानं त्रिरात्रं स्वेदमाचरन्तमनन्तरं सम्यग्विरेचयेत्। आगमो हि—

'स्नेहात् प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत्।'

इति। प्रस्कन्दनं विरेचनम्। अस्मिन् शास्त्रेऽप्युक्तम्—

"स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन्।
स्निग्धस्त्र्यहं स्थितः कुर्याद् विरेकं......... ॥"

इति। पश्चाद् विरेको वामित इति च। वामित इत्यनेन नत्वकृतवमनं विरेचयेद् इति सिध्यति। कदा विरेचनं पाययेत्— श्लेष्मकाले गते प्रथमे प्रहरेऽतिक्रान्ते सति द्वितीयप्रहरमध्ये विरेचनं पेयम्। अथ कथमत्र ह्रस्वमात्रः प्रहरो गृहीत इति ज्ञायते। आगमादिति ब्रूमः॥

'पूर्वाह्णे वमनं पेयं प्रातर्देयं विरेचनम्।
मध्याह्ने तु निरूहः स्यादपराह्णेऽनुवासनम् ॥'

इति। पूर्वाह्णशब्दः प्रथमयामवचनः। प्रातःशब्दो द्वितीययामवचनः। यामौ द्विप्रकारौ यथोक्तं पादोनाश्चतस्र इति। सार्धसप्तनाडिकावसाने विरेचनं देयमित्येके। यथा—

'प्रथमेऽपगते यामे विरेकस्य विधिर्हितः ।
वमनं प्रथमे यामे मध्याह्ने तु निरूहणम् ॥'

इति । अत्र यामद्वयस्याविशेषितत्वादयमर्थः सिध्यति । अल्पकफस्य पित्तप्रधानस्य द्वितीयप्रहरे विरेकः । बहुकफस्य प्रथमे महति यामे गते विरेक इति । श्लेष्मकाले दिनप्रथमत्रिभागे गते इति हाटकः । ननु कस्य वमनानन्तरं विरेचनं, विरेचनादनन्तरं बस्तिरिति विधीयते । उच्यते । यादृच्छिकस्वस्थस्य कुष्ठादिषु व्याधिषु क्रमात् पञ्चकर्मविधिः । भिषक्परिपालितस्य कालकृतदोषोद्रेकशान्त्यर्थमधमशोधनविधानामिति ज्ञेयम् । किं कृत्वा— कोष्ठं मृदुमध्यक्रूरलक्षणमवगम्य । सम्यगित्यस्य काकाक्षिवदन्वयः । मृद्वादिभेदेन कोष्ठं सम्यग् ज्ञात्वा यथार्हेण भेषजेन सम्यग् विरेचयेदिति ॥ ३३ ॥

कोष्ठं ज्ञात्वेत्युक्तम् । तत्र ज्ञायते त्रिविधः कोष्ठः; कीदृशश्चेति कोष्ठज्ञानार्थं कोष्ठानुरूपौषधज्ञानार्थं चाह —

**बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरेच्यते ।**
**प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि ॥ ३४ ॥**

बहुपित्त इत्यादि । पित्तस्य विरेचनसाध्यत्वातिशयख्यापनार्थं प्रथमं पित्तकोष्ठो निरूप्यते । जन्मकाले पश्चाद्वा योऽधिकपित्तः कोष्ठः स मृदुर्भवति । स च क्षीरेणापि विरेच्यते । अपिशब्दः समुच्चये । द्राक्षारग्वधादिभिश्च मृदुभिर्द्रव्यैरित्यर्थः । प्रभूतमारुतो यः कोष्ठः स क्रूरो भवति । स च कोष्ठः श्यामादिकैः कृच्छ्रेण कथञ्चिदेव विरेच्यते । आदिशब्देन समुद्रैरण्डकङ्कुष्ठकम्पिल्यकसुधाक्षीरादयो गृह्यन्ते । अपिशब्दाद् द्राक्षारग्वधादिभिर्न विरिच्यत एव । पित्तवातकोष्ठयोः कफसम्बन्धे मृदुत्वक्रूरत्वयोः किञ्चिद्धानिः । उक्तं च—

'कोष्ठस्य क्रूरता मन्दा कफयुक्ते नभस्वति ।
मृदुतापि तथा ज्ञेया पित्ते कफसमन्विते ॥
त्रिभिर्दोषैः समुद्रिक्तैः समः कोष्ठः कफेन च ।'

इति । स्यादत्र क्रूरकोष्ठस्य च वमनं विरेचनं चाशस्तं वातावाधभयात् । तथा हि — वमनेन कफक्षयात्, सौम्यगुणहान्या पवनवृद्धिः विरेचनस्याप्यत्ररौक्ष्यकरणात् अत्र विधीयते— स्नेहस्वेदोपपादनाद् वातशान्तेरनावाधकरं वमनं

वमनान्ते च पुनः स्नेहस्वेदोपदेशाच्च । एवं विरेचनेऽपि द्रष्टव्यम् । तथा चागमः —

"कर्मणां वमनादीनामन्तरे त्वन्तरे पुनः ।
स्नेहस्वेदौ प्रयुञ्जीत स्नेहमन्ते बलाय च ॥"

इति ॥ ३४ ॥

**कषायमधुरैः पित्ते विरेकः कटुकैः कफे ।**
**स्निग्धोष्णलवणैर्वायौ**

कषायमधुरैरारग्वधादिभिः पित्ते विरेकः । कटुकैः कफे (विरेकः)। स्निग्धोष्णलवणैरेरण्डतैलादिभिर्वायौ विरेकः ॥

**अप्रवृत्तौ तु पाययेत् ॥ ३५ ॥**

**उष्णाम्बु स्वेदयेदस्य पाणितापेन चोदरम् ।**

अप्रवृत्तिरीषत्प्रवृत्तिः । नञीषदर्थे । वेगानामीषत्प्रवृत्तौ सत्यां भेषजोत्तेजनार्थं उष्णाम्बु पाययेद् वैद्यः । उष्णाम्बुपानादौषधस्य चलनाद् वेगप्रवृत्तिः पाको वा भवति । अप्रवृत्ते तु इति वा पाठः । अस्य च पीतौषधस्य जठरं पाणितापेन स्वेदयेच्च परिचारकः ॥

**उत्थानेऽल्पे दिने तस्मिन्भुक्त्वाऽन्येद्युः पुनः पिबेत् ॥ ३६ ॥**

उत्थानं वेगप्रवृत्तिः । उत्थाने अल्पे स्तोकायां प्रवृत्तौ । अनन्तरं तस्मिन् दिवसे भुक्त्वान्नम् अन्येद्युरन्यस्मिन्नहनि द्वितीयेऽहनि पुनर्विरेचनमौषधं पिबेत् । अहृतसमस्तदोषस्य भोजनानुवादेनैतद् गमयति । एकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा दिवसैर्दोषबलाद्यपेक्षया विरेचनं समापनीयमिति । उक्तं च सारसुष्टौ—

'शनैर्विरेचनं कार्यमेकद्वित्रिचतुर्दिनैः ।
भोजनं तु यथासात्म्यं तत्राकर्मसमापनात् ॥
समाप्ते कर्मणि पुनः पेयादिक्रम इष्यताम् ।'

इति ॥ ३६ ॥

**अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः ।**
**भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥ ३७ ॥**
**यौगिकं सम्यगालोच्य स्मरन् पूर्वमतिक्रमम् ।**
**हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ॥ ३८ ॥**

कण्डूर्विदाहः पिटका पीनसो वातविड्ग्रहः ।
अयोगलक्षणं योगो वैपरीत्ये यथोदितात् ॥ ३९ ॥

स्नेहनं स्नेहः । अदृढस्नेहः कोष्ठो यस्य सोऽदृढस्नेहकोष्ठः । असम्यक् स्निग्धकोष्ठ इत्यर्थः । स भूयोऽपि स्नेहस्वेदैरुपस्कृततनुः संस्कृतशरीरो दशाहादूर्ध्वं सप्ताहं स्नेहनं कृत्वा त्र्यहं स्वेदं विधाय पश्चाद् यौगिकं विरेचनं पिबेत् । सम्यगालोच्य यथावन्निरूप्य । सम्यगालोचनं पूर्वायोगकारणत्यागार्थम् । स्मरन् पूर्वमतिक्रमं "भैषज्यमात्रां मन्त्राभिमन्त्रिता"मित्यादिकं, तथा 'अप्रवृत्तौ तु पाययेदुष्णाम्बिव'त्यादिकं च स्मरन् । हृत्कुक्ष्यशुद्ध्यादि अयोगलक्षणम् । यथोदितात् वैपरीत्ये यथोक्ताद् वैपरीत्ये हृत्कुक्षिशुद्धिरित्यादिको योगो योगलक्षणम् ॥ ३७—३९ ॥

विट्पित्तकफवातेषु निःसृतेषु क्रमात्स्रवेत् ।
निःश्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम् ॥ ४० ॥

मांसधावनतुल्यं वा मेदःखण्डाभमेव वा ।
गुदनिःसरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ॥ ४१ ॥

भवन्त्यतिविरिक्तस्य तथातिवमनामयाः ।

अतिविरिक्तस्य विडादिषु क्रमान्निःसृतेषु जलं स्रवेत् । औषधशब्दलोपोऽत्र । विट्पित्तौषधकफवातेषु सम्यग् योगलक्षणोद्दिष्टेषु निस्सृतेषु । क्रमात् स्थानानुपूर्व्या । निःश्लेष्मपित्तं तथा श्वेतं किञ्चित् कृष्णं सलोहितमीषद्रक्तम् । अथ वा मांसधावनतुल्यं मांसधावनं मांसप्रक्षालनजलं तत्सदृशम् । अथवा मेदःखण्डाभमुदकं स्रवेत्, खण्डं शकलम् । तथा गुदनिस्सरणादयोऽतिवमनामयाश्च क्षामतादयो भवन्ति ॥

सम्यग्विरिक्तमेनं च वमनोक्तेन योजयेत् ॥४२॥
धूमवर्ज्येन विधिना

एनं च सम्यग्विरिक्तं वमनाविहितेन विधिना स्नेहाचारेण विधूमेनोपपादयेत् 'धूमत्रयस्यान्यतमम्' इति विहितस्यापवादः धूमवर्ज्येनेति ॥

ततो वामितवानिव ।
क्रमेणान्नानि भुञ्जानो भजेत् प्रकृतिभोजनम् ॥ ४३ ॥

ततोऽनन्तरं सम्यक् विरिक्तः क्रमेण पूर्वोक्तेन रक्तशाल्यन्नसहितपेयादीन्यन्नानि । भुञ्जानोऽश्नन् । पेयाद्यन्नगुणोपयोगक्रमेण भुञ्जान इति यावत् । प्रकृतिभोजनं भजेत् ॥ ४३ ॥

पीतभेषजस्योपवासविषयं दर्शयति —

मन्दवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ।
अदृष्टजीर्णलिङ्गं च लङ्घयेत्पीतभेषजम् ॥ ४४ ॥

मन्देत्यादि । वमनाय विरेचनाय वा पीतभेषजान् मन्दवह्न्यादीन् पञ्च लङ्घयेद् अजीर्णलिङ्गात् । असंशुद्धम् अप्रवृत्तदोषम् । ईषदर्थे विपक्षे वा नञ् । दोषदुर्बलं दोषैर्दुष्टैर्हीनबलम् । अदृष्टं जीर्णलिङ्गं पीतभेषजस्य यस्य तम् । अदृष्टजीर्णौषधलक्षणम् एतांस्तदहो लङ्घयेदित्यन्ये ॥ ४४ ॥

इदानीं लङ्घनस्य फलमाह —

स्नेहस्वेदौषधोत्क्लेशसङ्गैरिति न बाध्यते ।

स्नेहेत्यादि । इत्येवं लङ्घिते सति स्नेहस्वेदौषधोत्क्लेशसङ्गैः न बाध्यते न पीड्यते आतुरः । उत्क्लेशाश्च सङ्गाश्च उत्क्लेशसङ्गाः स्नेहस्वेदौषधानामुत्क्लेशसङ्गाः स्नेहस्वेदौषधोत्क्लेशसङ्गाः तैः । हृद्याकारस्त्वाह — स्नेहनेन स्वेदनेन औषधेन च य उत्क्लेशो दोषस्य तस्योत्क्लिष्टस्य दोषस्य सङ्गोऽप्रवृत्तिः तैः स्नेहादिभिः सङ्गान्तैर्यो दोषस्तेन न बाध्यते । इतिशब्दो हेत्वर्थः । लङ्घने कृते उत्क्लेशसङ्गदोषो न स्यादित्यर्थः, इति ॥

प्रसङ्गेन यथोक्तस्य पेयादिक्रमस्य विषयं दर्शयति —

संशोधनास्रविस्रावस्नेहयोजनलङ्घनैः ॥ ४५ ॥
यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ।

संशोधनेत्यादि । संशोधनादिभिर्यतोऽग्निर्मन्दतां याति तस्माद्धेतोः पेयादिकं क्रममाचरेत् । संशोधनं सम्यक् शुद्धिः । अस्रविस्रावो रक्तस्रुतिः । स्नेहयोजनं स्नेहोपयोगः । लङ्घनस्यामादिपाचनसमर्थस्यातिप्रयोगे वह्निनाशकरत्वं तत्रापि पेयादिक्रमो विधेयः । ननु शुद्ध्याग्निमान्द्यमिहोच्यते । वक्ष्यति च — 'बुद्धिप्रसाद'मित्यादिना ज्वलनस्य दीप्तिं संशोधनं करोतीति । तदिमे वचसी

परस्परं व्याघाते । अत्रोच्यते । कालभेदाददोषः । संशोधने क्रियमाणेऽग्निमान्द्यं भवति । कृते च संशोधने पेयादिक्रममासेवमानस्याग्निर्दीप्तिरिति न कश्चिदत्र व्याघातः । हाटकोऽप्याह — 'कालभेदाददोषः । संशोधनानन्तरमेवाग्नेर्मान्द्यं स्यात् । पेयादिक्रममनन्तरमासेवमानस्याग्नेर्दीप्तिरि'ति । अथवा 'संशोधनादीनां चायथाप्रवृत्तानामग्निनाशकरत्वं सम्यक्प्रवृत्तानामग्निकरत्वमि'ति केचित् ॥

स्रुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ॥ ४६ ॥

पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः ।'

स्रुतेत्यादि । स्रुतौ पतितावल्पौ पित्तश्लेष्माणौ यस्य स एवम् । संशोधने प्रवृत्ते यस्य पित्तश्लेष्माणावल्पौ स्रुतौ देहेऽवस्थितावित्यर्थः । यश्च स्वभावेन मद्यपः तथा यश्च वातपैत्तिको वातपित्तप्रकृतिः त्रीनप्येतान् पेयां न पाययेत् । तर्ह्येषां किं कार्यमित्याह — तेषां तर्पणादि क्रमो हितः पेयास्थाने तर्पणादय इत्यर्थः । यथाह —

'लाजसक्तून् पिबेत् पूर्वं ततो यूषान्नभोजनम् ।
पश्चान्मांसरसान्नं स्यात् तर्पणादिरयं क्रमः ॥'

इति । तर्पणा लाजसक्तवः । स्रुताल्पपित्तादिषु पेयाविलेप्योरेव प्रतिषेधः । अकृतानां कृतानां च यूषाणां मांसरसानामुपयोगः शस्यते इत्यभिप्रायः ॥

ननु विरेचनस्येव वमनस्य कस्मात् पाको न प्रतीक्ष्यत इत्याह —

अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ॥ ४७ ॥

निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ।

अपक्वमित्यादि । वमनविरेचनयोः सर्वविधिसाम्येऽपि प्रवृत्तिभेदोऽस्ति । कथं, वमनमपक्वं सद् दोषान् निर्हरेत् । विरेचनं तु पच्यमानं दोषान् निर्हरेत् । अतो वमनस्य पाकं न प्रतिपालयेत् । औषधपानसमनन्तरमेव वमनप्रवृत्तौ यत्नो विधेय इत्यर्थः । अयोगे शीघ्रमेव प्रतिक्रियां कुर्यात् ॥

विरेचने किंचिद् विशेषमाह —

दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम् ॥ ४८ ॥
विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत् ।
दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ॥ ४९ ॥

दुर्बल इत्यादि । दुर्बलो यो नरो बहुदोषश्च दोषपाकेन हेतुना कालेन द्रवीभूते दोषे स्वयमौषधमन्तरेण विरिच्यते भिद्यते । न तस्मै विरेचनमौषधं देयं नापि स्तम्भनम् । तर्हि तत्र किं कार्यमित्याह — तं नरं भेदनीयैर्भोज्यैः शक्रुद्भेदिभिराहारैर्वास्तुकादिभिः संयोजयेत् । हाटकोऽप्याह — यो नरो दौर्बल्यादियुक्तः स (अ?न) विरेच्यः । न च तस्य दोषो बहुत्वान्निर्गच्छन् स्तम्भनीयः । तं भेदनीयैर्वास्तुकादिभिः योजयेदिति ॥ ४९ ॥

**अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम् ।**

तथा दुर्बलः सन् पूर्वं शुद्धस्तथा अल्पदोषस्तथाकृशः तथा मृद्वादिविशेषेणापरिज्ञातकोष्ठः । एते दुर्बलादयः पञ्च पुरुषा मृदुगुणमल्पमात्रं च विरेचनौषधं पिबेयुः । औषधं शोधनौषधमिति हद्याकारः ॥

तदेव शस्तमित्युपपादयति वरमित्यादिना—

**वरं तदसकृत्पीतमन्यथा संशयावहम् ॥ ५० ॥**

यतस्तदौषधं प्रयोजनापेक्षया असकृदनेकवारं पुनः पुनः पीतं वरम् । नत्वन्यथा । बहुतीक्ष्णमौषधं सकृच्च पीतं संशयावहं प्राणसन्देहकारि अवरम् अतियोगभयात् । हद्याकारोऽप्याह— असकृत् पीतं तदौषधं वरम् अन्यथा तीक्ष्णं बहुमात्रं पीतं संशयावहं प्राणसन्देहकारि इति ॥ ५० ॥

**हरेद्बहूंश्चलान्दोषानल्पानल्पान्पुनः पुनः ।**
**दुर्बलस्य मृदुद्रव्यैरल्पान्संशमयेत्तु तान् ॥ ५१ ॥**
**क्लेशयन्ति चिरं ते हि हन्युर्वैनमनिर्हृताः ।**

हरेदित्यादि । तथा दुर्बलस्य पुरुषस्य चलान् शिथिलान् दोषान् बहून् प्रभूतान् सतोऽल्पानल्पान् स्तोकं स्तोकं मृदुभिर्द्रव्यैरारग्वधादिभिर्हरेत् । पुनः पुनः पीतं मृद्वौषधं चलान् बहून् दोषानल्पानल्पान् स्तोकं स्तोकं हरेत् । एवं बलहानिं विना दोषनिर्हारः कृतः स्यात् । दुर्बलस्येत्युभयत्रापि च संबध्यते । दुर्बलस्याल्पान् समस्तान् दोषांश्चलाननिर्हृतान् शमनैः सम्यक् शमयेदेव । तुरवधारणे । ननु बहवो दोषाः कस्मान्न शाम्यन्त इत्याह— हि यस्माद् बहवश्चलिता दोषा अनिर्हृताः सन्ताश्चिरकालमेनं दुर्बलमातुरं व्याधिभिः क्लेशयन्ति पीडयन्ति । हन्युर्वा । अनिर्हृता वा मारयेयुः । तस्मादेवं बलहानिं विना दोषनिर्हरणं कार्यमेव स्यात् ॥

मन्दाग्नेः क्रूरकोष्ठस्य च सम्यग् विरेकोपायमाह —

मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ॥ ५२ ॥

सन्धुक्षिताग्निं विजितकफवातं च शोधयेत् ।

मन्दाग्निमित्यादि । कफवृद्ध्या वह्नेर्मान्द्यं वातवृद्ध्या जठरस्य क्रौर्यम्, तदुभयमपि परिहर्तव्यमिति प्रथमचकारार्थः । मन्दाग्निना पीतमौषधं पाकमगच्छद् वमनाय, क्रूरकोष्ठेन पीतं शीघ्रपाकगमनान्न विरेकाय स्यादिति । तयोः परिहारार्थमाह—सक्षारलवणैरिति । क्षारशब्देन वातहरद्रव्याणां भस्मोच्यते । लवणमिति सैन्धवम् । अन्येषां कफकरत्वात् । क्षारलवणसिद्धैर्घृतैः । जातौ बहुवचनम् । कथमवगम्यत इति चेत् तथा प्रयोगदर्शनात्—

'पाटलीचिरिबिल्वादिक्षारसैन्धवसाधितम् ।
घृतं सन्दीपनं वह्नेः कफजिद् वातनाशनम् ॥'

इति । विजितकफवातमिति क्षारलवणसिद्धस्य घृतस्य संस्कारानुवर्तकत्वात् कफजित्त्वं युक्तम् । द्वितीयेन चकारेण कफवातहराणां दीपनानां प्रयोगः समुच्चीयते । अरुणदत्तस्त्वाह—'मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः यथासंख्यमुद्दीपितानलं विजितकफवातं च शोधयेद्' इति । अथवा 'मन्दाग्निं पुरुषं शोधनप्रसङ्गे सक्षारैर्घृतैर्यथोक्तैः सन्धुक्षिताग्निं विजितकफं च कृत्वा शोधयेत् । तथा क्रूरकोष्ठं सलवणैर्घृतैः सन्धुक्षिताग्निं विजितवातं च कृत्वा शोधयेद्' इतीन्दुः ॥

रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम् ॥ ५३ ॥
दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति ।
तेभ्यो वस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ॥ ५४ ॥

शकृन्निर्हृत्य वा किञ्चित्तीक्ष्णाभिः फलवर्तिभिः ।

रूक्षेत्यादि । रूक्षादीनां पञ्चानां पीतं भैषज्यम् अविरेच्य विरेचनमकृत्वैव जीर्यति जरां याति परिणमति । रूक्षबह्वनिलयोः को भेद इति चेत् । उच्यते । ऊरुस्तम्भादिषु स्निग्धत्वेऽपि बह्वनिलदर्शनादेवमुक्तिरुपपद्यते । तेभ्यो रूक्षादिभ्यो वाताधिकत्वात् तज्जयाय पूर्वं वस्तिं दद्यात् । अनन्तरं स्निग्धमेरण्डतैलबिन्दुघृतादिकं विरेचनं योजयेत् । अथवा वस्त्यनर्हे पुरुषे फलवर्तिभिस्तीक्ष्णाभिः

पुरीषं किञ्चिदल्पं निर्हृत्य निस्सार्य स्निग्धं विरेचनं दद्यात् ॥

कस्माद् वस्तिभिः फलवर्तिभिर्वा किञ्चिच्छकृन्निर्हारं इत्याह

प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत्सुखम् ॥ ५५ ॥

प्रवृत्तमित्यादि । एवं वस्तिभिः फलवर्तिभिर्वा प्रवृत्तं किञ्चित् पतितं सन्तं मलं स्निग्धो विरेकः सुखमक्लेशेन यस्मान्निर्हरेत् ॥ ५५ ॥

विषाभिघातपिटिकाकुष्ठशोफविसर्पिणः ।
कामिलापाण्डुमेहार्तान्नातिस्निग्धान्विरेचयेत् ॥ ५६ ॥
सर्वान्स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान् ।

विषेत्यादि । नातिशब्दावत्रेषदर्थे । नातिशीतगुरुस्निग्धमित्यत्र यथा । अथवा नञीषदर्थे । विषादियुक्तान् कामिलाद्यार्तांश्च ईषत् स्निग्धान् विशोधयेत् । सर्वानेतान् सर्वान् विषादियुक्तान् स्नेहविरेकैरेव शोधयेत् । स्नेहभावितान् स्नेहभावितानेतान् पुरुषान् रूक्षैर्विरेकैः शोधयेत् । येषां सञ्चितः स्नेहसंस्कारो देहे विद्यते ते स्नेहभाविताः । इन्द्वाकारोऽप्याह — विषाद्यार्तान् पुनः, रूक्षगुणैरेव विरेचनौषधैः शोधयेदिति ।

एतान् सर्वान् विषाद्यार्तानकृतस्नेहनान् सतः ।
शोधनद्रव्यसंसिद्धैः स्नेहैः साधु विशोधयेत् ॥
एतानेव बहुस्नेहसेवान् रूक्षैर्विशोधयेत् ।

इति ।

कर्मणां वमनादीनां पुनरप्यन्तरेऽन्तरे ॥ ५७ ॥
स्नेहस्वेदौ प्रयुञ्जीत स्नेहमन्ते बलाय च ।

कर्मणामित्यादि । आदिशब्देन विरेचनास्थापनानुवासननस्यानां ग्रहणम् । वमनादीनां कर्मणामन्तरेऽन्तरे मध्ये मध्ये पुनरपि भूयोऽपि एकस्मिन्नेकस्मिन् समाप्ते पुनरन्यारम्भे स्नेहस्वेदौ प्रयुञ्जीत । अन्ते च एकैकस्य समाप्ते सर्वेषामन्ते च बलाय शरीरस्य बलाधानार्थं स्नेहमुपयुञ्जीत । आदौ स्नेहस्वेदौ ततो वमनं पुनः स्नेहस्वेदौ ततो विरेचनं पुनः स्नेहस्वेदौ ततोऽनुवासनं पुनः स्नेहस्वेदौ ततो निरूहणं पुनः स्नेहस्वेदौ ततः शिरोविरेचनमिति यावत् । अन्तरान्तरा इति वा पाठः ॥

किमर्थमेवं स्नेहस्वेदौ युञ्जीतेत्याह—

[1]ऊषादिभिर्यथा स्विन्नादुध्रियते वाससो मलः ॥ ५८ ॥
स्नेहस्वेदैस्तथोत्क्लेश्य वपुषः शोधनैर्मलः ।

ऊषादिभिरित्यादि । ऊषा क्षारमृत्तिका । आदिशब्देन नालिकेरवल्कवन्दाकादीनां भस्म गृह्यते । यथा वाससो वस्त्रात् स्विन्नात् मलः ऊषादिभिरुत्क्लेश्य पतनोन्मुखं कृत्वा जलादिना ह्रियते तद्वदेव वपुषो देहादपि मलः स्नेहस्वेदादिभिरुत्क्लेश्य वमनादिभिर्निर्ह्रियत इति संबन्धः ॥

ननु स्नेहस्वेदावन्तरेणापि कस्मान्मलः शोधनैर्न शोध्यत इत्याह—

स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः ॥ ५९ ॥
दारुशुष्कमिवानामे शरीरं तस्य शीर्यते ।

स्नेहस्वेदावित्यादि । यो नरः स्नेहस्वेदावनभ्यस्याशीलयित्वा संशोधनं कुर्यात् तस्य शरीरं शीर्यते नश्यति । यथा शुष्कं दारु काष्ठमानामे आनमने शीर्यते तद्वदिति स्नेहस्वेदयोः कर्मसु करणीयत्वं दृढयति दृष्टान्तेन । दीर्यते इति वा पाठः । भिद्यत इत्यर्थः ॥ ५९ ॥

सांप्रतमुपसंहरन् संशुद्धेः फलमाह—

बुद्धिप्रसादं बलमिन्द्रियाणां
धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।
चिराच्च पाकं वयसः करोति
संशोधनं सम्यगुपास्यमानम् ॥ ६० ॥

बुद्धीत्यादि संशोधनं सम्यक् शोधनम् । साधु कृत्वा उपास्यमानं सेव्यमानं क्रियमाणमित्यर्थः । बुद्धिप्रसादादीन् पञ्च करोति वयसो यौवनादेरपाकः अपरिणामः ॥ ६१ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायामष्टादशोऽध्यायः ।

---

१. 'मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा' इति मुद्रिताष्टाङ्गहृदयपाठः ।
ऊषादिभिर्यथोत्क्लेश्य ह्रियते वाससो मलः ।
तथैव वपुषः स्नेहस्वेदमाषतिलादिभिः ॥
इति तालपत्राष्टाङ्गहृदयपाठः. अयमेव पाठः सङ्ग्रहेऽपि ।

# अथैकोनविंशोऽध्यायः ।

मलहरणार्थं पूर्वोऽध्याय उक्तः । वास्तिना हि मलो निह्रियत इति वमनविरेचनविधेरनन्तरं वस्तिविधेरुपक्रमो युक्त इत्याह—अथात इत्यादि । अथवा वमने कफविनाशायोपदिष्टे पित्तविनाशनाय च विरेचने वातनाशाय वस्तेः प्रसङ्गात् तस्य परिज्ञानार्थमध्याय आरभ्यते ।

पाञ्चकारोऽप्याह—

'वमनं कफशान्त्यर्थं रेचनं पित्तशान्तये ।
तस्माद् वातस्य शान्त्यर्थमिदानीं वस्तिरिष्यते ॥' इति

अथवा 'तेभ्यो वस्तिं पुरो दद्याद्' इत्युक्तम् । अतो वस्तिमाह—

**अथाऽतो वास्तिविधिमध्यायं व्याख्यास्यामः ।**

अथात इत्यादि । वास्तिना दीयत इति वस्तिः तस्य विधिः । 'वस्तिना दीयते वस्तिं वा पूर्वमभ्येति ततोऽपि वस्तिः इति सङ्ग्रहे[1] । हृद्याकारोऽप्याह—

'वस्तेः पुरस्तात् प्रस्तावात् तस्याद्य विधिरुच्यते ।
वास्तिना मूत्रपात्रेण मृगाणां य उपक्रमः ॥
स वस्तिरिति तद्विद्भिस्तात्कर्म्यात् तद्गिरोच्यते ।
प्रयुक्तमात्र एवैष वस्तिं यातीत्यतोऽपि वा ॥'

इति ॥

**वातोल्बणेषु दोषेषु वाते वा वस्तिरिष्यते ।**
**उपक्रमाणां सर्वेषां सोऽग्रणीस्त्रिविधश्च सः ॥ १ ॥**
**निरूहोऽन्वासनो वस्तिरुत्तरः ।**

वातेत्यादि । वात उल्बणोऽधिको येषां दोषाणां त एवम् । वातोल्बणेषु वाताधिकेषु दोषेषु केवले वा वायौ वस्तिरिष्यते । आचार्यैरिति शेषः । अथवा वाते वस्तिरिष्यते वातोल्बणेषु दोषेषु वा । वाशब्दस्य वातोल्बणेष्वित्यत्रैव सम्बन्धः न वात इत्यस्मिन् पदे । वाशब्दयुक्तात् पक्षात् तदयुक्तः पक्षो मुख्य इति न्यायादेवं योजना । अन्यथा चेद् वाते वस्तेरप्राधान्यं स्यात् । अथवा वातोल्बणेषु दोषेषु वास्तिरिष्यते वाते वा वाते इव । यथा वाते वस्तिरिष्यते तद्वद् वातोल्बणेषु दोषेष्वपीत्यर्थः । वाशब्द उपमानार्थे । "वा विकल्पोपमानयोः" इति । उपक्रमाणां वमनादीनां चिकित्सितानां सर्वेषां मध्ये

---

१. 'पूर्वमन्वेति' इति मुद्रितसङ्ग्रहपाठः ।

**अग्रणीः** प्रधानः, शीघ्रं बृंहणादिकारित्वाद् विकृतानिलोच्छेदित्वाच्च । अथवा उपक्रमाणामिति वातहराणां प्रयोगाणां श्रेष्ठ इत्यभिप्रायः । स च वस्तिस्त्रिप्रकारः । तदेव त्रैविध्यमाह—निरूहः अन्वासन उत्तरवस्तिरिति । निरूह इति । 'वह प्रापणे' निर्पूर्वः । अवाग्दोषं नयतीत्यर्थः । शरीरारोहणाद् वा । अथवा ऊहरहितो निरूहः अचिन्त्यप्रभावत्वात् । संग्रहेऽप्युक्तं—'शरीरारोहणाद् दोषनिर्हरणादचिन्त्यप्रभावतयास्मिन्नूहासम्भवान्निरूहः' इति । अनुरूपमासनमन्वासनम् । शरीरयोग्या आसिका येन क्रियते तदन्वासनं स्नेहवस्तिः । अनुवासनमित्यनुशब्दस्य पूर्वोक्तोऽर्थः । वासनं वासः स्थितिरित्यर्थः । यतश्च सोऽन्नमनु वसन्नपि न दुष्यति । अनुवासरमपि दीयते इत्यनुवासनम् । निरूहादुत्तरं गुदादुत्तरेण वा मार्गेण मेढ्राख्येन दीयते इत्युत्तरवस्तिः । ननूपादानभेदेन भेदे कल्प्यमाने वस्तेर्द्वैविध्यं, तथा मार्गभेदेनापि । तत् कथं त्रिविध इत्युच्यते । ब्रूमः । प्रयोगभेदात् त्रैविध्यमिति परिहारः ॥ १ ॥

**तेन साधयेत् ।**

**गुल्मानाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २ ॥**
**जीर्णज्वरप्रतिश्यायशुक्रानिलमलग्रहान् ।**
**वर्ध्माश्मरीरजोनाशान् दारुणांश्चानिलामयान् ॥ ३ ॥**

तेनेत्यादि । तेनेति तच्छब्देन निरूहः परामृश्यते । अनास्थाप्यानामुत्तरत्र वचनादनुवासनोत्तरवस्त्योः पृथग् विषयाभिधानाच्च । कथमितिचेद्—ब्रूमः । 'अनास्थाप्यास्त्वि'त्यधीते तत्र ते निरूह्या इत्यधिगते सत्यनिरूह्याः पुनरिति वक्तुं युज्यते । अपि च 'आस्थाप्या एव चान्वास्या' इति नाधिगम्येत । तस्मात् तेनेत्यनेन निरूहस्य ग्रहणं न्याय्यम् । तेन निरूहेण गुल्मादियुक्तांस्तथा जीर्णज्वरादीनन्यांश्च वातरोगान् कृच्छ्रान् साधयेत् उपक्रामेत् । गुल्मादीनां शूलान्तानां द्वन्द्व इनिः कार्यः । शुद्धातिसारिण इति शुद्धशब्देनामरक्तयोः प्रतिषेधः । शुक्रादीनां ग्रहेण सम्बन्धः । शुक्रग्रहो रेतोनिबन्धः । अनिलग्रहो वायोरसञ्चारः । रजोनाशः स्त्रियाः पुष्पविघातः ॥ ३ ॥

**अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।**
**आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥ ४ ॥**
**कासश्वासप्रमेहार्शोहिध्माध्मानाल्पवह्नयः ।**
**शूनपायुः कृताहारो बद्धच्छिद्रोदकोदरी ॥ ५ ॥**

१. मुद्रितसंग्रहे 'अचिन्त्यवीर्यप्रभावतया' इति दृश्यते. २. 'वर्चस' मुद्रिताष्टाङ्गहृदयपाठः.

**कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ।**

**अनास्थाप्या इत्यादि** । आस्थापनशब्दो निरूहपर्यायः । आ समन्ताद् देहगुणान् स्थापयतीत्यास्थापनं वयःस्थापनाद् वा । **अनास्थाप्या** आस्थापनानर्हाः । अतिस्निग्धादयः सप्तममासगर्भिण्यवसानाद् द्वाविंशतिरनास्थाप्याः न निरूहार्हा इत्यर्थः । वातव्याधावप्यतिस्निग्धानामास्थापनं वर्ज्यम् । क्षतोरस्कस्य कृशस्य च शरीरपीडाकरणात् । शुद्धातिसारिण आस्थाप्या इत्यनेनैवामातिसारिणोऽनास्थाप्यत्वे लब्धेऽपि पुनर्वचनं नियमार्थम्—आमातिसारिणो न कथञ्चिदास्थाप्या इति । **वमिमान्** प्रसक्तच्छर्दिः । नित्ययोगेऽत्र मतुप् । **संशुद्धः** कृतवमनविरेकः प्रकृतिभोजनावधिकम् । **दत्तनावनस्तदहरेव** । तत्रातिस्निग्धस्य दोषानुत्क्लेश्य निरूहः श्वयथुमुदरं च जनयेत् । **क्षतोरस्ककृशयोः** क्षोभव्यापन्नशरीरमाशु पीडयेत् । आमातिसारिणो दोषस्य सम्यगनिर्हरणाद् देहस्य क्षोभादतिपीडां कुर्यात् । प्रसक्तछर्दिषो दोषोत्क्लेशात् निरूहणमूर्ध्वं नयेत् । कृतवमनविरेकयोस्तु रिक्तं देहं क्षतं क्षारवद् दहेत् । कृतनस्यस्य विवृतोर्ध्वस्रोतस्तया भृशं पीडां कुर्यात् । श्वासादीनामुत्क्लिष्टदोषत्वान्निरूह ऊर्ध्वं व्रजेत् । अर्शःप्रभृतीनां भृशतरमाध्मानं मृत्युर्वा स्यात् । अल्पाग्न्यादीनां स्तम्भजाल्यादीनावहेत् । **शूनपायुः** सशोफगुदः । गर्भिण्या अष्टममासात् पूर्वमास्थापनान् आमगर्भध्वंसः ॥ ४,५ ॥

**आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥ ६ ॥**

**रूक्षाः केवलवातार्ताः**

**आस्थाप्य इत्यादिना** अनुवासनयोग्यानाह—ये **आस्थाप्यास्त एवान्वास्याः** आस्थापनयोग्याः सर्वे अनुवासनयोग्या एव । **विशेषादिति** । **अतिवह्न्यादयस्त्रयः** विशेषेणातिशयेनान्वास्याः अनुवासनीयाः अनुवासनयोग्याः । एषामनुवासनं पोषकरम् । वचनं हि—'रूक्षातिदीप्ताग्नयः केवलानिलार्ताश्च विशेषेण ते परमनुवासनेनाप्याय्यन्ते मूलसेकेन वृक्षवत्' इति ॥

**नानुवास्यास्त एव च ।**

**येऽनास्थाप्यास्तथा पाण्डुकामलामेहपीनसाः ॥ ७ ॥**

**नानुवास्यास्त एव चेति** । ये **अनास्थाप्या** अनिरूह्यास्तेऽपि नानुवास्या एव । ये निरूहानर्हास्तेऽप्यनुवासनानर्हा इत्यर्थः । अन्ये च सन्त्यनु-

वासनानर्हाः, तानप्याह—तथेति। तथा पाण्ड्वादयो गलगण्डवदन्ता नानुवासनार्हाः स्नेहवस्त्ययोग्याः। एतेषां हि दोषानुत्क्लेश्य स्नेहवस्तिरुदरं जनयेत्॥ ७॥

अतिदेशप्राप्तं निरन्नत्वं प्लीहानां चानुवासनं निषेधति—

निरन्नप्लीहविड्भेदिगुरुकोष्ठकफोदराः।
अभिष्यन्दिकृशस्थूलकृमिकोष्ठाढ्यमारुताः॥ ८॥
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान्।

निरन्नप्लीहेति। निरन्नस्यानुवासनात् स्नेहविपत्तिः। तथा चोक्तं खरनादे—

"अभुक्तदत्तश्च तथा स्नेहवस्तिर्विपद्यते"

इति। कृताहारस्यास्थापननिषेधे निरन्नस्यानुवासननिषेधे च युक्तिः सङ्ग्रहे उक्ता—

'अभुक्ते रिक्तकोष्ठे[1] च प्रयुक्तमनुवासनम्।
सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते॥
तेन वायोर्जयो न स्याद् वातधामन्यतिष्ठता[2]।
कायाग्नेराशु नाशश्च विशेषादनिवर्तनात्॥
स्नेहः सद्योऽशिताहाररुद्धे त्वामाशयेऽनिलम्।
पक्वस्थं हन्ति पक्वस्थश्च्यवते चान्नपाकतः॥
निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि।
तावन्न मूर्छितौ तीक्ष्णावधोऽन्नेन सहागतौ॥
ऊर्ध्वं वा शकृता सार्धं संस्थितौ कोष्ठ एव वा।
समलाहारविष्टब्धौ हरेतामाशु जीवितम्॥
भुक्तवाननुवास्योऽस्मान्न निरूह्यस्तु भुक्तवान्।'

इति। प्लीहादीनां स्तम्भजाड्यादीनावहेत्। कृमिकोष्ठस्यानुवासनात् पूर्वकायमभिनिःसृतैः कृमिभिश्छर्दिः स्यात्। आढ्यमारुतादीनां सम्यग्दोषानिर्हरणादामयवृद्धिः। पीते गरे विषे च नानुवास्या इति योज्यम्। अपची उत्तरे वक्ष्यमाणा। श्लीपदीति इनिः। गलगण्डवानिति मतुप्॥

तयोस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम्॥ ९॥
गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जुगुलिकामुखम्।

१. 'रिक्तकोष्ठाख्ये', २. 'वातस्थाने व्यतिष्ठता' इति मुद्रितसंग्रहपाठः।

तयोरित्यादि । तयोर्निरूहानुवासनयोर्नेत्रं भवति । स्नेहकल्कक्वाथादिकं कोष्ठं नयत्यपानेन अथवा बहिर्दोषान् भेषजयोगेनेति नेत्रं यन्त्रमुच्यते । 'दाम्नीशसे'ति ष्ट्रन्प्रत्ययः । किंभूतं नेत्रं हेमादिजातं स्वर्णादिमयम् । आदिशब्दः प्रकारे । तेन रजतायःकंसत्रपुसीसादयो गृह्यन्ते । धातुशब्दो भूतवचनः भौतिके हेमादावपि वर्तते । ये तु कठिनत्वे सति वह्निसंयोगाद् द्रवतामापद्यन्ते ते धातवो हेमादयश्च धातवश्चेति द्वन्द्व इति केचित् । दारुशब्देन खदिरासनादिसारग्रहणम् । अस्थीनि गजादीनां दन्तादीनि । वेणुर्वंश एषां द्वन्द्वः । एभ्यो जातं तयोर्निरूहानुवासनयोर्नेत्रं भवति । स्फटिकशङ्खादिभिरपि कर्तव्यम् । उक्तवांश्च 'सुवर्णादिधातुमणिशङ्खदन्तशृङ्गास्थिवेणुखादिरकदरतिन्दुकादिसारमयम्' इति । किंभूतम् आनुपूर्व्योपचयाद् गोपुच्छाकारं गोपुच्छस्याकार इवाकारो यस्य तदेवम् गोपुच्छवत् क्रमवृत्तमित्यर्थः । अच्छिद्रं निर्विवरम् पार्श्वे मूलाग्रच्छिद्रव्यतिरिक्तच्छिद्ररहितमित्यर्थः । श्लक्ष्णं मसृणं कोमलम् । तथा ऋजु अवक्रम् । तथा गुलिकामुखं गुलिकासदृशं वर्तुलत्वान्मुखं यस्य तदेवम् । अतीक्ष्णाग्रमुखमित्यर्थः । अतीक्ष्णाग्रत्वाद् गुदं न क्षिणोतीति । अस्य च नेत्रस्य यद् गुदे प्रविशति तन्मुखम् । एवंभूतं नेत्रं वैद्यः कारयेत् ॥

अथास्य प्रमाणमाह—

**ऊनेऽब्दे पञ्च पूर्णेऽस्मिन्नासप्तभ्योऽङ्गुलानि षट् ॥ १० ॥**
**सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव ।**
**द्वादशैव परं विंशाद्**

ऊन इत्यादि । ऊनेऽब्देऽसंपूर्णे वत्सरे नेत्रस्य पञ्चाङ्गुलानि आतुराङ्गुलैः प्रमाणमिति गम्यते । दैर्घ्येणेत्यर्थात् । वक्ष्यति हि — 'स्वाङ्गुष्ठेन समं मूले स्थौल्येने'ति । अस्मिन्नब्दे प्रथमे वत्सरे पूर्णे आ सप्तभ्यः सप्त वर्षाणि मर्यादीकृत्य नेत्रस्य षडङ्गुलानि प्रमाणम् । आसप्तमाद् वर्षात् षडङ्गुलायाममित्यर्थः । आङ् मर्यादायां, नाभिविधौ । चेत् तथा सप्त वर्षस्यापि षडेवेति प्राप्नोति । वक्ष्यति च 'सप्तमे सप्ते'ति । एवं न पूर्वापरव्याहतं स्यात् । तस्मान्मर्यादायामेवाङिति । सप्तमे वर्षे सप्ताङ्गुलानि । द्वादशे वत्सरे तान्यङ्गुलान्यष्टौ ग्राह्याणि । नेत्रदैर्घ्य इति शेषः । द्वादशानां पूरणे इति 'तस्य पूरणे डट्' इति डट् । एवं षोडशे इत्यत्र षोडशे वर्षे नवाङ्गुलानि नेत्रम् । विंशे द्वादशाङ्गुलानि । विंशाद् वत्सरात् परमूर्ध्वमेकविंशतिप्रभृतिषु

वर्षेषु द्वादशाङ्गुलान्येव। नातोऽप्यधिकानीत्येवशब्दार्थः। विंशाद् वर्षात् परतो न प्रमाणे विकल्प इत्यर्थः। एवं नेत्रस्य दैर्घ्यमुक्तम्। विंशतिशब्दात्पूरणे डटि "ति विंशतेर्डिति" इति तिशब्दलोपे विंशशब्दः॥

वीक्ष्य वर्षान्तरेषु च॥ ११॥

वयोबलशरीराणि प्रमाणमभिवर्धयेत्।

वीक्ष्य वर्षान्तरेषु अन्तरावस्थितेषु वर्षेषु आन्तरालिकेषु वर्षेषु अष्टमनवमदशमादिषु प्रमाणमभिवर्धयेन्नेत्रस्येत्यर्थः। न केवलमान्तरेषु वर्षेषु प्रमाणमभिवर्धयेत्। वयोबलशरीराणि च वीक्ष्य निरूप्य प्रमाणं वर्धयेत्। चशब्दो भिन्नक्रमः। हृद्याकारोऽप्याह—'वर्षान्तरेषु अनुक्तेषु पञ्चदशसु वयोबलशरीराणि वयश्च बलं च शरीरं च निरूप्य नेत्रप्रमाणं वर्धयेत् क्षपयेद् वे'ति॥

स्वाङ्गुष्ठेन समं मूले स्थौल्येनाऽग्रे कनिष्ठया॥ १२॥

स्वेत्यादि। स्थौल्येन परिणाहेन स्वाङ्गुष्ठेन तुल्यं मूले नेत्रम्। स्वशब्देनातुरो गृह्यते। प्रतिपुरुषमङ्गुष्ठपरिणाहेन तुल्यमूले अग्रं प्रान्तः तस्मिन् आतुरस्य कनिष्ठयाङ्गुल्या समं नेत्रं स्यात्। यस्मिन् वस्तिर्बध्यते तन्मूलम्। यद् गुदे प्रविशति तदग्रम्। तत् कनिष्ठिकापरिणाहं मध्ये मध्याङ्गुलिसममित्यर्थात् सिध्यति। खरनादेऽप्यधिजगे—

'वस्तिनेत्रं मृदु श्लक्ष्णं प्रवृत्तं गुलिकामुखम्।
भवेद् गोपुच्छसंस्थानं सुप्रवाहं त्रिकर्णिकम्॥
*चतुर्भागप्रणयने मर्यादा कर्णिका भवेत्।
द्वे कर्णिके चोपरिष्टाद् बन्धाधाराय चान्तरे॥
स्वाङ्गुष्ठकपरीणाहं मूलं नेत्रस्य गम्यते।
मध्यं त्वनामिकातुल्यमग्रं तुल्यकनिष्ठिकम्॥
स्वेनाङ्गुलप्रमाणेन दैर्घ्यं स्याद् द्वादशाङ्गुलम्।'

इत्यादि॥ १२॥

नेत्रपरिणाहानुरूपं छिद्रं प्रदर्शयति। अथवा अधुना छिद्रप्रमाणवचनद्वारेण नेत्रस्थौल्यप्रमाणमधिकमपि दर्शयन्नाह—

पूर्णेऽब्देऽङ्गुलमादाय तदर्धार्धप्रवर्धितम्।
त्र्यङ्गुलं परमं छिद्रं मूले

---

* 'या त्रिभागप्रणयने' इति अरुणदत्तस्य अष्टाङ्गहृदयव्याख्यातुरभिमतः पाठः

**पूर्ण** इत्यादि । अब्दे वर्षे पूर्णे सत्यङ्गुलमादाय आतुरस्य स्वाङ्गुलात् प्रभृति क्रमेण त्र्यङ्गुलं छिद्रं मूले नेत्रस्य भवति । किं भूतं छिद्रम् । अर्धस्यार्धमर्धार्धं तस्याङ्गुलस्यार्धार्धं तदर्धार्धम् । तेन प्रवर्धितम् । तत्र प्रथमे वर्षे पूर्णे आतुरस्यैकाङ्गुलप्रमाणं छिद्रं भवति यावद्वर्षाणि षट् । अङ्गुलपरिमाणं कुटिलीकृतवस्तु यस्य मूलच्छिद्रे प्रविशति तत् तथोक्तम् । सप्तमे वर्षे सपादमङ्गुलं यावदेकादशवर्षाणि । द्वादशे वर्षे सार्धमङ्गुलं यावत् षोडशवर्षाणि । षोडशवर्षस्य तु पादोनमङ्गुलद्वयम् । सप्तदशेऽङ्गुलद्वयम् । अष्टादशे वर्षे सपादमङ्गुलद्वयम् । एकोनविंशतिवर्षस्य सार्धमङ्गुलद्वयम् । विंशतिवर्षस्य पादोनमङ्गुलत्रयम् । एकविंशतिवर्षस्य त्र्यङ्गुलं छिद्रमिति क्रमो बोद्धव्यः । अथवा तदर्धार्धप्रवर्धितमित्यस्यायमर्थः । अर्धेनार्धेन प्रवर्धितमिति । अङ्गुलात् प्रभृति अर्धमर्धमङ्गुलं गृहीत्वा त्र्यङ्गुलं यावद्वर्धयेदित्यर्थः । पूर्णेऽब्दे एकमङ्गुलं सप्तमे सार्धमङ्गुलं द्वादशे द्व्यङ्गुलं षोडशे सार्धद्व्यङ्गुलं विंशतिप्रभृति त्र्यङ्गुलमिति । ऊनवर्षस्याप्यर्धाङ्गुलं छिद्रं एतदपेक्षया कल्प्यमित्यूह्यम् । परममित्युत्कृष्टम् । अतोऽधिकं निषिध्यते । त्र्यङ्गुलात् किञ्चिन्न्यूनं ग्राह्यमित्यभिप्रायः । त्र्यङ्गुलपर्यन्तच्छिद्रमिति सङ्ग्रहग्रन्थस्यार्थः । पर्यन्तशब्दोऽवसानवचनः, पर्यन्तशब्दोऽवधौ च वर्तते । अङ्गुष्ठमुद्रिकायां त्र्यङ्गुलं छिद्रमित्यन्ये । अथवा परममित्यनेनैतद् गमयति । परमुत्कर्षमाश्रित्य इदं मूलच्छिद्रम् । मध्यमं तु मूलच्छिद्रं स्वाङ्गुष्ठेनेत्यनेनोक्तम् इति । अङ्गुलिशब्दो मध्यमाङ्गुलिवचनः । मध्यमाङ्गुलेरन्तर्भागस्तिर्यङ्गमितास्त्रिगुणितः त्र्यङ्गुलमित्युच्यते ॥

ऽग्रे वहते तु यत् ॥ १३ ॥

**मुद्गं माषं कलायं च क्लिन्नं कर्कन्धुकं क्रमात् ।**

**अग्र** इत्यादि । अग्रे तु छिद्रं तद् भवति यन्मुद्गादीन् क्रमाद् वहति । मुद्गादिप्रवेशयोग्यमग्रच्छिद्रमित्यर्थः । तत्र वार्षिकस्य मुद्गवाहि यावत्षड्वर्षम् । सप्तवर्षस्य माषवाहि । द्वादशवर्षस्य कलायवाहि । षोडशवर्षस्य स्विन्नकलायवाहि । एकविंशतिवर्षस्य कर्कन्धुवाहीति । ऊनवर्षस्य वनमुद्गवाहीति कल्प्यम् मुद्गशब्देन वनमुद्गस्यापि ग्रहणात् । अथवा तुशब्देन पञ्चाङ्गुलसमे नेत्रे वनमुद्गप्रवेशाग्रत्वं संग्रहोक्तं सूच्यते । 'अग्रच्छिद्रप्रमाणं चैतदग्रे कनिष्ठया" इत्यत्रापि संगच्छत एव । दैर्घ्येण प्रमाणं चात्र पक्षे पूर्वमेव योज्यम् । "स्वाङ्गुष्ठेन समं मूले स्थौल्येने"त्यत्र छिद्रप्रमाणं स्वमत्या सद्भिषजा कल्प्यम् । तथा

त्र्यङ्गुलं छिद्रमित्यत्र च स्थौल्यप्रमाणं स्वधियैव निरूप्यम् । तन्त्रकृता तु ग्रन्थगौरवभयादुक्तप्रायत्वाच्चेह नोक्तम् ॥

कर्णिकास्थानमाह —

**मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम् ॥ १४ ॥**
**वर्त्याग्रे पिहितं मूले यथास्वं द्व्यङ्गुलान्तरम् ।**
**कर्णिकाद्वितयं नेत्रे कुर्यात्**

**मूलेत्यादि** । कर्णिका नाम मुद्रिका कर्णिकाकृतित्वात् छत्राकारा गुदप्रवेशमर्यादा भित्तिः, गुदाधिकान्तःप्रवेशनिरोधनी च ज्ञेया । **मूले** यत् छिद्रं यथास्वमुक्तमंगुलादि तत्प्र**माणेन प्रान्ते** अग्रे घ(तिसा ? टिता) सम्पादिता कर्णिका यस्मिन् तदेवम् । यावान् मूलच्छिद्रः तावन्तमग्रे विमुच्य तत्सीम्नि कर्णिकां कारयेत् । परमं छिद्रं नेत्रे त्र्यङ्गुलम् । त्रीण्यङ्गुलान्यग्रे विमुच्य गुदप्रवेशमर्यादाभित्तियुक्तं करणीयमित्यर्थः । एवमन्येषामपि त्र्यङ्गुले कर्णिका कार्येति सर्वेषामभिप्रेतमेव । तथा हि सुश्रुतोऽपि त्र्यङ्गुलसंनिविष्टकर्णिकमिति व्याचष्ट । ननु सर्वैरपि नेत्रप्रान्ते कर्णिका चतुरङ्गुले क्रियते तत् कथमिति, दूरप्रणिधानात् स्नेहस्यानुद्गमनं भवतीति मत्वा तथा क्रियते । अपि च कायचिकित्सितप्रधानस्य भट्टारहरिश्चन्द्रस्य कृतिरिति प्रसिद्धे खरनादेऽपि प्रोक्तत्वाच्च । तत्रैवमधिजगे—

'वस्तिनेत्रं मृदु श्लक्ष्णं सुवृत्तं गुळिकामुखम् ।
भवेद् गोपुच्छसंस्थानं सुप्रवाहं त्रिकर्णिकम् ॥
चतुर्भागे प्रणयने मर्यादा कर्णिका भवेत् ।
द्वे कर्णिके चोपरिष्टाद् वस्त्याधारे यवान्तरे ॥
स्वाङ्गुष्ठकपरीणाहं मूलं नेत्रस्य शस्यते ।
मध्यं स्वानामिकातुल्यमग्रं तुल्यकनिष्ठिकम् ॥
स्वेनांगुलप्रमाणेन दैर्घ्यं स्याद् द्वादशाङ्गुलम् ।
कर्कन्धुप्रवहच्छिद्रं श्रेष्ठमन्यद् यथा वयः ॥'

इति । एतत्पक्षमवलम्ब्य मूले कर्णिकाद्वितयं च यवान्तरं क्रियते । तथा वर्त्या घनचेलदशयाग्रे पिहितं स्थगितं लूतादिप्रवेशपरिहारार्थं वस्तौ भेषजक्षेपकाले तदप्रवृत्त्यर्थं च तथा यथास्वमूनवर्षादिकस्य तदङ्गुलप्रमाणेन द्व्यङ्गुलान्तरं

कर्णिकाद्वितयं कुर्यात्। यथास्वं द्व्यङ्गुलान्तरं यस्य यस्य ऊनवर्षादिकस्य यद् यदंगुलद्वितयं तावत्प्रमाणमन्तराळं कृत्वा कर्णिकायुगळं कारयेद् वस्तिपुटयोजनार्थम्। आगमो हि—'स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे' इति॥

अत एवाह—

तत्र च योजयेत्॥ १५॥

अजाविमहिषादीनां वस्तिं सुमृदितं दृढम्।
कषायरक्तं निश्छिद्रग्रन्थिगन्धसिरं तनुम्॥ १६॥
ग्रथितं साधु सूत्रेण सुखसंस्थाप्यभेषजम्।
वस्त्यभावेऽङ्कपादं वा न्यसेद्वासोऽथवा घनम्॥ १७॥

तत्रेत्यादि। तत्र कर्णिकाद्वितये अजादीनां वस्तिं प्रयोजयेत्। आदिशब्देन वृषवराहादीनां ग्रहणम्। तेषां वस्तिः। अजादीनामित्येवं निर्देशेऽप्यविमहिषग्रहणे लब्धे साक्षादेतयोर्ग्रहणमन्येभ्यो वोस्तभ्य एतद्वस्तेर्योग्यतरत्वप्रतिपादनार्थम्। किंभूतं वस्तिं— सुमृदितं सस्नेहमुद्दैः सम्यङ् मर्दितम्। तथा दृढं स्थिरं, तथा कषायेण हरीतक्यादिना रक्तम्। अथवा कषायेण लाक्षागैरिकादिना रक्तं राञ्जितम्। तथा निश्छिद्रग्रन्थिगन्धसिरं छिद्रादीनां द्वन्द्वः, ता न सन्ति यत्र स एवम्। आच्छिद्रग्रन्थीति वा पाठः। तनुमच्छमस्थूलम् अबहळमित्यर्थः। तथा साधु सम्यक् सूत्रेण ग्रथितं बद्धं तथा सुखेनाकृच्छ्रेण संस्थापनीयमौषधं यतस्तं सुखेन औषधं संस्थापयितुं शक्यम्। वस्तेरभावे सत्यङ्कपादं छागोरआद्यवयवविशेषं वा न्यसेत्। 'विपाटितमेषपादकृत्तिरङ्कपाद' इतीन्दुः। 'अङ्कपादमि'ति केषांचित् पाठः। अङ्कपादश्चर्मपर्यायः। उक्तं च निघण्डौ—

"त्वग् वल्को वल्कलं जली छुरीच्छदनकं छदः।
अङ्कपादोऽजिनं चर्म समार्थाः कृत्तिरेव च॥"

इति। अथवा वासो वस्त्रं सूक्ष्मतान्तवं मधूच्छिष्टोपदिग्धत्वाद् घनं न्यसेत्। आगमो हि—

"वस्तेरभावे प्लवनीगलो वा
स्यादङ्कपादः सुघनः पटो वा।"

इति । प्लवनी जलशकुन्तः । अङ्गपादं चर्मेति पाठ्यकारः ॥ १५-१७॥

अधुना प्रदेयस्यौषधस्य मात्रोच्यते—

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरात्परम् ।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥ १८ ॥
प्रसृतं वर्धयेदूर्ध्वं द्वादशाष्टादशस्य च ।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ १९ ॥

निरूहेत्यादि । प्रथमे वर्षे निरूहस्यास्थापनस्य मात्राः प्रकुञ्चः पलं कषायस्नेहादिसहितस्य पलप्रमाणं षण्मासादौ त्वेतदनुसारेणार्धपलादि कल्प्यम् । वर्षात् परं प्रकुञ्चेन वृद्धिः प्रतिवत्सरं कार्या यावत् षट् प्रसृता भवन्ति द्वादशे वर्षे षट्प्रसृता इत्यर्थः । द्वादशपलानि हि षट् प्रसृताः, 'द्वे पले प्रसृतः' इति वचनात् । तत ऊर्ध्वं प्रत्यब्दं प्रसृतं वर्धयेत् । प्रत्यब्दमित्यनुवर्तते । ततो द्वादशवर्षस्य द्वादशपलानि । अनन्तरं त्रयोदशवर्षादिषु प्रतिवर्षं पलद्वयं निरूहमात्रायां वर्धयितव्यम् । क्रमेण यावदष्टादशवर्षस्य द्वादश प्रसृताः चतुर्विंशति पलानि । आसप्ततेरिदं मानम् अष्टादशप्रभृति सप्ततिवर्षाणि यावदिदमेवास्थापने मानं प्रमाणम् । एतावती मात्रा । द्वादश प्रसृता इत्यर्थः । परं सप्ततेरूर्ध्वं यावज्जीवं दशैव प्रसृता मात्रा नाधिकम् इति । 'वयोबलाग्निक्षयतो मात्राहानिः क्रमाद् भवेत्' इति । सा युक्तिसिद्धत्वान्न स्फुटं प्रतिपादिता ॥ १८-१९ ॥

अनुवासनमात्रामाह—

यथायथं निरूहस्य पादो मात्रानुवासने ।
आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः ॥ २० ॥
अन्वासनार्हं विज्ञाय पूर्वमेवानुवासयेत् ।
शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा ॥ २१ ॥
अभ्यक्तस्नातमुचितात्पादहीनं हितं लघु ।
अस्निग्धरूक्षमाशितं सानुपानं द्रवादि च ॥ २२ ॥
कृतचंक्रमणं मुक्तविण्मूत्रं शयने सुखे ।
नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः ॥ २३ ॥
संकोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम् ।

यथायथमित्यादि । यथायथं यथास्वं प्रथमवर्षादिषूक्तस्य निरूहस्य पादश्चतुर्भागः अनुवासनाविषये मात्रा भवति । यस्य यस्य या या भेषजमात्रा

वस्तौ विहिता तस्यास्तस्याश्चतुर्भागो मात्रानुवासनस्य। यस्य पलं निरूहः तस्य कर्षप्रमाणमनुवासनमित्यर्थः। एवं सर्वत्र कल्प्यम्। आगमो हि 'निरूहपादांशसमेन तैलेनान्वास्य' इति। अनुवसन्नपि न दुष्यति। अनुवासरं वा दीयत इत्यनुवासनम्। आस्थाप्यं निरूहयोग्यं पुरुषं स्निग्धं तथा स्विन्नं शुद्धं चोर्ध्वाधः तथा भूयोऽपि संसर्जनक्रमेण लब्धबलं तथा अन्वासनयोग्यं विदित्वा पूर्वमेव निरूहात् प्रागेवानुवासयेत। अन्वासनार्हं इत्यनेनैतद् दर्शयति—'कृतानुवासन एवास्थाप्य' इति हाटकः। निरूहयोग्याश्च केचिदननुवास्याः कामिलादयः सन्तीत्यतोऽन्वासनार्हं विज्ञायेत्युक्तम्। 'अन्वासनानर्हस्त्वकृतानुवासन एवास्थाप्य' इतीन्दुः। अनुवासने कालविशेषमाह— शीते शैत्यवति काले हेमन्तशिशिरयोर्ऋत्वोः तथा वसन्ते च दिवा अनुवासयेत्। ततोऽन्यदा शीतवसन्तादन्यस्मिन् काले ग्रीष्मप्रावृट्शरदाख्ये ऋतुत्रये रात्रावनुवासयेत्। केचिदिति भिन्नक्रमः ततोऽन्यदेत्यनन्तरं द्रष्टव्य इति। केचिद् आहुरिति वाक्यशेषः। ततोऽन्यदा रात्रावनुवासयेदिति केचिदाहुरिति। सर्वदा दिवस एवानुवासनमिति स्वपक्षः। धन्वन्तरीयास्तु—सर्वथैव रात्रावनुवासनं नेत्याहुः। धन्वन्तरिमतमेवोररीकृत्य सङ्ग्रहेऽभिजगे—

'न रात्रौ प्रणयेत् स्नेहं दोषोत्क्लेशो हि रात्रितः।
स्नेहवीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम्॥'

इति। तद् देशातुरादिवशात् प्रमाणयितव्यम्—

'वह्निस्थानगते दोषे वह्नौ चान्नरसाश्रिते।
स्फुटस्रोतोमुखं देहं स्नेहौजः परिसर्पति॥
अल्पपित्तकफं रूक्षं भृशं वातरुजार्दितम्।
भुक्तजीर्णाशनं कामं रात्रावप्यनुवासयेत्॥'

केवलानिलपीडितं स्वशुद्धमनिरूपितवेलमप्यनुवासयेत्। आत्ययिकत्वात् तस्येति। किम्भूतं नरम्। अभ्यक्तस्नातं पूर्वमभ्यक्तं पश्चात् स्नातमुष्णाम्बुना। 'पूर्वकालैक—' इति समासः। उचितादभ्यस्तादन्नात् पादहीनं चतुर्थांशहीनमन्नमशितं भुक्तवन्तं तथाविधं हितं लघुगुणयुक्तं च तथा अस्निग्धरूक्षं किञ्चित् स्निग्धरूक्षम् सानुपानं द्रवादि द्रवपूर्वम्। आदिशब्देन स्नेहविध्युक्तमनुवदति। 'द्रवोष्णमनभिष्यन्दी'त्यादिविशिष्टं च भुक्तवन्तमित्यर्थः। अतिस्निग्धातिरूक्षाशनस्य दोषस्तस्मादीषत्स्निग्धरूक्षमित्युक्तम्। उक्तं च सङ्ग्रहे—'अतिस्निग्धाशिनो ह्यु-

भयमार्गसंसर्गात् स्नेहो मदमूर्च्छाग्निसादहृल्लासान् जनयति। रूक्षाशिनोऽतिविष्टम्भं बलवर्णहानिं वा अल्पमात्रद्रवाशिनो न तदावरणं स्यादि'ति। किंभूतं कृतचङ्क्रमणं विहितगमनमात्रं ततः शयने संविष्टं शयितं कृत्वा अनुवासयेदिति संबन्धः। किम्भूते सुखावहे नात्युच्छ्रिते नात्युन्नते नचोच्छीर्षे नोन्नतशिरोभागे किञ्चिदुन्नतपाददेशे 'प्राक्छीर्षकं शुक्लपट्टोत्तरीयं शयनं प्रशस्तम्' इत्यागमात्। कथं संविष्टं वामपार्श्वतः वामपार्श्वेन। तृतीयार्थेऽत्र तसिल्। दक्षिणं सक्थि दक्षिणं पादं सङ्कोच्य वामसक्थ्युपरिष्टादिति वृद्धवैद्याः। ततो दक्षिणसक्थ्नोऽपरं वामं सक्थि प्रसार्य। सङ्ग्रहे चोक्तम्—'शयने नात्युच्छ्रिते ईषदुन्नतपादे वामपार्श्वे प्राक्शिरसं संवेशयेदिति। वामपार्श्वशयने गुणावहत्वम्। आगमो हि

'वामाश्रयोऽग्निर्ग्रहणी गुदश्च
तत्पार्श्वसंस्थस्य गुदोपलब्धिः।
लीयन्त एवं वलयश्च यस्मात्
सव्यं शयानोऽर्हति वस्तिदानम्॥'

गुदोपलब्धिः सुखेन गुदप्राप्तिः। स्नेहस्य स्थूलान्त्रप्रतिबन्धाभावाद् वलयोऽपिह्रियन्त इति॥

अथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे॥ २४॥
उच्छ्वास्य वस्तेर्वदनं बद्धे हस्तमकम्पयन्।
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम्॥ २५॥
नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत्।

अथेत्यादि। अस्यैवंभूतस्यातुरस्य स्वबाहूपधानस्य शयानस्य घृतेन स्निग्धे गुदे पायौ स्निग्धमुखं नेत्रं पृष्ठवंशं प्रति पृष्ठवंशाभिमुखं पृष्ठवंशानुपूर्व्या नातिद्रुतविलम्बितं च हस्तमकम्पयन् प्रणयेत्। वस्तेर्वदनमुच्छ्वास्य विकास्य विवृतं कृत्वा बद्धा वस्तिमुखगतं वातं विमुच्य बद्धेत्यर्थः। यथार्हौषधविपक्वं स्नेहमासिच्य वस्तिमुखमुच्छ्वास्य सूत्रादिना निर्वलीकं बद्ध्वा नातिवेगं न वा मन्दं नातिवेगेन न च मन्दं कृत्वा सकृदेव एकग्रहणेनैव प्रपीडयेत्। नातिवेगं नातिमन्दं च एकवारमेव पीडयेत्। सकृद्ग्रहणं स्थित्वा स्थित्वा प्रपीडननिषेधार्थम्। न धाराविच्छेदोऽन्तरा कर्तव्य इत्यर्थः। पृष्ठवंशानुपूर्व्या(मेव?वै)परीत्येऽतिवेगमन्दप्रपीडने च सदोषत्वम्। तथाचागमः—

---

१. 'द्रवाशीनो विसृष्टविण्मूत्रस्य चानावृतेन तदावृततायापदम्', २. 'नात्युच्छ्रिते स्वास्तृते ईषत्' इति मुद्रितसङ्ग्रहपाठः.

"तिर्यक् प्रणीते तु न याति धारा गुदे व्रणः स्याच्चलिते च नेत्रे ।
दत्तः शनैर्नाशयमेति वस्तिः कण्ठं प्रधावेदतिपीडितश्च ॥"

इति ॥

**सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ २६ ॥**

सावशेषं च स्नेहं कुर्वीत वस्तौ किञ्चिदौषधशेषं कुर्यात् । कुतो हेतोरित्याह — हि यस्मात् शेषे स्नेहे औषधे वायुस्तिष्ठति नान्तः प्रविशति तस्मात् सावशेषं कुर्वीत ॥ २६ ॥

**दत्ते तूत्तानदेहस्य पाणिना ताडयेत्स्फिजौ ।
तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ २७ ॥**

दत्ते च स्नेहे सत्युत्तानदेहस्य स्फिजौ पाणिना हस्ततलेनाहन्यात् उत्तानदेहस्येति विधिपरम् । दत्ते औषधे उत्तानगात्रः स्यादिति । तथा तेनैव प्रकारेण तत्पार्ष्णिभ्यामातुरपार्ष्णिभ्यां स्फिजौ ताडयेत् । तथा शय्यां खट्वां चातुरस्य पादतश्चरणोद्देशात् त्रीन् वारानुत्क्षिपेन्न तु पूर्वतः । 'तथेत्यस्योभयत्राप्यन्वयः' इति हृद्याकारः । तथा ताडयेत् तथा शय्यामुत्क्षिपेदिति ॥ २७ ॥

**ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।
आहन्यान्मुष्टिनाङ्गं च स्नेहेनाभ्यज्य मर्दयेत् ॥ २८ ॥**

**वेदनार्तमिति स्नेहो नहि शीघ्रं निवर्तते ।
योऽन्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्न कार्यकृत् ॥ २९ ॥**

ततः शय्योत्क्षेपादनन्तरं, प्रसारिताङ्गस्य सोपधानस्य कृतोपधानस्य पार्ष्णिके पार्ष्णी द्वे । मुष्टिना आहन्यात् । अङ्गं च शरीरं वेदनार्तं, स्नेहेन तैलादिनाभ्यज्य मर्दयेत् । गात्रावयवत्वेऽपि पार्ष्ण्यादीनां पृथग्ग्रहणं मर्दननियमार्थम् । अङ्गस्य शेषस्य तु वेदनायां सत्यामेव मर्दनमिति । वेदनार्तमिति हेतुगर्भम्—पीडातुरत्वादभ्यज्य मर्दयेत् इति । एवं कृते सत्यन्तर्दत्तः स्नेहो बहिराशु शीघ्रं न निवर्तते । समन्तात् गच्छति च । समन्तात् सिराः । अर्धदत्ते स्नेहे विडादिवेगे सति नेत्राग्रं गुदादपनीय तेषां वेगनिस्सरणानन्तरं शेषं स्नेहं पीडयेत् । तथाचागमः —

"विड्वातवेगो यदि चार्धदत्ते निष्कृष्य मुक्ते प्रणयेत शेषम् ।"

इति । शीघ्रनिवृत्ते च स्नेहे सत्यन्यः स्नेहो योज्यः । विनामयेन स्वकालात् पूर्वं स्नेहे निर्गते अपरः स्नेहो देयः । कस्मादेवं विधीयत इत्याह— अतिष्ठन्न कार्यकृदिति । स्नेहः शरीराभ्यन्तरे अतिष्ठन्नेव कार्यकरः । अन्तर्वर्तमान एव स्नेहो वातशमनादिकं स्नेहनकार्यं करोतीति ॥ २८-२९ ॥

भोजनवेलामाह —

दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु ।

दीप्तेत्यादि । तुर्विशेषे । आगतस्नेहं शरीरान्निर्गततैलादिकं सन्तं पुरुषं दीप्ताग्निं सायाह्नेऽपराह्णे लघु मात्रया स्वभावत आशयेत् । अदीप्ताग्निं द्वितीयेऽहनि भोजयेत् । अनागतस्नेहमास्नेहपरिणामं न भोजयेत् । लघु पेयादिकमिति हृद्याकारः ॥

निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ॥ ३० ॥

अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।
तीक्ष्णैर्वा वस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये ॥ ३१ ॥

स्नेहस्य त्रयो यामाः प्रहराः परम उत्कृष्टो निवृत्तिकालः । अथवा अत्र सार्धसप्तनाडिकालक्षणो यामः । ते त्रयो ग्राह्याः, न प्रहरलक्षणः । कथमवगम्यत इति चेत्— उच्यते । 'त्रिषु यामेष्वतीतेषु यदि स्नेहः पुनरपि न निरेति पश्चादहोरात्रमुपेक्षेत' इति वचनात् ज्ञायते— महतां यामानां ग्रहणमिति । ततः प्रहरत्रयात् परतो रात्रिन्दिवमुपेक्षेत । न तदाकृष्टौ यत्नं कुर्यात् । परतः अहोरात्रादुपरिष्टात् फलवर्तिभिरुदावर्तचिकित्सोक्ताभिः । अथवा तीक्ष्णैः कल्पोक्तैर्वस्तिभिः स्नेहनिवृत्तये स्नेहस्य बहिरागमनाय प्रयत्नं कुर्यात् ॥ ३०-३१ ॥

अस्यापवादमाह —

अतिरौक्ष्यादनागच्छन्नचेज्जाड्यादिदोषकृत् ।
उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत् ॥ ३२ ॥

प्रातर्नागरधान्याम्भः कोष्णं केवलमेव वा ।
अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ॥ ३३ ॥

**यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान्।
व्यायामनित्यान्दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥ ३४ ॥**

अतिरौक्ष्यादनागच्छन् स्नेहो जाड्याग्निसादादिदोषं यदि न विधत्ते तत उपेक्षेतैव न तन्निष्कासने यतेतेत्यर्थः। निशामध्युषितो नरः स्नेहजरणाय वातकफोपशान्तये प्रातःशुण्ठीधान्यकाम्बु कदुष्णं पिबेत्। केवलमेव वा नागरधान्यरहितं कोष्णं जलं पिबेत्। 'अध्युषितो रात्रिं यतः स्नेहः ततः परिणतत्वाद् रसादिधातुसमतां गत' इत्यरुणदत्तः। ततोऽन्नकाले यथोक्तमश्नीयात अनुवासनात् पुनरनुवासनमुच्यते — तृतीये पञ्चमे वाहनि। तत्र तृतीयमहः समर्हप्रत्यपेक्षं, पञ्चमं तु पित्तश्लेष्मापेक्षम्। प्रतिवासरमिति। तमातुरं पुनस्तृतीयेऽह्नि पञ्चमे वाह्नयनुवासयेत्। विषमदिवसेष्वनुवासनं मङ्गलार्थम्। यथावा अथवा स्नेहपाको यथा भवेत् तथाग्न्यपेक्षया सप्तरात्रेऽधिके वा त्रिरात्रे ऊने वा यथायोग्यमनुवासयेत्। यथावा स्नेहपक्तिरिति पाठः। 'अतोऽस्माद्धेतोः। यतः स्नेहपाकपरतन्त्रमनुवासनविधानमतोऽधिकपवनान् रूक्षांश्च पुरुषान् प्रतिदिनमनुवासयेत्। अत्युल्बणमारुतादीनां पुंसां स्नेहस्य पक्तिर्द्रुतं भवतीति प्रतिवासरमनुवासनं कर्तव्यम् ॥ ३२-३४ ॥

**इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ ३५ ॥**

इति पूर्वोक्तेन प्रकारेण स्नेहैस्त्रिभिश्चतुर्भिर्वा अनुवासनैः स्निग्धे शरीरे सति स्रोतोविशोधनार्थं निरूहं योजयेत्। अस्निग्धे ईषत् स्निग्धे सति शरीरे तनोः शरीरस्य स्नेहनं निरूहं योजयेत्। अनुवासनैः स्निग्धे शरीरे शोधनो वस्तिः, अस्निग्धे शरीरे स्नेहसहित इत्यर्थः। त्रयो वा चत्वारो वा त्रिचतुराः, 'संख्ययाव्यया—' इति समासः। चतुरोऽच्प्रकरणे 'त्र्युपाभ्यामुपसङ्ख्यानम्' इत्यच् समासान्तः ॥ ३५ ॥

निरूहप्रणयनकालमाह —

**पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥ ३६ ॥**

**अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ।**
**अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ॥ ३७ ॥**

**वस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह ।**

**अथशब्दो** मङ्गलार्थः आनन्तर्यार्थो वा । अथानुवासनादनन्तरम् अनुवासनस्य पञ्चमे तृतीये वा वासरे साधके नक्षत्रे आतुरजन्मनक्षत्रस्य षष्ठे अथवा साधके फलस्यानुकूले नक्षत्र इत्यर्थः । **मध्याह्ने किञ्चिदावृत्ते** परिवृत्ते । मध्यन्दिने किञ्चिदतिक्रान्ते सतीत्यर्थः । **बलिमङ्गले प्रयुक्ते** विहिते सति । बलिरन्नमांसादिभिर्विघ्नशान्त्यर्थः । मङ्गलं स्वस्त्ययनादिकम् । पुरुषमभ्यक्तस्वेदितोत्सृष्टमलं कृत्वा । **उत्सृष्टमलं** त्यक्तमलम् । **नातिबुभुक्षितं** किञ्चिद् बुभुक्षितम् ईषज्जातबुभुक्षं तथा प्रकृत्यादिभिः **पुरुषमवेक्ष्य** ज्ञात्वा । अवेक्ष्य प्रकृत्यादीनीत्यर्थः । दोषादीनि च विदित्वा । आदिशब्देन सात्म्यबलदेशकालादिपरिग्रहः । आदरशब्दो निरूहस्य सापायत्वात् । इत्येवं सर्वमवगत्य वैद्यो वस्तिं **प्रकल्पयेद्** योजयेत् । ननु 'दूष्यं देशमि'त्यादिना सर्वमुक्तमेव । तत् किमनेनेति । ब्रूमः । निरूहमपि सापायं पश्यतैतदाचार्येण पुनरुक्तं, दूष्यादि महता यत्नेनात्रालोचनीयमिति प्रतिपादनार्थम् 'निरूहमात्रा प्रथम' इत्यादि सर्वमत्रालोच्यम् , **तद्विद्यैर्वैद्यकशास्त्रज्ञैः** । अथवा तच्छब्देन वस्तिः परामृश्यते । तद्विद्यैर्वस्तिविद्भिर्बहुभिर्वैद्यैरमत्सरैः सार्धं प्रकल्पयेत् ॥

अथ निरूहकल्पनामाह —

**क्वाथयेद्विंशतिपलं द्रव्यस्याष्टौ फलानि च ॥ ३८ ॥**

**क्वाथयेदित्यादि** । **द्रव्यस्य** वस्तिकल्पोक्तस्य विंशतिपलानि अष्टौ फलानि च सामान्यपरिभाषया षोडशगुणं जलं दत्त्वा क्वाथयेत् । चतुर्भागावशेषं च ग्राह्यम् । अष्टौ फलानि चेत्यत्र चकारेण पलमात्रं मदनफलानां ग्राह्यमिति द्योतयति । अर्थः— द्रव्यस्य वस्तिकल्पोक्तस्य विंशतिपलं मदनफलाष्टकं च पानीयपलशतत्रये षट्त्रिंशदधिके प्रक्षिप्य चतुरशीतिपलशेषं कृत्वा क्वाथयेत् ॥ ३८ ॥

इति क्वाथकल्पः ।

**ततः काथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।**
**पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफाधिके ॥ ३९ ॥**
**सर्वत्र चाष्टमं भागं कल्काद् भवति वा यथा ।**
**नात्यच्छसान्द्रता वस्तेः**

निरूहमात्राधिकारः । स द्विविधः समुदायावयवभेदात् । इदानीमवयवस्योच्यते । ततस्तस्मादेवं कृतात् **काथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।** अष्टादशवर्षं पुरुषमारभ्य यावत्सप्ततिवर्षं द्वादशप्रसृतो निरूहः । तत्र स्नेहं चतुर्थांशं षट्पलिकं वातेऽधिके कल्पयेत् । पित्तेऽधिके **स्वस्थे** च पुरुषे षष्ठांशं स्नेहं चतुष्पलिकं, कल्पयेदिति प्रकृतम् । कफेऽधिकेऽष्टमांशं स्नेहं त्रिपलिकं कल्पयेत् । षट्चतुस्त्रिपलसंमिताः स्नेहा वातादिषु योज्या इत्यर्थः । अथवास्मादेवं कृतात् काथाच्चतुर्थांशमेकविंशतिपलानि वाते स्नेहस्य क्षिपेत् । पित्ते स्वस्थवृत्ते च चतुर्दशपलानि काथात् षष्ठांशं स्नेहस्य क्षिपेत् । कफे काथादष्टमांशं दश सार्धपलानि स्नेहस्य क्षिपेत् इति । हाटकस्यायं पक्षः—"सर्वत्र वाते पित्ते श्लेष्माणि स्वस्थवृत्ते चाष्टमं भागं त्रीणि पलानि कल्कस्य कल्पयेत् काथादष्टमभागं सार्धदशपलानि कल्कात् क्षिपेदि"ति । भवतीत्यादि । यथा वा वस्तिरत्यच्छोऽतिसान्द्रोऽतिघनो न भवति, तथा कल्कः कल्पयितव्यः । यावता कल्केन संयुक्तोऽत्यच्छोऽतिसान्द्रो वा न भवति निरूहः तावान् कल्को भाव्य इत्यर्थः । ननु स्वस्थस्य दोषचालनं प्रतिषिद्धं तन्त्रान्तरीयैः—तद्ग्रन्थो हि—

"यो हि सञ्चलयेत् सुप्तं वने सिंहं करादिभिः ।
स दोषांश्च्यावयेत् स्वस्थान् प्रच्छर्दनविरेचनैः ॥"

इति । तस्मात् स्वस्थवृत्ते निरूहस्य कल्पना न युक्तैव । तदेतदसत् । यस्मात् भगवताभ्यधायि— "शीतोद्भवं दोषचयं वसन्ते विशोधयन्" इत्यादि । तदेतस्मादाचार्यवचनाद् ज्ञायते स्वस्थवृत्तेऽपि शुद्धिविधानं मतमेव तन्त्रकारस्येति । तन्त्रान्तरीयमतं त्वसदेव सद्व्यवहारविरुद्धत्वात् ॥

**पलमात्रां गुडस्य च ॥ ४० ॥**

**मधुपट्वादिशेषं च युक्त्या**

**पलमात्रां गुडस्य चेति ।** मात्राग्रहणेन किञ्चिदधिकत्वं न्यूनत्वं वा दर्शयति । पित्ते तदधिकानुज्ञानार्थं मात्राग्रहणमिति हाटकोऽरुण-

दत्तश्च। मधुपट्वादि द्रव्यं च शेषमनुक्तं युक्त्या दोषाद्यपेक्षया कल्पयेत्। आदिशब्देन यवक्षारक्षीरमूत्रमस्त्वारनालमांसरससुराशुक्तादीनां ग्रहणम्। तत्रेयं युक्तिः— माक्षिकस्य पलचतुष्टयं सैन्धवस्य च कर्षः कचिद् यवक्षारस्येत्यादि॥

सर्वं तदेकतः।

उष्णाम्बुकुम्भीबाष्पेण तप्तं खजसमाहतम्॥ ४१॥

प्रक्षिप्य वस्तौ प्रणयेत्पायौ नात्युष्णशीतलम्।

नातिस्निग्धं न वा रूक्षं नातितीक्ष्णं न वा मृदु॥ ४२॥

नात्यच्छसान्द्रं नोनातिमात्रं नापटु नाति च।

लवणं तद्वदम्लं च

तदेतत् सर्वमौषधमेकत एकस्मिन् कृत्वा भेषजस्य पाकातिक्रान्तिपरिहारार्थमुष्णाम्बुकुम्भीबाष्पेण तप्तमौषधस्य विदाहानुत्पत्त्यर्थमुष्णजलबाष्पतापमात्रं कर्तव्यमित्यर्थः। खजेन मन्थानेन समाहृतमालोलितम्। खजो मन्थानः पञ्चाङ्गुलो वा हस्तः। 'दर्वी'त्यरुणदत्तः। खजप्रमथनात् क्काथादयः सम्यक् संयुक्ताः सम्यग् योगमारभन्ते तथा 'ब्रह्मदक्षे'त्यादिना चाभिमन्त्रितम्। वस्तौ प्रक्षिप्य आवाप्य पायौ गुदे प्रणयेत्। नात्युष्णशीतलं नात्युष्णं नातिशीतम्। नातिशब्दप्रयोगादत्र मध्यमावस्थानुगमः। एवमुत्तरत्रापि। नातिस्निग्धं न वातिरूक्षं नातितीक्ष्णं नातिमृदु (तथातिनाच्छं ? तथा नात्यच्छं) नातिसान्द्रं नातिघनं नोनं नातिमात्रं नापटु नालवणं न चातिलवणम्। तद्वदम्लं चेति नानम्लं नात्यम्लम्। एवं भूतं ब्रह्मेत्यादिनाभिमन्त्रितमनुरूपप्रमाणं वस्तौ प्रक्षिप्य पूर्ववद् गुदे प्रणयेत्। अत्युष्णादिगुणयुक्तस्य वस्तेराबाधकरत्वम्। वचनं हि—

"स्तम्भं विधत्तेऽतिमृदुर्हिमश्च
तप्ताम्लतीक्ष्णो वमिदाहमोहान्।
स्निग्धोऽतिजाड्यं पवनं तु रूक्ष-
स्त्वनल्पमात्रालवणस्त्वयोगम्॥
करोति मात्राभ्यधिकोऽतियोगं
क्षोभं तु सान्द्रः सुचिरेण वैति।
दाहातिसारौ लवणोऽति कुर्या-
त्तस्मात् सुयुक्तं सममेव दद्यात्॥"

इति॥

साम्प्रतमन्यमतमभिधत्ते—

पठन्त्यन्ये तु तद्विदः ॥ ४३ ॥
मात्रां त्रिपलिकां कुर्यात्स्नेहमाक्षिकयोः पृथक्।
कर्षार्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ॥ ४४ ॥
सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत्।

पठन्तीत्यादि। अन्ये पुनराचार्याः तद्विदो बस्तिविदः एवं पठन्ति कथयन्ति। वस्तेर्मात्रामेवमाहुरित्यर्थः। स्नेहस्य मधुनश्च पृथक् त्रिपलिकां मात्रां त्रीणि त्रीणि पलानि कुर्यात्। माणिमन्थस्य सैन्धवस्य कर्षार्धं शाणद्वयं कल्कस्य पलद्वयं युञ्ज्यात्। स्वस्थ इति। स्वस्थविषयमेतत्। सर्वद्रवाणां शेषाणां क्वाथादीनां पलानि दशसङ्ख्यानि कल्पयेदिति। एवमेतेऽष्टादशपलानि बस्तेर्मानमिच्छन्ति ॥

सम्प्रति निरूहावयवानां माक्षिकादीनामावपने क्रममाह—

माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ॥ ४५ ॥
आवपेत निरूहाणामेष संयोजने विधिः।

माक्षिकमित्यादि। कटाहे माक्षिकादीन् क्रमादावपेत युञ्ज्यादित्यर्थः। प्रथमं पात्रे मधु प्रक्षिप्य मर्दयेत्। ततस्तत्रैव लवणं क्षिप्त्वा मर्दयेत्। ततस्तत्रैव स्नेहमवाप्य मर्दयित्वा मिश्रयेत्। ततः कल्कं क्षिप्त्वा मृद्नीयात्। ततः क्वाथमासिच्य खजेनाहन्यात्। एवं योजना भेषजस्यैकरूपत्वप्राप्तौ हेतुरित्यर्थः। एवं योजने द्रव्याणि समरसतां यान्ति। समरसभावेन च निरूहस्य सम्यग् योगो भवति। क्वाथमित्युपलक्षणं मांसरससुराशुक्तादीनां ग्रहणार्थम्। निरूहाणां संयोजने मिश्रणे एष विधिः प्रकारः। धान्वन्तरीयाः पुनराहुः—

"दत्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतत्रयम् ॥
खजेन मथिते तस्मिन् देयं कल्कपलद्वयम्।
एकीभूते ततः क्वाथं चतुष्प्रसृतसंमितम् ॥
वितरेच्च तथावापमन्ते द्विप्रसृतोन्मितम्।
एवं प्रकल्पितो बस्तिर्द्वादशप्रसृतो भवेत् ॥"

इति ॥ मांसरससुराकाञ्जिकशुक्तक्षीरमूत्राणामावापसंज्ञाप्रयोगोपदेशः कथ्यते—

"पिचुवर्त्या पिधायाग्रच्छिद्रं नेत्रमधोमुखम् ।
कृत्वा निजपदाङ्गुल्योर्मध्ये पादान्तरेण तत् ॥

आक्रम्य मूलसम्बन्धं चर्म सम्यक् प्रसार्य च ।
संगृह्य भेषजं क्षिप्त्वा बध्नीयात् सुसमाहितः ॥

पुनर्नेत्राग्रमुन्नाम्य पिचुवर्तिमपास्य च ।
वामहस्तेन नेत्राग्रं दक्षिणेन तु भेषजम् ॥

गृहीत्वा प्रणयेत् पायाविति वस्तिविदां मतम् ।"

इति ॥

**उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ४६ ॥**

**कृतोपधानः सञ्जातवेगश्चोत्कुटिकः सृजेत् ।**
**आगतौ परमः कालो मुहूर्तो मृत्यवेऽपरः ॥ ४७ ॥**

**तत्रानुलोमिकं स्नेहक्षारमूत्राम्लकल्पितम् ।**
**त्वरितं स्निग्धतीक्ष्णोष्णं वस्तिमन्यं प्रपीडयेत् ॥ ४८ ॥**

**विदध्यात्फलवर्तिं वा स्वेदनोत्त्रासनादि च ।**

**उत्तान** इत्यादि । निरूहे दत्तमात्रे तु उत्तानशायी स्यात् । वस्तिशक्तेर्देहव्याप्त्यर्थं तन्मनाश्च निरूहवेगप्रत्यागमने निहितमना दत्तावधानो भवेत् । कृतोपधानस्तिष्ठन् सञ्जातवेगश्च उत्कुटिकः सन् **विसृजेत्** त्यजेत् वेगमिति शेषः । उत्कटिक उन्नतकटिक इति वा पाठः ॥ निरूहस्यागतौ प्रत्यागमने प्रतिनिवृत्तौ परमः कालो मुहूर्तो नाडिकाद्वयम् । अपरः तस्मान्मुहूर्तादन्यः द्वितीयो मुहूर्तो निरूहस्यागमनकालो **मृत्यवे** मरणाय स्यात् । तत्र मुहूर्तात् परमनागमने निरूहस्य त्वरितं वेगेनानुलोमिकं वाय्वोरानुलोम्यकरम् अपरं वस्तिं निरूहं प्रपीडयेद् योजयेत् । **क्षारो** लवणादिः यवक्षारो वा । तथा मूत्रमम्लं काञ्जिकादि एतैः कल्पितं तथा स्निग्धं तीक्ष्णमुष्णं च एवंविधं बस्त्यन्तरं पीडयेत् । आनुलोमिक इत्यध्यात्मादित्वात् ठक् । स्नेहयोगादेव स्निग्धत्वे सिद्धे पुनः स्निग्धग्रहणं पूर्वस्मान्निरूहात् स्निग्धतरत्वप्रतिपादनार्थम् ।

"तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसैन्धवैः।
प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्दवं तथा॥"

इति तन्त्रान्तरे। आनुलोमिकस्नेहेति केचित् पठन्ति। **अथवा फलवर्तिं** विदध्यात्। फलवर्तिः पूर्वोक्ता। उदावर्ते च वक्ष्यमाणा। तथा **स्वेदनोत्रास-नादि च** वस्तिव्यापत्सिध्युक्तं विदध्यात् कुर्यात्। उत्रासनं खड्गादिना॥

**स्वयमेव निवृत्ते तु द्वितीयो वस्तिरिष्यते॥ ४९॥**

**तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता।**

**स्वयमेव निवृत्ते** वस्त्यन्तरप्रयोगादियत्नमन्तरेण प्रवृत्ते निरूहे सति **द्वितीयो वस्ति**र्निरूह इष्यते। **तृतीयोऽपि चतुर्थोऽपि** वस्तिरिष्यते। अपिशब्दः समुच्चये। स्वयं ग्रहणेन यत्नविशेषेण निवृत्ते तदहः पुनर्वस्त्यन्तरप्रयोगप्रति-षेधं दर्शयति। यत्नविशेषेण निवृत्ते सति द्वितीयादिर्वस्तिर्नेष्यत इत्युक्तं भवति। **यावद्वेति**। पञ्चमादयोऽपि वस्तयो देयाः। यावत् सम्यङ् निरूढत्वं स्यात्। सुनिरूढलक्षणे जात एव वस्तिप्रयोगनिवृत्तिरित्यर्थः॥

कानि पुनः सम्यङ् निरूढलिङ्गानीत्यत आह—

**विरिक्तवच्च योगादीन् विद्याद्**

**विरिक्तवदि**त्यादि। वस्तौ च विरिक्त इव योगायोगातियोगान् विद्यात्। तत्र चोक्तं— "हृत्कुक्ष्यशुद्धिररुचिरि"त्यारभ्य 'यावद् भवन्त्यति-विरिक्तस्य तथातिवमनामयाः' इति॥

**योगे तु भोजयेत्॥ ५०॥**

**कोष्णेन वारिणा स्नातं तनु धन्वरसौदनम्।**

**योगे** निरूहस्य सम्यग् योगे तु सति सुखोष्णजलेन स्नातं **धन्वमांस-रसौदनं** जाङ्गलमांसरसेन युक्तं शाल्याद्योदनं भोजयेत। ननु "यूषक्षीररसैः क्रमाद्" इति वक्ष्यति। तत् कथमिहैतदुपपद्यते। ब्रूमः। वातविकारशमनार्थो हि निरूहः प्रायेणेष्यते। तस्मिंश्च रसकौदनमेव पथ्यं श्रेयः। अग्ने च दोषापे-क्षया पथ्यं विशेषेणोपदेक्ष्यते इति न किञ्चिदत्रानुपपन्नम्। ननु दोषनिर्हरणं विरेकवमनाभ्यामिवानेन क्रियते। तत्र च यथा पेयादिक्रम उक्तस्तथेहापि युक्तः स्यात्। नैवम्। विरेकवमनाभ्यां हि बह्निस्थानमाच्छाद्यते। तेनाग्निमान्द्यं

च भवति । निरूहस्तु नाभेरूर्ध्वमगच्छन्नेव दोषनिर्हरणं करोति । तेन तत्र नाग्निमान्द्यापत्तिः । तस्मान्नात्र पेयादिक्रमः । अपि च वातविकारविषयत्वाच्चात्र रसौदनप्रायमेव पथ्यं युक्तम् । हाटकोऽप्याह—"वमनविरेचनयोरग्न्यधिष्ठान-प्राप्तौ तच्छादनादग्निमान्द्यम् । अतः क्षामताप्रकर्षजनकत्वात् सद्यो दोषहरत्वाच्च भोजनक्रमभेदः" । परतन्त्रेऽपि—

"उत्क्रमामाद् विशुद्धस्य निरूहेण रसादिकम् ।
किमर्थं विहितं भोज्यं न क्रमो यो विरिक्तवत् ॥
विरेकः पावकं हन्ति तदधिष्ठानसंश्रयात् ।
न तु बस्तिस्तथा तस्मान्न क्षेपयति सोऽनलम् ॥"

इति । अन्यत्रापि —

"विशुद्धौ मण्डपेयादिर्विरेकादौ विधीयते ।
कथमत्र विशुद्धौ स्यादनुज्ञा भोजनं प्रति ।
अत्रोच्यते विरेकादौ वह्निराच्छाद्यते मलैः ॥
नाभिमात्रगतिर्बस्तिर्नाग्न्यवच्छादनक्षमः ।
अतो भोजनमुद्दिष्टं न पेयादिरिति स्थितिः ॥"

तादृशस्य भोजनस्य फलमाह —

**विकारा ये निरूढस्य भवन्ति प्रचलैर्मलैः ॥ ५१ ॥**
**ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम् ।**

विकारा इत्यादि । निरूढस्य कृतनिरूहस्य प्रचलैर्मलैः प्रकर्षेण चलैर्दोषैर्ये विकाराः शूलदाहगुरुत्वादयो भवन्ति ते विकाराः कोष्णाम्बुस्नातस्य कृतभोजनस्य पुरुषस्य सद्यः शमनं गच्छन्ति । अत एव तत् कार्यमिति भावः ॥

**अथ वातार्दितं भूयः सद्य एवानुवासयेत् ॥ ५२ ॥**

अथेति । अथ निरूहादनन्तरं वातपीडितं पुरुषं भूयो निरूहे कृते सद्यस्तस्मिन्नेवाहनि रात्रावनुवासयेद् वातहरैरास्थापनद्रव्यैः सिद्धेन तैलेन । आगमो हि — 'यथा वातघ्नैर्द्रव्यैः साध्यते निरूहः, एवं पित्तश्लेष्महरेभ्य आस्थापनद्रव्येभ्यः आनुवासनिकः स्नेहः कर्तव्यः शिरोविरेचनादयः' इति न्यसे ! ॥ ५२ ॥

1. 'निरूढस्य' मुद्रिताष्टाङ्गहृदयपाठः.

**सम्यग्धीनातियोगाश्च तस्य स्युः स्नेहपीतवत्।**

तस्यानुवासनस्य स्नेहपानस्येव सम्यग् योगादयः स्युः। स्नेहपानलक्षणवद् द्रष्टव्याः। स्नेहपीतस्येव स्नेहपीतवत्। षष्ठ्यन्ताद् वतिः। 'तत्र वातानुलोम्यमि'त्यादि 'घ्राणवक्त्रगुदस्रवाः' इत्यन्तं स्नेहपानस्य सम्यग्धीनातियोगलक्षणम्॥

अन्यदप्यनुवासनस्य सम्यग् योगलक्षणमाह—

**किञ्चित्कालं स्थितो यश्च सपुरीषो निवर्तते॥ ५३॥**
**सानुलोमानिलः स्नेहस्तत्सिद्धमनुवासनम्।**

किञ्चिदित्यादि। चशब्दः पूर्वोक्तानुवासनसम्यग्योगलक्षणसमुच्चयार्थः। किञ्चिदल्पमात्रं कालं कोष्ठाभ्यन्तरे स्थितः सन् सविट्कः सानुलोमानिलः सानुगुणपवनः प्रवृत्तवातसहितो यः स्नेहो निवर्तते निस्सरति एवंभूतश्च स्नेहः, तदित्यनुवासनापेक्षया नपुंसकनिर्देशः। सिद्धं कृतफलम्। अभिमतकार्यकारि अनुवासनं समस्तं व्यस्तं चेदं सिद्धानुवासनलक्षणम्॥

इदानीमनुवासनस्य प्रयोगभेदान् दोषहेतून् प्रत्याह—

**एकं त्रीन्वा बलासे तु स्नेहबस्तीन् प्रकल्पयेत्॥**

**पञ्च वा सप्त वा पित्ते नवैकादश वानिले।**
**पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः॥ ५५॥**

**कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात्।**

एकं त्रीनित्यादि। हाटकोऽपि 'वातस्य दोषान्तरसंसृष्टस्य च बस्तिमाहे'त्याह। श्लेष्मविकारे स्नेहबस्तेरमुख्यत्वादल्पवक्तव्यत्वाच्च क्रमान्तरेणेदमुच्यते। अभ्यर्हितं पूर्वमिति वातस्य प्रथमपाठो युज्यते इति चेत्—तन्न। श्लेष्मस्य प्रथमपाठः समासविषयः। अल्पवक्तव्यस्य प्रथमोक्तिरिति प्रथमाविषया अत्र विपर्ययाख्या तन्त्रयुक्तिर्वा। स्नेहबस्तीननुवासनानि एकं त्रीन् वा बलासे श्लेष्मविकारे प्रकल्पयेत्। कार्ये कारणोपचारादेवमुक्तम्। एवमग्रेऽपि चिन्त्यम्। पित्ते पित्तविकारे पञ्च स्नेहबस्तीन् अथवा सप्त दद्यात्। वातार्तस्य तु युग्मा अपि देया एव। तथैवामुनैवाभ्यधायि — 'व्यायामनित्यान्

दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम्' इति। अनिले वाते वातविकारे **नवैकादश वा स्नेहवस्तीन् दद्यात्।** यद्यपि वस्तिर्वातप्रधानेषूक्तः, तथा पित्ते श्लेष्मणि नाशशक्तिर्विद्यत एव। ततः पुनरप्ययुग्मान् वस्तीन् प्रकल्पयेत्। ततः पुनरप्यास्थापनं दद्यात्। अर्थः— मृदुमध्यादिमात्राभेदात् वायोस्तद्विकारस्य वा अप्रशमे भूयोऽप्ययुग्मान् प्रयोजयेत्। अयुग्मस्य वस्तेर्वातप्रशमनत्वं प्रभावात्। अपि च अयुग्मप्रयोगो मङ्गलार्थः। अयुग्मस्य मङ्गलत्वं स्मृतिसिद्धम्—

"अयुजो भोजयेद् विप्रान् मङ्गलार्थेषु कर्मसु।"

इति। वक्ष्यति च—'अयुग्माश्च मृगाः शस्ताः' इति। अयुग्मवचनं चेदं बाहुल्येनायं व्यवहारो युक्त इति प्रतिपादयितुम्। वातार्तस्य तु युग्मपित्तश्लेष्मणोः क्रमान्तरोपदेशाद् वातावृतयोरेवमयुग्मं कर्तव्यमित्यर्थः। तथा चागमः—

"एकं तथा त्रीन् कफजे विकारे
पित्तात्मके पञ्च तु सप्त वापि।
वाते नवैकादश वा पुनर्वा
बस्तीनयुग्मान् कुशलो विदध्यात्"॥

इति।

कृतास्थापनस्य तु पथ्यमन्नं श्लेष्मपित्तपवनेषु तु यथासङ्ख्यं यूषादिभिः सहोपयोक्तव्यम्। हृद्याकारस्त्वाह—"तत इति आस्थापनेन शोधने जाते कफादिषु यूषादिभिः सह भोजनं कुर्यात्। क्रमादिति पूर्वोक्तः कफादिक्रमः" इति॥ ५५॥

इदानीं वातादिक्रमेणैव वस्तीनाह—

**वातघ्नौषधनिष्क्वाथः त्रिवृतासैन्धवैर्युतः॥ ५६॥**
**वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णरसान्वितः।**

वातघ्नेत्यादि। यदा धाम्न्येवानिलो वायुः कुपितस्तदा वातघ्नौषधनिष्क्वाथादिगुण एक एव वस्तिर्निरूहो हितः, योज्य इति वा। वातघ्नानि दशमूलादीनि तत्कषायेण त्रिवृतया सैन्धवेन च युक्तः। स्नेहादिना च स्निग्धो मधुराम्ललवणयुक्त एको वस्तिर्हितः। त्रिवृतेत्यनेन 'सर्पिस्तैलवसानां ग्रहणमि'ति हाटकः॥

**न्यग्रोधादिगणक्वाथपद्मकादिसितायुतौ ॥ ५७ ॥**
**पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ।**

यदा तु वाताशये वातपरतन्त्रं पित्तं वर्तते, तदा तज्जयाय न्यग्रोधादिगणक्वाथपद्मकादिकल्काभ्यां सितया च युतौ द्वौ वस्ती योज्यौ। किम्भूतौ, स्वाद्वादिगुणौ। अत्र प्रथमस्य स्वभावात् पित्तहरस्यापि वातजये चरितार्थत्वाद् द्वितीयस्यावश्यं प्रयोगः ॥

**आरग्वधादिनिष्क्वाथवत्सकादियुतास्त्रयः ॥ ५८ ॥**
**रूक्षाः सक्षौद्रगोमूत्राः तीक्ष्णोष्णकटुकाः कफे।**

तथा कफे वाताशयस्थे वातपरतन्त्रे आरग्वधादिक्वाथवत्सकादिकल्काभ्यां युक्ता रूक्षा माक्षिकगोमूत्रयुक्तास्तीक्ष्णादिगुणास्त्रयो वस्तयो योज्याः। वाते प्रधानोपक्रमस्य वस्तेः पित्तकफयोरधिकसङ्ख्याग्रहणं कथमिति चेद् उच्यते। प्रथमप्रयुक्तो वस्तिर्वातमपकर्षति। पित्ते प्रयुक्तयोरेकः वातमपकर्षति, द्वितीयः पित्तं च। कफे त्रयः। तेषामेको वातं अन्यः पित्तमपरः कफं नाशयति ॥

**त्रयश्च सन्निपातेऽपि दोषान्घ्नन्ति यतः क्रमात् ॥ ५९ ॥**

तथा सन्निपातेऽपि त्रयो वस्तयो योज्याः। अर्थः — यदा त्रयोऽपि दोषा वस्तिविषयत्वं याताः, तदा तेषामेवौषधैः क्रमेण त्रय एव वस्तयः कल्पनीयाः। तत्र युक्तिमाह — यतो यस्मात् पूर्वेण प्रकारेण ते दोषांस्त्रीन् वातादीन् क्रमाद् घ्नन्ति पराकुर्वन्ति ॥ ५९ ॥

**त्रिभ्यः परं वस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः।**
**नहि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ६० ॥**

अतोऽस्मादेव दोषक्रमाद्धेतोः। अन्ये भिषजस्त्रिभ्यो वस्तिभ्यः परं निरूहान् नेच्छन्ति। यस्मात् त्रिभिर्वस्तिभिस्त्रयो दोषा निर्हृताः। तस्माच्चतुर्थो दोषो न विद्यते, यं लक्षीकृत्य भूयश्चतुर्थो दीयते। आगमो हि —

"एकोऽपकर्षत्यनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः"।

इति। **हृद्याकारोऽप्याह**—"सन्निपातेऽपि त्रयो वस्तयो योज्याः। वातादीन् क्रमेण घ्नन्ति"। यतः चरकस्यायं पक्षः। अन्ये पुनराचार्याः "सर्वत्र वस्तित्रयमेवेच्छन्ति। जेतव्यस्य चतुर्थस्य दोषस्याभावात्" इति ॥ ६० ॥

---

१. 'काशी' मुद्रिताष्टाङ्गहृदयपाठः

ननु वातादिषु वक्ष्यमाणकर्मकालादिसङ्ख्याविरोधः अस्मिन्नन्यथा सङ्ख्यावच-नात् । ब्रूमः । दोषाणां विकारप्राचुर्यापेक्षया तद्वचनं, दोषविकाराल्पत्वापेक्षया 'एकं त्रीन्वा बलासे' इत्यादि, इदं तु दोषमात्रापेक्षयेत्यदोषः । दोषे विकारकरणोन्मुखे इति यावत् । अन्येषां प्रकारान्तरेण वस्तित्रित्वमिष्टमित्याह —

उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।

त्रिधैवं कल्पयेद्वस्तिमित्यन्येऽपि प्रचक्षते ॥ ६१ ॥

उत्क्लेशनमित्यादि । अन्येऽप्याचार्या वैद्या वा । दोषयौगपद्यहरणे उत्क्लेशनादिभेदेन त्रिधैव वस्तिं कल्पयेदिति जगदुः । उत्क्लेशनं शुद्धिकरं दोषाणां शमनमिति प्रतिदोषं वस्तित्रयं प्रयोज्यमिति तेषां पक्षः ॥ ६१ ॥

एषु मतेषु किमीयं मतं ग्राह्यमित्याह —

दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत् ।

दोषेत्यादि । आदिशब्देन देशकालादेर्ग्रहणम् । दोषभेषजदेशकाल-सात्म्यसत्त्वादिवशात् सर्वं मतभेदेनोक्तमेतत् प्रमाणयेत् समर्थयेत् । निश्चिनु-यादित्यर्थः ॥

अथ सर्वमतानुग्राहि स्वमतमाह —

सम्यङ्निरूढलिङ्गं तु नासम्भाव्य निवर्तयेत् ॥ ६२ ॥

सम्यङ् निरूढलिङ्गं तु असम्भाव्यासम्पाद्य न निवर्तयेत् । वस्तिप्रयोगं न विरमयेदिति निष्कृष्टोऽर्थः ॥ ६२ ॥

इदानीं कर्मकालयोगाख्यान् वस्तिविशेषानाह —

प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च ।

सान्वासनानि कर्मैवं वस्तयस्त्रिंशदीरिताः ॥ ६३ ॥

प्रागित्यादि । प्राक् पूर्वमेकः स्नेहवस्तिः । अन्तेऽवसाने पञ्च स्नेहाः । तथा द्वादश निरूहाः यावत्प्रमाणस्नेहवस्त्यन्तरिताः । इत्येवं त्रिंशद् वस्तयः कर्मेति गदिताः ॥ ६३ ॥

कालः पञ्चदशैकोऽत्र प्राक् स्नेहोऽन्ते त्रयस्तथा ।

षट् पञ्चवस्त्यन्तरिताः

पञ्चदश वस्तयः काल उच्यते । कथमित्याह — एकः पूर्वं स्नेहस्तथा अन्ते त्रयः स्नेहाः । तथा षट् स्नेहाः पञ्चभिर्निरूहवस्तिभिरन्तरीकृता इति ॥

१. 'त्रिधैवं', २. 'स्नेहान्ते' मुद्रिताष्टाङ्गहृदयपाठः

**योगोऽष्टौ वस्तयोऽत्र तु ॥ ६४ ॥**

**त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ।**

अष्टौ वस्तयो योग उच्यते । कथमित्याह—त्रयो निरूहाः त्रीणि चानुवासनानि । तथा आद्यन्तयोर्द्वौ स्नेहवन्ती इति । यदा वस्तिः प्रयुज्यते मृदुव्याधौ, तदावश्यमेतत्त्रयस्यान्यतमो योज्यः, न तु यथेच्छमिति । व्याकारोप्याह—

"त्रिविधा वस्तयः कर्मकालयोगाह्वयाः क्रमात् ।
बलकालविभागज्ञैर्योज्याः स्वस्थे सुखात्मनि ॥
स्वस्थस्य व्याधिषूत्पन्नमात्रेष्वपि चिकित्सकैः ।
प्राक् स्नेह एक इत्याद्यास्ते सुबोधतमाः स्मृताः ॥"

इति । तेषां संज्ञाकथनं व्यवहारार्थमेव । एवं ये प्रयुज्यन्ते तेषां कर्मादिसंज्ञा विधत इति सूचयितुम् ॥

**स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ॥ ६५ ॥**

**उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ।**

स्नेहवस्तिमथवा निरूहमेकमेव केवलम् अतिशयेन निरन्तरं न तु शीलयेत् । कुतः, यस्मादुत्क्लेशो दोषाणामग्नेर्वधो हानिर्मान्द्यं स्नेहादतिशीलिताज्जायते । निरूहादतिशीलिताद् वाताद् भयं जायते । 'अनुवासनस्य केवलस्य प्रयोगे शरीरस्य क्लिन्नताग्निवधश्च स्यात् । निरूहात् केवलाद् वातकोपतो भयं च स्यात्' इति व्याकारः ॥

**तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ॥ ६६ ॥**

**स्नेहशोधनयुक्त्यैवं वस्तिकर्म त्रिदोषजित् ।**

अतोऽस्मात् कारणान्निरूढः कृतनिरूहः नरः स्नेह्यः अनुवास्यः अनुवासनार्हः । अनुवासितश्च कृतानुवासनः पुरुषो निरूहणार्हो भवेत् । एवं स्नेहनशोधनयुक्त्या पूर्वोक्तया वस्तिकर्मसेवितं त्रिदोषजित् भवति त्रीन् दोषान् जयति ॥

अधुना मात्रावस्तिं लक्षयति —

**ह्रस्वया स्नेहपानस्य मात्रया योजितस्समः ॥ ६७ ॥**

**मात्रावस्तिः स्मृतः स्नेहः**

ह्रस्वयेत्यादि । स्नेहपानस्य ह्रस्वया यामद्वयजरणलक्षणया स्नेहमात्रया समस्तुल्यो योजितः स्नेहो मात्रासंज्ञो बस्तिः स्मृतः । सद्भिरिति शेषः । अन्यैरन्यथा स्नेहमात्रोक्ता । यथा —

"षट्पला तु भवेज्ज्येष्ठा त्रिपला मध्यमा भवेत् ।
कनीयस्यध्यर्धपला त्रिधा मात्रानुवासने ॥"

इति ॥

शीलनीयः सदा च सः ।
बालवृद्धाध्वभारस्त्रीव्यायामासक्तचिन्तकैः ॥ ६८ ॥
वातभग्नबलाल्पाग्निनृपेश्वरसुखात्मभिः ।
दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ॥ ६९ ॥

स च मात्राबस्तिर्बालादिभिः सततमेव शीलयितव्यः । स च शीलितो दोषापहः । तथा निष्परीहारोऽनियन्त्रणो बलाय हितो निर्गतपुरीषादिकः सुखकारित्वात् सुख इति ॥ ६८—६९ ॥

इदानीमुत्तरबस्तिं दर्शयति —

बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।
द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ॥ ७० ॥

बस्ताविन्त्यादि । बस्तौ बस्तिस्थाने रोगेषूत्पन्नेषु नृणामित्यर्थाल्लभ्यते । तथा नारीणां योनिगर्भाशयेषु च ये प्रोक्ताः तेषु । चकाराद् बस्तिरोगेषु च स्त्रीणां योनिव्याधिषु गर्भाशयव्याधिषु बस्तिव्याधिषु चेत्यर्थः । पाठ्यकारोऽप्याह — "बस्तौ रोगेषु नारीणां पुरुषाणां चे"ति । द्वे वा त्रीणि वा द्वित्राणि तान्यास्थापनानि तैः शुद्धाश्च ते शुद्धाश्च ताः शुद्धाः तेभ्यो नरेभ्यः स्त्रीभ्यश्च उत्तरबस्तिं विदध्यात् कुर्यात् दद्यादित्यर्थः । गुदादुत्तरेण मार्गेण दीयते इत्युत्तरबस्तिः ॥ ७० ॥

अथ नेत्रप्रमाणमाह —

आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम् ।
वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ७१ ॥
सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसम्भवम् ।
कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम् ॥ ७२ ॥

आतुरेत्यादि। तन्नेत्रमुत्तरवन्तेर्यन्त्रकम् आतुराङ्गुलप्रमाणेन द्वादशाङ्गुलं दैर्घ्येणेत्यर्थादवसीयते। पुरुषाणामेवैतदिति दैवम। स्त्रीणां तु वक्ष्यति हि — नेत्रं दशाङ्गुलमि'ति। तथा वृत्तं तथा गोपुच्छाकृति तथा मूलमध्ययोः कृतकर्णिकं मूले मध्ये चोत्पादितकर्णिकम्। अस्य नेत्रस्य बहुप्रवेशत्वान्मध्ये कर्णिका कृता। तथा सिद्धार्थकः प्रविशत्यस्मिन्निति सिद्धार्थकप्रवेशं तादृशमग्रं प्रान्तो यस्य तदेवम्। तथा श्लक्ष्णमतिकोमलम्। हेमादिजम् आदिशब्दे(न) धात्वादयः प्रागुक्ता गृह्यन्ते। तथा कुन्दादिपुष्पवृन्तसदृशम्। अश्वमारः करवीरः। सुमना जातिः। तथा दृढम्॥ ७१, ७२॥

**तस्य वस्तिर्मृदुर्लघुर्मात्रा शुक्तिर्विकल्प्य वा।**

तस्य नेत्रस्य वस्तिर्मृदुर्लघु योज्यः इति शेषः। मात्रा शुक्तिः कर्षद्वयम् शुक्तिः स्नेहस्येति शेषः। विकल्प्य वा वयोबलशरीराणि मात्रा कार्येत्यन्वयः। शुक्तेरर्धपलान्न्यूनाधिकां वा मात्रां देहबलाद्यपेक्षया कल्पयेदित्यर्थः। हाटकोऽपि— 'वयोबलदेहसत्त्वसात्म्यादिवशान्निरूप्य वा मात्रा कार्ये'त्याह॥

**अथ स्नाताशितस्यास्य स्नेहवस्तिविधानतः॥ ७३॥**
**ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ।**
**हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये॥ ७४॥**
**सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसीवनीम्।**
**आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः॥ ७५॥**
**पीडितेऽनुगते स्नेहे स्नेहवस्तिक्रमो हितः।**

अथेत्यादि। अथेति मङ्गले। निरूहवत् कृतमङ्गलस्यास्य रोगिणः तथा पूर्वं स्नातस्य पश्चादाशितस्य। कथमाशितस्य, स्नेहवस्तिविधानतः। तृतीयार्थे तसिल्। स्नेहवस्तौ यादृश आहारो विहितः तेन कृतभोजनस्य। तथा ऋजोः ऋजुशरीरमुपविष्टस्य। तथा सुखेनोपविष्टस्यासीनस्य। क, पीठे आसने किम्भूते, जानुतुल्ये। मृदावकठिने शिश्ने हृष्टे स्तब्धे। तथा ऋजु स्पष्टं कृत्वा स्थिते सति। शनैर्न हेलया। सूक्ष्मां शलाकां प्रणयेत् मालतीपुष्पवृन्ताग्रपरिमाणाम्। स्थूला तत्र क्षतकरत्वात् प्रवेशायोग्या। तया शलाकया शुद्धे मेढ्रे सति अनुसीवनीं (सीवनीं)लक्षीकृत्यामेढ्रान्तं नेत्रं प्रणयेत्। षडङ्गुलं प्रवेशयेदित्यर्थः। कथं,

---

१. 'न्तर्गतं' मद्रिताष्टाङ्गहृदयपाठः।

गुद इव निष्कम्पं प्रणयेत्। ततो निष्कम्पस्थापनानन्तरं पीडिते पुटके स्नेहेऽनुगते प्रविष्टे सति पाणिना ताडयेत्। स्फिजावित्यादिकोऽनुवासनक्रमो हितः। स्नेहवस्तिक्रमः स्फिक्पीडनादिः शय्योत्क्षेपविरहित इति वेद्यम् ॥ ७३-७५ ॥

**वस्तीननेन विधिना दद्यात्त्रींश्चतुरोऽपि वा ॥ ७६ ॥**

**अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत्।**

त्रींश्चतुरो वा वस्तीननेनैव विधानेन दद्यात्। शेषं विधिपरिहारादिकं सम्यग्योगादिकमस्योत्तरवस्तेरनुवासनस्येव चिन्तयेत्। खरनादे चोक्तम्—

"यथाशेषं प्रवेश्याथ स्नेहस्यार्धपलं नयेत्।
प्रत्यागते द्वितीयं वा तृतीयं वा प्रदापयेत् ॥
स[1] चेदनुविशेत् तत्र स्यात् क्रियेयं विशेषतः।
पिप्पल्यागारधूमवत्सकसैन्धवैः ॥
मूत्राम्लपिष्टैर्गुलिका माषसर्षपसन्निभाः।
छायाविशुष्कास्ताः शिश्ने दद्यात् सर्षपसन्निभाः ॥
पूर्वं माषोपमाः पश्चात् ताभिः स्नेहं समानयेत्।
स्नेहे प्रत्यागते दद्यादानुवासनिकं विधिम् ॥"

इति। गुलिकाप्रयोग एवानुवासनिकः क्रियाविशेषः ॥ ७६ ॥

एवं पुरुषाणामुत्तरवस्तिविधानमुक्त्वा स्त्रीणामाह—

**स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतः ॥ ७७ ॥**

**विदधीत तदा तस्मादनृतावपि चात्यये।**

स्त्रीणामार्तवकाले ऋतुरेवार्तवः तस्मिन्। स च 'ऋतुस्तु द्वादशनिशा' इत्यादि वक्ष्यमाणः। तत्र ऋतौ योनिः कर्त्री, अपावृतः विवृतत्वाद्धेतोरुत्तरवस्तिस्वभावं स्नेहं गर्भवद् गृह्णाति। अन्यथा तु संवृतत्वान्न स्नेहमादत्ते। हृद्याकारोऽप्याह—"आर्तवकाले ऋतुजनितस्य शोणितस्य प्रवृत्तिकाले योनिर्वस्तिं गृह्णाति। तदा ग्रहणे हेतुमाह—अपावृतः स्रोतोविवरणाद्" इति। तस्माद्धेतोस्तदा ऋतुकाले विदधीत प्रकृतत्वादुत्तरवस्तिम्। अनृतावपि चात्यये आत्ययिके तीव्रे व्याधौ समुत्पन्ने अनृतावपि विदधीत ॥

---

१. 'स चेदनुवसेत' इति पाठान्तरो दृश्यते।

तमेवात्ययिकं दर्शयति—

**योनिविभ्रंशशूलेषु योनिव्यापद्यसृग्दरे ॥ ७८ ॥**

योनीत्यादि। योनिविभ्रंश उत्तरे वक्ष्यमाणः, योनिशूला भगरुजाः तेषु तथा योनिव्यापत्तौ तथासृग्दरे रक्तपित्तं योनिमुखेनागच्छत् स्त्रीणामसृग्दरमुच्यते। एतेषु रोगेषूत्तरवस्तिमात्ययिकत्वादनृतावपि दद्यात् आमेहनान्तमिति। अत्राह। मध्ये निविष्टकर्णिकमिति प्रोक्तत्वात् षडङ्गुलं प्रवेश्यमिति लभ्यते। तत् किमामेहनान्तमिति। ब्रूमः। नवाङ्गुलमेढ्रा द्वादशाङ्गुलगुह्याश्च सन्ति पुरुषास्तेषामामेहनान्तमिति प्रोक्तम्। अन्यथा चेत् तेषां स्नेहोद्गिरणं भवतीति द्योतनार्थम्। एवं ह्याह भोजः—

"मेहनाद् द्विगुणं ज्ञेयं नेत्रदैर्घ्यं भिषग्वर।
निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुले॥"

इति। षडङ्गुलाधिकगुह्यत्वं रतिरहस्ये च प्रोक्तम्—

"आरोहपरिणाहाभ्यां षण्णवद्वादशाङ्गुलैः।
गुह्यैः शशो वृषोऽश्वो ना हरिण्यश्वेभिका स्त्रियः॥"

इति। अपिचोक्तं सौश्रुते—

"ततः समं स्थापयित्वा नालीमस्य विचक्षणः।
शनैः शनैर्घृताभ्यक्तां निदध्याच्चतुरङ्गुलम्॥
मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः॥"

इति। आमेहनान्तमित्यत्र 'षडङ्गुलं प्रवेशये'दित्यरुणदत्तः। तन्न बहुमन्यामहे। यद्वैषसमये परिक्लिष्टः वैद्यशास्त्रेषु क्षुण्णतां (?) चात्र योषित्पुष्पनेत्रव्याख्याने प्रदर्शयिष्यामः। ध्वजायामप्रमा(णं?ण)प्रणयनं भोजस्यात्यन्ताभिप्रेतमिति मन्यामहे। यतो ध्वजद्विगुणं नेत्रं मध्ये निविष्टकर्णिकमित्युक्त्वा पुनरप्येवमाह—'अथापा(श्रि?शि)तस्यासीनस्य जानुसमे पीठे पुनरवाधो नाभेर्विशाखान्तरं सुस्विन्नमभ्यक्तं लवणतैलेन ध्वजायामप्रमाणं बस्तिनेत्रं नयित्वा प्रकुञ्चमात्रं तैलस्य निदध्यादि'त्यादि॥ ७८॥

अथास्य नेत्रस्य प्रमाणमाह—

**नेत्रं दशाङ्गुलं मुद्गप्रवेशं**

नेत्रमित्यादि। नेत्रं दशाङ्गुलप्रमाणं, दैर्घ्येण। तथा मुद्गः प्रविशत्यस्मि-

---

१. 'व्यापद्यसृग्दरे' मुद्रितपाठः इत्यपपाठः।

न्निति मुद्गप्रवेशम् । मुद्गप्रवेशाग्रमिति बोध्यम् अन्त्यलोपाख्यया तन्त्रयुक्त्या । मुद्गप्रवेशाग्रच्छिद्रमित्यर्थः । वृत्तगोपुच्छाकारादि शेषं पूर्वोक्तमत्र वेद्यम् । पुष्पवृन्तोपमं तत्र न युज्यते, यतो मूत्रस्रोतःपरिणाहं हि तद् विधातव्यं पुरुषेन्द्रियाकारम् । तथाच मुनिः—

'पुष्पनेत्रप्रमाणं तु प्रमदानां दशाङ्गुलम् ।

मूत्रस्रोतः परीणाहम्', इति । तत्र चतुरङ्गुलं यावत् प्रवेश्यम् । चतुरङ्गुलादूर्ध्वं कर्णिका कर्तव्या अधिकप्रवेशनिराकरणार्थम् । न तु मेहननेत्र इव मध्येकर्णिकेत्ययमत्रार्थः साक्षान्नैवोक्तोऽवगम्यमानत्वात् ।

अत एव प्रवे श(?श्य) नेत्रप्रमाणमाह —

**चतुरंगुलम् ।**

**अपत्यमार्गे योज्यं स्याद् द्व्यंगुलं मूत्रवर्त्मनि ॥ ७९ ॥**

**मूत्रकृच्छ्रविकारेषु बालानां त्वेकमंगुलम् ।**

**चतुरङ्गुलमपत्यमार्गे योज्यं स्यादिति** । अपत्यमार्ग इत्यनेन स्त्रीगर्भग्रहणप्रसवादिसमर्था सूच्यते । गर्भग्रहणप्रसवादिसमर्थायाः स्त्रियाश्चतुरङ्गुलं प्रवेशयितव्यमिति गर्भव्यापत्सु अपत्यमार्गे चतुरङ्गुलं योज्यम् । **मूत्रवर्त्मनि द्व्यङ्गुलं योज्यम्** । या स्त्री सुरतव्यवहारगर्भग्रहणायोग्या अथवा बालाया अप्रौढा तस्या योनौ मूत्रस्यैव केवलं मार्गः । तस्या मूत्रमार्गे नेत्रं द्व्यङ्गुलं प्रवेश्यम् । केषु रोगेषु, **मूत्रकृच्छ्रविकारेषु** । स्त्रीणां हि योनिमार्गो द्विविधः एको गर्भमार्गः द्वितीयो मूत्रमार्ग इति । **बालानां तु** स्त्रीणामेकमङ्गुलं प्रवेश्यम् । उक्तादूर्ध्वं तु प्रवेशाद्योनेः क्षतिः स्यात् । **द्व्याकारस्त्वाह**—"अपत्यमार्ग इति योनौ द्वे स्रोतसी, अपत्यमार्गो मूत्रमार्ग इति । योनिविभ्रंशादिषु अपत्यमार्गे चतुरङ्गुलं योज्यम् । मूत्रकृच्छ्रविकारेषु मूत्रवर्त्मनि द्व्यङ्गुलं योज्यम् । बालानां त्विति । तुर्विशेषे । तासां मूत्रमार्ग एव बस्तिप्रयोगः, एकमङ्गुलमेव प्रवेश्यं स्रोतसामसम्यग् विवृतेः" इति । **सारकृत् त्वेवमाह**—"वृत्तं गोपुच्छाकारादि शेषं पूर्वोक्तमत्र वेद्यम् । पुष्पवृन्तोपमं तत्र न युज्यते, यतो मूत्रस्रोतः परीणाहं हि तद् विधातव्यं पुरुषलिङ्गाकारमि"ति । यदुवाच **श्रीमानरुणदत्तो** वाचाटः तद् बुधैश्चिन्त्यम् । 'मूत्रस्रोतः परीणाहमि'त्यस्य ग्रन्थस्य मुनिप्रोक्तस्याप्यर्थो न ज्ञातस्तेन प्रायशः तस्मान्मूत्रस्रोत इति वराङ्गविवरं मन्यमानेन । पुरुषलिङ्गाकारं करणीयमिति प्रोक्तमि"त्यादि सारकृतो मतम् । अस्माभिस्तु हाटकारुणदत्तयोः प्रामाणिकयो-

[illegible] व्याख्यातम् । नेत्रं दशाङ्गुलमिति । अत्राह—स्त्रीणां दशाङ्गुलं नेत्र- [illegible] समानतन्त्रविरोधात् । उक्तं हि भालुकिना—"पुष्पनेत्रं स्त्रीणां चतुरङ्गुलमपत्यपथे, मूत्रनाड्यां द्व्यङ्गुलप्रवेशं, कन्यानामङ्गुलप्रवेश"मिति । उच्यते । नैतत् ग्रन्थकर्तॄणां मतं कायचिकित्सकानामाभिप्रेतम् । सर्वेषां कायचिकित्सकानां मते दशाङ्गुलाधिकमेव नेत्रम् । तथाच मुनिः—

"पुष्पनेत्रप्रमाणं तु प्रमदानां दशाङ्गुलम् ।"

इति । हिरण्याक्षोऽप्येवमाह—

"पुष्पनेत्रं नराणां तु द्वादशाङ्गुलमिष्यते ।
चतुर्दशाङ्गुलं स्त्रीणां माषवृत्तमकर्णिकम् ॥
विशेषस्त्वत्र नारीणां प्रमाणं चतुरङ्गुलम् ।
द्व्यङ्गुले कर्णिका चाग्रात् कन्यानामङ्गुले भवेत् ॥"

इति । भोजसारप्रोक्तस्य ग्रन्थस्यापि पाठान्तरेणार्थविशेषं वर्णयन्ति केचित् । तद् यथा—'निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुले' इति । इह स्त्रीकन्यापुरुषाणां नेत्रायामपरिणाहः । स्रोतः प्रमाणं तुल्यं, प्रवेशप्रमाणं पुनरतुल्यस्यारम्भः । तद्यथा— तदेव चतुर्दशाङ्गुलं नेत्रं मध्ये निविष्टकर्णिकं पुरुषाणां स्यात् । नारीणां चतुरङ्गुले निविष्टकर्णिकं स्यात् कन्यानामङ्गुले कार्येति । यद्येवं पुरुषाणां निविष्टकर्णिकत्वप्रयोजनं किमिति चेत् । उच्यते 'निविष्टकर्णिकं मध्ये पुरुषाणा'मिति वचनात् सप्ताङ्गुलं परमं प्रवेशप्रमाणं नेत्रस्य भवतीत्यवगन्तव्यम् । उक्तं च क्षारपाणिना—

"अङ्गुलान्यथ चत्वारि पञ्च षड् वाथ सप्त वा ।
सप्ताङ्गुलं परं नेत्रं प्रणिदध्याद् भिषग्वरः ॥
हिंस्याद् बस्तिं नरस्येह प्रमाणादधिकं ततः ।"

इति ॥ ७९ ॥

**प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिरेव तु ॥ ८० ॥**

स्त्रीणामुत्तरबस्तौ स्नेहस्य मध्यमा मात्रा प्रकुञ्चः पलम् । नोत्तमा कनिष्ठा वा । उत्तमा च कल्प्या । बालानां तु शुक्तिरेवार्धपलमेव स्नेहस्य मध्यमा मात्रा ॥ ८० ॥

अधुना त्रिविधाया अपि क्रिया उत्तरबस्तावबस्थानं वर्णयति । [illegible]

उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।
ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ ८१ ॥
वस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयन्[1] ।
त्र्यहमेव च विश्रम्य प्रणिदध्यात्पुनस्त्र्यहम् ॥ ८२ ॥

उत्तानाया इत्यादि । उत्तानायाः न त्ववाङ्मुख्याः पार्श्वस्थिताया वा । शयानायाः न त्वासीनायाः । किं कृत्वा, सक्थिनी सङ्कोच्य । तथोर्ध्वजान्वा अहोरात्रेण त्रिचतुरान् वस्तीन् योजयेत् । अनुवासने त्वेक एव वस्तिरहोरात्रेण योज्यत इत्यस्य भेदः । ऊर्ध्वजान्वा इति । 'ऊरूतः' (४- १- ६६) इत्यूङ् । एवञ्च सन्ततं त्र्यहं वस्तिदानं कार्यं, न त्वत्रानुवासनवत् तृतीये पञ्चमे वाऽहनि । किं कुर्वन्, स्नेहमात्रां यथास्वमर्धकर्षादिक्रमेण वर्धयन् । ततस्त्र्यहमेव च विश्रम्य त्रीणि दिनानि विलम्ब्य ततः पुनः पूर्वोक्तेनैव प्रकारेण त्र्यहं प्रणिदध्यात् कुर्यादित्यर्थः । एष एव क्रमो मेढ्रेऽपि योज्यः तज्जातीयत्वादस्यार्थस्य । अत एवान्तेऽयमुपदिष्टः उभयसंबन्धार्थः ॥ ८२ ॥

पूर्वोक्तमेवार्थमुपसंहरन् संक्षेपेण संग्रहार्थं पुनराह—

पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् ।
सद्यो निरूढश्चान्वास्यः सप्तरात्राद्विरेचितः ॥ ८३ ॥

पक्षादित्यादि । हृद्याकारस्त्वाह— "अथ पञ्चकर्मसु चतुर्दशस्वयुक्तम् । तेषु क्रमेण कर्तव्येषु एकैकस्यान्तरालिकः कियान् काल इत्याशङ्क्याह— पक्षादित्यादि" इति । उत्तमशुध्या शुद्धे वमिते पक्षादनन्तरं विरेकः कार्यः । यस्मात् प्रवरया शुध्या शुद्धे वमिते पेयादिक्रमेण सप्ताहात् प्रकृतिभोजनापत्तिः । ततः सप्ताहेन स्निग्धस्य विरेक इति पक्षेणैव युज्यते । ततोऽनन्तरं पक्षात् परतो निरूहो यतः कृतविरेकस्य हि सप्ताहात् प्रकृतिभोजनापत्तौ स्नेहनार्थमनुवासनेनैकान्तरितेन स्निग्धस्य निरूहो योज्य इति पक्षेणैव युक्तः । निरूढश्च सद्य एवानुवास्यः । तथा च प्रागभ्यधायि—

"अथ वातार्दितं भूयः सद्य एवानुवासयेत् ।"

---

1. 'विवर्धयेत्' मुद्रिताष्टाङ्गहृदयपाठः

इति। विरेचितः सप्तरात्रादूर्ध्वमनुवास्यः। यतः सप्ताहेन प्रकृतिभोजनापाचितः स्नेहनार्थमनुवासनं युक्तम्। विरेकानिरूहयोर्मध्येऽनुवास्यत इत्यर्थः। हृद्याकारोऽप्याह—"वमने कृते पक्षमतिक्रम्य विरेकः कर्तव्यः। प्रकृतिभोजनार्थं सप्ताहः स्नेहनार्थं सप्ताह इति पक्षोक्तिः। तेनैव क्रमेण पक्षातिक्रान्तिः। कृतविरेकस्य निरूहणे प्रकृतिभोजनार्थं सप्ताहः। अनुवासनस्यैकदिनान्तरितस्य सप्ताहः कृतनिरूहः सद्य एवान्वास्यः। कृतविरेचनस्य सप्तरात्रातिक्रान्तौ स्नेहबस्ति"रिति॥ ८३॥

विरेचननिरूहयोर्मध्येऽनुवासनस्य किं प्रयोजनमित्याह।

यथा कुसुम्भादियुतात्तोयाद्रागं हरेत्पटः।
तथा द्रवीकृताद्देहाद्बस्तिर्निर्हरते मलान्॥ ८४॥

यथेत्यादि। अथवा ननु दोषाणां धातूनां च स्नेहस्वेदाभ्याम् एकलोलीभावात् कथं बस्तिर्दोषानेव निर्हरेत् न धातूनित्येतच्चोद्यं दृष्टान्तद्वारेण परिजिहीर्षुराह— यथा कुसुम्भपत्तङ्गादियुक्तात् तोयात् पटो वासो रागं हरेद् गृह्णाति, न तु जलम्। हाटकोऽपि—"यथा पटो रागं गृह्णाति जलं त्यजत्"इत्याह। अरुणदत्तस्तु "यथा पटो रागं गृह्णाति न कुसुम्भादिकम्"इत्याह। तद्वत् स्नेहस्वेदद्रवीकृताद् देहाद् दोषः धातूनामेकलोलीभावे सत्यपि बस्तिर्मलान् दोषानेव दुष्टान् निर्हरेत् न धातूनिति। हाटकस्त्वाह—"इति दोषाणां किञ्चिदुद्रेके क्रमः। भूयोत्क्लेशे क्रमोऽन्यः, संसर्जनानन्तरमेव सप्तरात्रेण शुद्धेः"। आगमो हि—

"नरो विरिक्तस्तु निरूहदानं
विवर्जयेत् सप्तदिनान्यवश्यम्।
शुद्धो निरूहेण विरेचनं च
तद्ध्यस्य शून्यं विकषेच्छरीरम्॥"

इति। अयमर्थः—चतुष्कोटिकं चात्र; विरेचनान्निरूहस्य निरूहाद् विरेचनस्य विरेचनाद् विरेचनस्य वमनाद् वमनस्य चेति। शोधनरूपत्वाद् वमनस्यापि विरेचनसंज्ञा स्वीकृतेति जज्झटः॥ ८४॥

अधुना वायोः स्वरूपं प्रथयन् बस्तिं श्लाघयन्नाह—

शाखागताः कोष्ठगताश्च रोगा
मर्मोर्ध्वसर्वावयवाङ्गजाश्च।

ये सन्ति तेषां न तु कश्चिदन्यो
वायोः परं जन्मनि हेतुरस्ति ॥ ८५ ॥

शाखागता इत्यादि। हृद्याकारोऽपि "वस्ति स्वौती"त्याह। द्वे सक्थिनी द्वौ बाहू इति शाखाः तासु गतास्तदुत्पन्नाः। एवं कोष्ठो महास्रोतः तत्र गताः। तथा मर्माणि च ऊर्ध्वं च सर्वावयवाश्च मर्मोर्ध्वसर्वावयवाः तेषामङ्ग तत्र जाताः मर्मोर्ध्वसर्वावयवाङ्गजाः। तत्र मर्माणि तलहृदादीनि मर्मविभागे वक्ष्यन्ते। ऊर्ध्वशब्देन ऊर्ध्वजत्रुर्गृह्यते। तत्र जाता मुखरोगादयः। सर्वाङ्गजानां ज्वरादयः। अवयवजाः श्वित्रादयो रोगाः। हाटकोऽप्याह—"द्वे सक्थिनी द्वौ बाहू च शाखा तद्गतास्तदुत्पन्नाः। तथा कोष्ठगताः। तथा मर्माणि च ऊर्ध्वं च सर्वे चावयवाश्च मर्मोर्ध्वसर्वावयवाः तेषु जाताः। तत्र मर्माणि तज्जाश्च वक्ष्यन्ते। ऊर्ध्वजत्रुजाता मुखरोगादयः। सर्वाङ्गजा ज्वरादयः। अवयवजाः श्वित्रादयः" इति। हृद्याकारस्त्वन्यथावोचत्—"शाखा रक्तादयः। कोष्ठमुदरम्। यमोर्ध्वसर्वावयवाङ्गजाश्चेति मर्मजा ऊर्ध्वसर्वावयवजा अङ्गजाः सकलशरीरजाता ये व्याधयः" इति। तेषां जन्मन्युत्पत्तौ वायोरपरः कश्चिदपि हेतुर्नास्ति। कथम्? परम् अतिशयेन इतरयोरपि दोषयोः प्रेरको वायुरिति। किञ्चिन्मात्रेणानुबलभावेन पित्तश्लेष्माणावपि हेतू भवत एव, यथा पामादद्रवादीनाम्। ततस्तेषां जन्मनि वायुरेव कारणम्। अवयवग्रहणेनैवोर्ध्वग्रहणे लब्धेऽप्यूर्ध्वग्रहणं प्राधान्यख्यापनार्थं, यथा "ब्राह्मणा आयाताः वसिष्ठोऽप्यायातः" इति। एतदेवाधिकृत्य वक्ष्यमाणाः पञ्च विधयः सकलमेवोत्तरतन्त्रम्। तस्मात् प्रधाना ऊर्ध्वाङ्गजाः॥ ॥ ८५ ॥

ननु कुतो हेतोर्मारुत एतेषु कारणमित्याह—

विट्श्लेष्मपित्तादिमलाचयानां
विक्षेपसंहारकरः स यस्मात्।
तस्यातिवृद्धस्य शमाय नान्य-
द्बस्तेर्विना भेषजमस्ति किञ्चित् ॥ ८६ ॥

विडित्यादि। विट् च श्लेष्मा च पित्तं च विट्श्लेष्मपित्तानि तान्यादिर्येषाम्। आदिशब्देन मूत्रस्वेदादिपरिग्रहः। त एव शरीरमलिनीकरणान्मलाः तेषामाचयाः सञ्चयाः समुदायाः तेषाम्। स वायुर्यस्माद् विक्षेपसंहारकरः। विक्षेपश्च

संहारश्च तौ करोतीति । 'कृञो हेतु---'(३-२-२०)इत्यादिना हेतौ टः । विक्षेपसंहारकरणे हेतुरित्यर्थः, तस्य क्रियावत्त्वात् । वायुश्च श्लेष्मदोषाभ्यां न कदाचिद् विक्षिप्यते न संह्रियते वा, तयोर्निष्क्रियत्वात् । तस्मात् तस्य वायोरतिप्रवृद्धस्य शमनार्थं वस्तिमन्तरेणापरं भेषजं नास्ति । स्नेहस्वेदादिकं तु विद्यमानमपि न तथा समर्थमित्यगण्यत्वात् तदविद्यमानमित्युच्यते ॥ ८६ ॥

तस्माच्चिकित्सार्ध इति प्रदिष्टः
कृत्स्ना चिकित्सापि च वस्तिरेकैः ।
तथा निजागन्तुविकारकारि-
रक्तौषधत्वेन सिराव्यधोऽपि ॥ ८७ ॥

तस्मात् प्रधानदोषपवनशमनार्थात् कारणाद् वस्तिश्चिकित्सार्ध इति कथित एकैराचार्यैः । सकला वा चिकित्सा वस्तिः प्रदिष्टः इति कायचिकित्सकानां पक्षः । तथाहि— त्रिदोषघ्नो हि वस्तिरिति । आगमो हि— "अथ मारुतं पित्तश्लेष्मसहितं वस्तिः समूलमेवापकर्षति ।

वस्तिर्वयःस्थापयिता बलायुः-
स्वराग्निमेधाबलवर्णकर्ता ।
सर्वार्थकारी (शुद्ध ? शिशु) वृद्धयूनां
निरत्ययः सर्वगदापहश्च ॥"

इति । सर्वार्थकारित्वं स्थौल्यकार्श्यधातुसाम्यापादनात् । त्रिदोषघ्नत्वात् सर्वगदापहत्वं चेति । ननु 'चतुर्णां भिषगादीनामि'त्यादिलक्षणा चिकित्सा । तत् कथं भागकल्पना कर्तुं युज्यते । न च सर्वा चिकित्सा वस्तिरिति वक्तुं शक्यते । शेषचिकित्साशास्त्रविस्तरस्यानर्थक्यप्रसङ्गात् । तस्मादेतदयुक्तमिवाभाति । अत्रोच्यते । वायुविकारा अशीतिरुक्ताः । पित्तश्लेष्मविकाराश्च षष्टिरुक्ताः । तत्र वायुविकाराणां प्रधानोपक्रमो वस्तिः । तस्माच्चिकित्सार्धो वस्तिः कार्यद्वारेणोक्तः । अथ मारुतं पित्तश्लेष्मविट्सहितं वस्तिः समूलमेवापकर्षतीति सर्वैव चिकित्सा कार्यद्वारेण वस्तिरेकैरुपदिष्टः । अन्यत्रापि चैवं प्रायो निर्देशः कृत एवाचार्यैः । तथाच मुनिः—

"यानीह कर्माण्युक्तानि विसर्पाणां निवृत्तये।
एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः" ॥

इति। चिकित्सार्धमित्ययं तु पाठो न युक्त एव। अर्धशब्दस्य हि समप्रविभाग एव नपुंसकत्वम्। न चात्र समप्रविभागो गम्यते। तस्मान्नपुंसकत्वमत्रान्याय्यम्। तथेत्यादि। तथा वस्तिवत् सिराव्यधोऽपि। अर्थः— न केवलं वस्तिर्यावत् सिराव्यधोऽपि चिकित्सार्धः सर्वा वा चिकित्सेत्युपदिष्टः इति शल्यकृन्तकाः। कथं, निजाः वातादिसमुत्थाः, आगन्तवोऽभिघातादिसमुत्थाः, निजाश्च आगन्तवश्च ते च ते विकाराश्च निजागन्तुविकाराः, तान् कर्तुं शीलं यस्य तत् निजागन्तुविकारकारि, तद्रक्तं च निजागन्तुविकारकारिरक्तं तस्य रक्तस्यौषधत्वेन प्रधानौषधत्वात्। तत्र विसर्पविद्रध्यादि रोगविशेषोपशमनकारणाच्चिकित्सार्धः सिराव्यधः। तथापरेऽपि ये रोगाः शीतोष्णस्निग्धरूक्षाद्यैरुपक्रमैरनुपशान्तास्तेऽपि सिराव्यधेन साध्यन्त इति सर्वा चिकित्सा सिराव्यध उपदिष्टः। आगमो हि—

"यानीह कर्माण्युक्तानि विसर्पाणां निवृत्तये।
एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः॥"

इति। चिकित्सार्धः शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्तानामपि रोगाणां साधनात् चिकित्सा सर्वा।

"शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः।
सम्यक् साध्या न सिध्यन्ति रक्तजांस्तान् विभावयेत्॥"

इत्यागमात्। वातादीनामुपक्रमैः शीतोष्णादिभिरप्यसाध्यानिति यावत्। तस्मात् सिराव्यध एवमुपदिष्टः। कायचिकित्सकत्वाद् वस्तिप्राधान्यमङ्गीकृत्य तत्प्रसङ्गात् सिराव्यधोऽपीत्युक्तवान्। उक्तं—

"सिराव्यधश्चिकित्सार्धः कृत्स्नं वापि चिकित्सितम्।
शल्यतन्त्रे स्मृतं तद्वद् वस्तिः कायचिकित्सिते॥"

इति। 'निजागन्तुविकारहारी सिराव्यधोऽपि तथा, इति व्याकारः॥ ८७॥

इति हृदयबोधिकायां एकोनविंशोऽध्यायः।

---

*इह सर्वत्र तवर्गचतुर्थस्तपाठोऽरुणदत्तेन स्वीकृतः।

## अथ विंशोऽध्यायः ।

पञ्चकर्मविप्रतिपत्तिप्रस्तावाद् वमनविरेचनास्थापनानुवासनान्युक्त्वा नस्यविधिं वक्ति अथात इत्यादि ।

**अथातो नस्यविधिमध्यायं व्याख्यास्यामः ।**

हृद्याकारोऽप्याह—

"पञ्चकर्मसु शिष्टत्वादिदानीं नस्यमुच्यते ।
नासिकाया नसादेशे यदन्ते नस्यसंभवः ॥"

इति । अथवा अधःशोधनमुक्त्वा ऊर्ध्वशोधनमाह—

**ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ।**

जत्रु अंसकक्षयोः सन्धिः । जत्रुण ऊर्ध्वमूर्ध्वजत्रु । 'मयूरव्यंसका'दित्वात् समासः । तत्र विकारास्तेषु ऊर्ध्वजत्रुविकारेषु जत्रूर्ध्वभवेषु विकारेषु विषये । विशेषेण नस्यमिष्यते । विशेषशब्दाद् वमनसिराव्यधादयोऽपीष्यन्त एव । नासया प्रणीयमानमौषधं नस्यं नासायां भवम् । "तत्र भवः" (४. ३. ५३) इति यत् । 'नस् नासिकाया यत्तस्क्षुद्रेषु, (वा० ६. १. ६३) इति नसादेशः । हृद्याकारोऽप्याह—

"जत्रूर्ध्वसंभवे व्याधौ नस्यकर्मोत्तमोत्तमम् ।
छेदभेदसिरावेधवमनप्रच्छनादिकम् ॥
उत्तमाङ्गगदेष्विष्टं ततो नस्यं विशिष्यते ।
विषकुष्ठज्वरोन्मादस्मृत्यपायादिषूदितम् ॥
नस्यकर्म ततोऽप्येतदुत्तमाङ्गगदे वरम् ।"

इति । ननु किमिति नस्यमेषु रोगेषु विशेषेणेष्टमित्याह—

**नासा हि शिरसो द्वारं तेन तद्व्याप्य हन्ति तान् ॥ १ ॥**

नासा हीत्यादि । हि यस्मान्नासा शिरसो द्वार तेन द्वारेण नासारन्ध्रेण श्रोत्रनेत्रकर्णादिसिरामुखानुप्रवेशेन तच्छिरो व्याप्य तान् विकारान् हन्ति । हृद्याकारस्तु—"तेन द्वारेण तन्नस्यं व्याप्य प्राप्य तानूर्ध्वाङ्गव्याधीन् हन्ति नाशयति । नासिकाद्वारेण शिरः समस्तं गत्वा तदौषधं जत्रूर्ध्वगदान् सर्वान् नाशयतीत्यर्थः" इत्याह ॥ १ ॥

तच्च नस्यं विरेचनबृंहणशमनाख्यभेदेन त्रिधा स्यात् । क्रमेण तेषां प्रयोगमाह—

*विरेचनं शिरश्शूलजाड्यस्यन्दगलामये ।
शोफगंडक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ॥ २ ॥

विरेचनमित्यादि । शिरःशूलादिषु विरेचनं नस्यमिष्यत इति संबन्धः । अपस्मारो यद्यप्यूर्ध्वजत्रूत्थो न भवति, तथापि विरेचननस्येन शाम्यतीति तदुपादानम् । उपलक्षणं चेदम् । कफजेषु पीनसप्रसेकास्यवैरस्यगन्धाघ्रानादिष्वपि विरेचनमेव हितम् । हाटकोऽपि "ऊर्ध्वजत्रूपादानं बाहुल्योपलक्षणार्थम् । कफजेषु पीनसादिष्वपि विरेचनमेव हितम्" इत्याह ॥ २ ॥

बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ।
नासास्यशोषे वाक्संगे कृच्छ्रबोधेऽवबाहुके[1] ॥ ३ ॥

वातोद्भवशूलादिषु अवबाहुकपर्यन्तेषु बृंहणं नस्यमिष्यते हितमित्यर्थः । सूर्यावर्तः शिरोरोगविशेषः । कृच्छ्रबोधः कृच्छ्रोन्मीलनाख्यो वर्त्मरोगः । अवबाहुको वात(रोग)विशेषः ॥ ३ ॥

शमनं नीलिकाव्यङ्गकेशदोषाक्षिराजिषु ।

शमनं नस्यं नीलिकादिष्विष्यते हितमित्यर्थः । नीलिकाव्यङ्गौ क्षुद्ररोगविशेषौ । 'वक्त्रादन्यत्र नीलिका' इति वक्ष्यति । हाटकस्तु—"नीलिका नेत्ररोगविशेषः । व्यङ्गः क्षुद्ररोगविशेषः" इत्याह । केशदोषः केशशातः ।

तेषां क्रमेण साधनान्याह—

यथास्वं यौगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ॥ ४ ॥
कल्कक्वाथादिभिश्चाद्यं मधुपद्वासवैरपि ।

यथास्वमित्यादि । यथास्वं प्रकरणोक्तैः स्नेहैः । किंभूतैः, यौगिकैः योगार्हैः तैलसर्षपतैलादिभिः, न तु घृतादिभिः । तथाच यथास्वं सर्षपमरिचशुण्ठ्यादिभिः प्रसाधितैः संस्कृतैः । तथा कल्कक्वाथस्वरसादिभिश्च यथास्वं कफघ्नैर्गिरिकर्णिकादिकैः शिरोविरेचनानां मध्ये आद्यं विरेचनाख्यं नस्यं भवति । न केवलमेतैर्यावन्माक्षिकादिभिश्च । आसवो मद्यविशेषः । हृद्याकारोऽपि—

---

* विरेचनं बृंहणं च शमनं च त्रिधापि तत् ।
मुद्रितेऽष्टाङ्गहृदये अयमधिकः पाठो दृश्यते ।

१. 'अववाहुके' इति मुद्रिताष्टाङ्गहृदयपाठः ।

"योगयोग्यैः स्नेहैस्तैलवसादिभिर्यथास्वं प्रतिदोषं रोगहरैर्द्रव्यैः सिद्धैः साधितैः कल्कक्वाथस्वरसचूर्णैर्मधुना सैन्धवेन च आसवैर्मद्यैश्चाद्यं नस्यं युञ्ज्यादि" त्याह । 'स्नेहैरिति सामान्यवचनाच्चतुर्विधोऽपि यथर्तु यथादोषं च प्रयोज्यः' इति केचित् । उक्तञ्च निमिना—

"नस्तः कर्म वसन्ते तु घृतमाजं तथाविकम् ।
तथा गव्यं विशेषेण यत् स्यात् क्षीरघृतं स्मृतम् ॥
प्रावृट्काले हितं तैलं शमनं यत् प्रकीर्तितम् ।
तथा शरदि हेमन्ते स्नेहं तैलं समाचरेत् ।
शिशिरे च निदाघे च नस्तः कर्म विवर्जयेत् ॥"

इति । भोजेनाप्युक्तम्—

"स्नेहश्चतुर्विधो यस्तु नस्तो दत्तः स वै नृणाम् ।
यथास्वं विधिना युक्तो विज्ञेयो नस्यसंज्ञकः ॥
तत्र तैलं प्रधानं स्याद् विशेषेण गुणैरिमैः ।
श्लेष्मवाताविरोधित्वात् सात्म्यादौष्ण्यात् तथैव च ॥
वातश्लेष्मनिमित्तेषु तस्माद्रोगेषु पूज्यते ।
पित्तरक्तसमुत्थेषु सर्पिर्नस्तः प्रशस्यते ॥
माधुर्याच्छीतभावाच्च सौम्यत्वात् स्नेहनादपि ।
मस्तुलुङ्गवसामज्जमेदःक्षीणेषु जन्तुषु ॥
वसामज्जे हिते तत्र समानगुणयोनितः ।"

इति ॥

**बृंहणं धन्वमांसोत्थरसासृक्खपुरैरपि ॥ ५ ॥**
**शमनं योजयेत्पूर्वैः क्षीरेण च जलेन च ।**

**बृंहणमित्यादि** । **बृंहणं** नस्यं धन्वोत्थमांसोद्भवरसैः स्यात् । तथासृजा रक्तेन धन्वोत्थेनैव । खपुरेण निर्यासविशेषेण । अपिशब्दादन्यैरपि पूर्वोक्तैः स्नेहैरतीक्ष्णैः बृंहणं भवति । **हृद्याकारोऽपि**—"धन्वमांसोत्थरसासृग्भ्यां, खपुरेण कुन्दुरुष्काख्येन, अपिशब्दात् पूर्वोक्तैरपि मृदुभिर्बृंहणं नस्यं युञ्ज्यादि"त्याह । खपुरः कुन्दुरुष्कादिनिर्यास इति सारकृत् । **शमनं** नस्यं **पूर्वै**र्विरेचनोक्तैर्बृंहणोक्तैश्चातीक्ष्णैः स्नेहैर्घृतादिभिस्तथा मांसरसादिभिश्च **योजयेत्** । तथा **क्षीरेण जलेन च** । चशब्दादन्यैरपीक्षुरसप्रभृतिभिः ।

"विरेचनं कफहरं बृंहणं वातपित्तजित् ।
शमनं च मरुत्पित्तनाशनं नस्यमिष्यते ॥
त्रिविधस्यापि नस्यस्य बहुत्वं कल्पनावशात् ।
अस्ति साधनभेदाच्च मात्रया यत्तदुच्यते ।"

अथवाधुनीन्यानपि नस्यविशेषान् उपपादयन्नाह—

**मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ॥ ६ ॥**

मर्शश्चेत्यादि । एषु स्नेहकल्कादिनस्यभेदेषु मध्ये मर्शाख्यः प्रतिमर्शाख्यश्चेति स्नेहो द्विधा भवति । कथं, मात्रया मात्राभेदेन न तु वस्तुभेदेन । मर्शप्रतिमर्शयोर्मात्रया भेदः । तौ च तैलादिभिः स्नेहः क्रियते ॥ ६ ॥

**कल्काद्यैरवपीडस्तु सतीक्ष्णैर्मूर्धरेचनम् ।**

कल्काद्यैरित्यादि । तुरवधारणे भिन्नक्रमः । अतीक्ष्णैः कल्काद्यैरेवावपीडसंज्ञो नस्यविशेषः, न स्नेहेन । कल्कीकृतादौषधादवाक्पीडितो रसोऽवपीडः । स चावपीडः तीक्ष्णैः शुण्ठ्यादिकल्ककाथरसाद्यैरमृदुभिः कृतो मूर्धविरेचनं शिरोविरेचनाख्यं नामान्तरमस्य । अतीक्ष्णैस्तु शमनसंज्ञमेतत् । हाटकोऽप्याह—"स चावपीडस्तीक्ष्णैः कृतः शिरोविरेचनसंज्ञः, अतीक्ष्णैस्तु शमनसंज्ञः ।" इति ।

अस्य विरेचनस्य प्रकारान्तरमाह—

**ध्मानं विरेचनश्चूर्णो**

**कथं पुनरसौ नासायां ध्मातव्यम् इत्याह—**

ध्मानमित्यादि । ध्मानं प्रधमनाख्यं स्यात् । तत्तु विरेचनो बहिर्दोषनिरसनश्चूर्णो मरिचादिभिः कृतो नासया प्रदीयमानः ॥

**युञ्ज्यात्तन्मुखवायुना ॥ ७ ॥**
**षडंगुलद्विमुखया नाड्या भेषजगर्भया ।**
**स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥ ८ ॥**

तद् ध्मानं चूर्णं वा मुखवायुना हुङ्काराख्येन युञ्ज्यात् प्रवेशयेत् । कथं, नाड्या करणभूतया । षडङ्गुलानि यस्याः सा षडङ्गुला यथास्वं षडङ्गुलायामया । तथा द्वे मुखे यस्याः सा द्विमुखा तया उभयान्तर्द्वारयुक्तया । भेषजगर्भया त्रिकटुकादिचूर्णभरितया तदन्तरितया । तथाविधया नाड्या करणभूतया प्रवेशयेत् ।

१. 'सुतीक्ष्णैर्मूर्धरेचनः' इति मुद्रिताष्टाङ्गहृदयपाठः.

दोषानुरोधतश्च पुनः पुनरिति योजयेत्। **स हि** प्रयोगश्चूर्णो वा **भूरितरं** बहुतरं दोषं चूर्णत्वादपकर्षति निर्हरति। **चूर्णत्वादिति**। चूर्णत्वादेवात्यन्तं प्रत्यनीकभूतः कफस्य स्कन्नस्य द्रवीभूतस्य च विरुद्धत्वात् बहुतरं दोषं नाशयति, न तथा कल्कस्वरसादयः। तस्माद् विरेचनाख्योऽयमित्यर्थः। **इन्द्राकारस्त्वाह**—"कल्काद्यैरित्यादि। कल्कक्वाथस्वरसचूर्णैरवपीडकसंज्ञो नस्यविशेषः सुतीक्ष्णैर्मरिचकटुकादिभिः श्लेष्महरैः कर्तव्यः। मूर्धरेचनैः शिरःशोधनैर्वेल्लादिचूर्णैः क्रियमाणस्यावपीडविशेषस्य ध्मानमिति च नामान्तरम्। तदाह —ध्मानमिति। ध्मानं विरेचनं शिरःशोधनम्। तन्मुखवायुना फूत्काररूपेण युञ्ज्यादि"ति। अत्रैवमाह **वाहटः सङ्ग्रहे**—"विरेचनचूर्णस्तु प्रधमनाख्यः। परिशेषं तु नावनमवपीडसंज्ञं च। कल्कीकृतादौषधादवपीडितः स्रुतो रसोऽवपीडकमिति। अपरेषां तत्र पुनस्तीक्ष्णैर्वैशेषिकी शिरोविरेचनसंज्ञा। तथान्ये सर्वमेव नस्यं शिरोविरेचनमित्याहुः सद्यः श्लेष्मविरेचनसामान्यात्" इति ॥ ८॥

सर्वेषां नस्यानां मात्रया विशेषोऽस्तीति मात्रां लक्षयति—

**प्रदेशिन्यंगुलीपर्वद्वयान्मग्नसमुद्धृतात्।**
**यावत् पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते॥ ९॥**
**मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात्।**
**बिन्दुद्वयोनाः कल्कादेः**

**प्रदेशिनीत्यादि।** **प्रदेशिनी** तर्जनी अङ्गुष्ठस्य समीपजा अङ्गुली, तस्याः पर्वद्वयं तस्मात्। किंभूतात्, पूर्वं स्नेहादौ मग्नात् पश्चात् समुद्धृतात् यावत्परिमाणं स्नेहादि पतति असौ बिन्दुरुच्यते इति शेषः। तावान् बिन्दुसंज्ञक इत्यर्थः। ते बिन्दवो यथासंख्यं **दश मर्शस्योत्कृष्टा** प्रधाना मात्रा, **अष्टौ** मध्यमा, **षट्** ऊना कनिष्ठा। **ता एव** मात्राः **क्रमाद् बिन्दुद्वयोनाः** बिन्दुद्वयवर्जिताः कल्कस्वरसादेरुत्कृष्टमध्योना मात्राः। तेनाष्टौ बिन्दवः कल्कादिरुत्तमा मात्रा, षण्मध्यमा, चत्वारः कनिष्ठेत्यवतिष्ठते। यावदिति यत् परिमाणमस्येति 'यत्तदेतेभ्यः परिमाणे मतुप्' 'आ सर्वनाम्नः' (६-३-९१) इत्याकारः। अथ कल्कचूर्णयोर्बिन्दुग्रहणं कथमिति चेत्—उच्यते। तोलयित्वा स्नेहबिन्दून् तत्समानं कल्कचूर्णयोर्ग्राह्यमिति। घनीभूतस्य कल्कस्य द्रवालोडितस्य नस्ये प्रयोगः॥

अधुना नस्यायोग्यानाह—

योजयेन्न तु नावनम् ॥ १० ॥
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम् ॥ ११ ॥
नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ।
शुद्धानां दत्तवस्तीनां तथानार्तवदुर्दिने ॥ १२ ॥

योजयेदित्यादि। तोयादि पीतं यैस्तेषाम्। आहिताग्न्यादित्वात् परनिपातः। तथा पातुमिच्छतां नस्यं न योजयेत्। एषां हि नस्यं नयननासास्योपदेहशिरोरोगान् कुर्यात्। भुक्तभक्तस्य च नस्येरितो दोष ऊर्ध्वं स्रोतांस्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेत्। शिरःस्नातस्य शिरोऽक्षिकर्णशूलकण्ठरोगपीनसहनुमन्यास्तम्भार्दितशिरःकम्पान्। स्नातुकामस्य मूर्ध्नि स्तिमितो दोषो जाड्यारुचिपीनसान्। स्रुतरक्तस्य च क्षामतामरुचिमग्निसादं च। नवप्रतिश्यायस्य स्रोतोरोधात् क्रिमिकण्डूमूर्धतोदादीन् जनयेत्। मूत्रपुरीषादिवेगार्तानां भृशतरं वेगरोधजान् रोगान्। सूतिकायाः स्रुतरक्तोक्तान् दोषान्। श्वासकासिनोर्व्याधिवृद्धिम्। शुद्धानां कृतवमनविरेचनानां श्वासं कासं स्वरेन्द्रियहानिं शिरोगौरवं च। दत्तवस्तीनां विवृतस्रोतस्तया अभिव्याप्त्या श्वासकासादीनेव। तथा अनार्तवदुर्दिनेऽपि सहसैव शैत्यात् शिरोरुग्वेपथुस्तैमित्यताल्वनेत्रकण्डूपाकमन्यास्तम्भकण्ठोरःप्रतिश्यायारूंषि। 'ऋतुदुर्दिनेऽपि शीतो दोषः। शीतदोषोपदेशेन तत्परिहारे सत्यंदोष इत्यभिप्रायः। अनृतावपीति न युक्तं, ऋतावपि दुर्दिने प्रतिषेध इष्टः। वर्षास्वदुर्दिनेऽप्यस्तु एतदपि वक्तव्यं जायते वर्षास्वदुर्दिने चेति। अनृतावित्यस्यानभिधाने वर्षाणां दुर्दिनस्वभावत्वात् स्वस्थानत्वात् तत्रैव वृत्तिः स्यान्नान्यत्रेति। अथवा सर्वदा दुर्दिने नस्यस्य निषेधे वर्षासु नस्यसाध्ये व्याधावुत्पन्ने दुर्दिनेऽपि नस्यं विधातव्यमिति दर्शयितुमनार्तवग्रहणमि'ति हृद्याकारः। एषु च नस्यदोषेषु यथास्वमायतनं दोषोद्रेकं चावेक्ष्य स्नेहस्वेदशिरोवक्त्रलेपतीक्ष्णावपीडधूमगण्डूषादीनि यथास्वं कुर्यात्। सङ्ग्रहे चोक्तं—"गर्भिण्याश्च नस्येन भक्तद्वेषज्वरमूर्च्छार्धावभेदकाः स्युः। अपत्यं च विकलेन्द्रियमुन्मादापस्मारयुक्तं च स्यात्। तत्र गर्भिण्या वर्ज्ये नस्यकर्मणि कृते वर्षाभूकाकोलीकपिकच्छुभिः श्रृतं पयः पिबेत्। बलाविदार्यंशुमतीमेदाभिर्वा एभिरेव च श्रृतं हविः वातहरसिद्धश्च स्नेहः शिरोवस्तौ कर्णपूरणे च योज्यः। सर्वं च बृंहणमन्नपानम्" इति॥ १०-१२॥

तोयपीतादिषु सदैव किं नस्यं न योज्यमित्याह—

**अन्यत्रात्ययिकाद्व्याधेः**

अन्यत्रेत्यादि। आत्ययिके व्याधौ तेषामपि नस्यं योज्यमेव॥

इदानीं नस्यकालं वक्ति—

**अथ नस्यं प्रयोजयेत्।**
**प्रातः श्लेष्मणि मध्याह्ने पित्ते सायंनिशोश्चले॥ १३॥**

अथेत्यादि। श्लेष्मणि श्लेष्मरोगेषु प्रातः पूर्वाह्णे नस्यं प्रयोजयेत् कुर्यात्। पित्ते पित्तरोगेषु मध्याह्ने। वातरोगेषु सायमपराह्णे निशि च रात्रौ नस्यं प्रयोजयेत्। वचनं हि सङ्ग्रहे—"लालास्रावसुप्तप्रलापदन्तकटकटायनक्कथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादार्दितशिरोरोगश्वासकासादिषु रात्रावि"ति॥ १३॥

अधुना दोषाद्यपेक्षया नस्यकालं नियमयति—

**स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः।**
**शीते मध्यन्दिने ग्रीष्मे सायं वर्षासु सातपे॥ १४॥**

स्वस्थेत्यादि। स्वस्थवृत्ते तु स्वस्थस्य व्याध्यनुत्पत्त्यर्थं शरदि वसन्ते च पूर्वाह्ण एव नस्यं प्रयोजयेत्। शीते शिशिरलक्षणे हेमन्तशिशिरयोर्मध्याह्ने, ग्रीष्मे सायमपराह्णे, वर्षासु सातपे आतपसहिते दृश्यमानदिवाकरे दिवसे प्रयोजयेत्॥ १४॥

**वाताभिभूते शिरसि हिध्मायामपतानके।**
**मन्यास्तम्भे स्वरभ्रंशे सायंप्रातर्दिने दिने॥ १५॥**
**एकाहान्तरमन्यत्र सप्ताहं च तदाचरेत्।**

वाताभिभूतमूर्धादिषु स्वरभ्रंशान्तेषु दिने दिने प्रतिदिनं नैकान्तरितं सायंप्रातरुभयकालं वा एकवारम् अनेन विधिना आ सम्यग्योगान्नस्यं प्रयोजयेत्। न तत्रर्तुभेदापेक्षेत्यभिप्रायः यत्र प्रतिदिनं नस्यं विहितं, ततोऽन्यत्र वाताभिभूतमूर्धादिभ्योऽपरस्मिन् रोगे एकाहान्तरम् एकाहमन्तरीकृत्य सप्ताहं च नस्यमाचरेत्। चशब्दो नियमार्थः सप्ताहमेवाचरेत् न ततः परमिति। सप्तदिवसनियमो नस्याचारे। व्यवधायकानि दिवसानि च सप्त। तेन चतुर्दशसु दिवसेषु व्यवस्थितेषु सप्ताहमेकदिनान्तरितं नस्यमाचरितं भवेत्। सप्ताहादूर्ध्वं न विदध्यात्। उक्तं च निमिना—

"नस्यं दद्यात्तु सप्ताहं पञ्चाहमथवा त्र्यहम् ।
परं नवाहमूर्ध्वं तु नवाहात् सात्म्यतां व्रजेत् ॥
तन्नस्यं न गुणं कुर्यात् सातत्यान्न हरेत् कफम् ।
तस्मान्नस्यप्रयोगस्तु स्त्रैहिको न हितः सदा ॥"

इति । भोजेनाप्युक्तम् —

एकान्तरं द्व्यन्तरं वा नस्यं दद्याद् विचक्षणः ।
सप्ताहं परमं देयं विश्रान्तस्य पुनः पुनः ॥
पक्षं विंशतिरात्रं वा यावद् वा साधु मन्यते ।"

इति ॥ १५ ॥

इदानीं यादृशस्य पुरुषस्य यथास्थितस्य नस्यं दातव्यं तथाह—

**स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च ॥ १६ ॥**
**निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ।**

**स्निग्धेत्यादि ।** पूर्वं स्निग्धं पश्चात् स्विन्नमुत्तमाङ्गं मूर्धा यस्य तस्य । अथवा पूर्वं स्निग्धस्य पश्चात् स्विन्नशिरसः । तथा प्राक् पूर्वं कृतमवश्यकरणीयमुच्चारप्रस्रावदन्तधावनादि येन सः प्राक्कृतावश्यकः तस्य । तथा निवाते देशे कल्पितं यच्छयनं तल्पं तत्स्थस्यैवंभूतस्य सतो जत्रूर्ध्वं पुनः स्वेदयेत् नस्यप्रयोगकाले स्वेदः कार्यः । सामान्योऽयं निर्देशः । यथाकालं यथादोषं च स्वेदमन्तरेणापि नस्यं दातव्यमेव । उक्तं च वैतरणेन—

"रक्तपित्तविकारेषु पित्तप्रकृतये तथा ।
काले चोष्णे विशेषेण विना स्वेदं प्रयोजयेत् ॥"

इति ॥ १६ ॥

**अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ॥ १७ ॥**
**किञ्चिदुन्नतपादस्य किञ्चिन्मूर्धनि नामिते ।**
**नासापुटं पिधायैकं पर्यायेण निषेचयेत् ॥ १८ ॥**
**उष्णाम्बुतप्तं भैषज्यं प्रणाल्या पिचुनाथवा ।**

**अथेत्यादि ।** अथानन्तरम् उत्तानस्पष्टस्थितशरीरस्य सतः हस्तचरणे प्रसारिते तथेषदुन्नतचरणस्य किञ्चिच्छिरसि नामिते सति नासापुटमेकं पिधाय

वामहस्तप्रदेशिन्यनामिकाभ्यामेकैकं नासापुटं पिधाय स्थगयित्वा इतरस्मिन् नासास्रोतसि मध्यमयाङ्गुल्या नासाग्रमुन्नमय्य पर्यायेण क्रमेण न तु युगपद् दक्षिणहस्तेन भैषज्यं निषेचयेत् । कीदृशम्, उष्णाम्बुतप्तम् उष्णीकृतं भेषजस्य प्रदेयस्य त्रिभागमुष्णाम्बुबाष्पतप्तं कुर्यात् । ततो द्वितीयं भागम् एवं कुर्यात्। ततस्तृतीयं भागम् । अन्यथा शीतीभवति । केन निषेचयेत्, प्रनाड्या करणभूतया । अथवा पिचुना वर्त्त्येत्यर्थः । पिचुः कार्पासः । सुश्रुते चाभ्यधायि— "वस्त्रादिच्छादितनेत्राय प्रदेशिन्युन्नामितनासाग्राय दक्षिणहस्तेन स्नेहमुष्णाम्बुना तप्तं रजतादिशुक्तीनामन्यतमस्थमव्युच्छिन्नधारं सिञ्चेत्" इति ॥ ॥ १८ ॥

दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत् ॥ १९ ॥

शनैरुच्छिङ्घ्य निष्ठीवेत् पार्श्वयोरुभयोस्ततः ।
आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ॥ २० ॥

दत्ते च नस्ये सति पादतलादि मर्दयेत् । आदिशब्देन ग्रीवाललाटादिपरिग्रहः। ततो मर्दनादनन्तरं शनैरुच्छिङ्घ्य घ्राणवायुना ऊर्ध्वमुत्क्षिप्य पार्श्वयोरुभयोर्निष्ठीवेत्। उभयपार्श्वनिष्ठीवनेन सर्वाः सिराः भेषजेन व्याप्यन्ते। एकपार्श्वनिष्ठीवनेन सर्वाः सिराः भेषजेन न सम्यक् व्याप्यन्ते । आ भेषजक्षयात्। नासायां दत्तस्य भेषजस्य यावत् क्षयः, तावदुच्छिङ्घ्य निष्ठीवेत् । सङ्ग्रहेऽप्येवमेव प्रोक्तम्— "शनैश्चोच्छिङ्घेत् । अनभ्यवहरंश्च वामदक्षिणपार्श्वयोरौषधं निष्ठीवेत्। सकफं हि तदभ्यवहृतमग्निमवसादयेत्" इति । हृद्याकारस्त्वन्यथावदत् — "उभयोः पार्श्वयोरुच्छिङ्घ्य नासिकापुटद्वयेन बाह्यं वायुं गृहीत्वा शिर आरोप्य निष्ठीवेत् । नासिकायां निहितस्य भेषजस्य यावन्नाशस्तावदेवं कुर्यात्" इति। उक्तं च निमिना—

"नासापुटौ तथाङ्गुल्या वारं वारं पिधाय तु ।
आतुरं तु भिषग् ब्रूयादुच्छिङ्घेति मुहुर्मुहुः ॥
आतुरं पूर्णवक्त्रं तु ज्ञात्वा द्वौ परिचारकौ ।
बाह्वोः पृष्ठे च संगृह्य समुत्थापयतां सुखम् ॥
आसीनः शयने स स्यादुदङ्मुखमवस्थितः ।
शनैरजिह्मं निष्ठीवेदृजुगात्रस्तु सर्वतः ॥

१. 'न्नामिकात्तना', २. 'यावानैशस्तावदेवं' इति पाठान्तरं दृश्यते ।

परिचारगृहीते तु भाजने पुरतः स्थिते ।
शनैः ष्ठीवितवन्तं तं पुनः संशाययेच्छनैः ॥
स संविष्टः पुनः शीघ्रं निष्ठीवेच्चोत्थितः पुनः ॥"

इत्यादि । एवं निमिप्रोक्तग्रन्थदर्शनाद् हृद्याकारप्रोक्त एवार्थो हृदयं प्राप्नोति । एवमनेन क्रमेण द्विः द्वौ वारौ त्रिर्वा त्रीन् वारान् वा दोषाद्यपेक्षया नस्यं कुर्यात् । न तु मात्रा सकृदेव प्रक्षेप्तव्या । हीनमात्रं चौषधं न देयम् । तद्धि दोषानुत्क्लेश्य अनिर्हरन् गौरवारुचिकासप्रसेकपीनसच्छर्दिकण्ठरोगादीन् कुर्यात् । सकृदेव सर्वं दत्तमुच्छिङ्घ्यमानं मूर्च्छाशिरोरोगप्रतिश्यायघ्राणभेदा-नुच्छ्वासोपरोधं च कुर्यात् । अधिकं च न योजयेत् । अधिकं वातविकारान् कुर्यात् । अत्युष्णं दाहपाकज्वरमूर्च्छाभ्रमान् । अतिशीतं हीनदोषानेव । स्नेह-स्यायोगे वातविकाराः । अतियोगे कफविकाराः । विरेचनस्यायोगे कफवि-काराः । अतियोगे वातविकाराः भवन्ति । अत्युन्नतशिरसः सम्यगप्रतिपद्य-मानं हि दोषान् कुर्यात् । अत्यवनतशिरसो दूरगमनमूर्च्छाजाल्यज्वरान् । सङ्कुचितगात्रस्य सम्यग्धमनीरनाप्नुवद्दोषोत्क्लेशं कुर्यात् । संग्रहेऽप्युक्तम्— "आभेषजदर्शनादुच्छिङ्घेत् निष्ठीवेच्च । ततश्चैवमेव द्वितीयमंशमनुसेचयेत् । तथा तृतीयम् दोषादिबलेन वा । विरेचने त्ववपीडे दोषबलमवेक्ष्य पश्चात् स्नेहमवसेचयेदि"ति ॥ २० ॥

यदि च नस्ये दीयमानेऽतितीक्ष्णभेषजवशादसात्म्यत्वेन वा मूर्च्छा स्यात् । तदा किं कार्यमित्याह—

**मूर्छायां शीततोयेन सिञ्चेत् परिहरञ्छिरः ।**

**मूर्च्छायामित्यादि** । मूर्च्छायां सत्यां शीतजलेन मूर्धवर्जं सिञ्चेत् संग्रहे चोक्तम्— "न च नस्ये दीयमाने कोपहासव्यापारस्पन्दनोच्छिङ्घना-न्याचरेत् । तथाह्येवं शिरोरुक्प्रतिश्यायकासतिमिरखलतिपलिततिलकव्यङ्ग-तिलकालकमुखदूषिकादीनां संभवः" इति ॥

**स्नेहं रेचननस्यान्ते दद्याद्दोषाद्यपेक्षया ॥ २१ ॥**
**नस्यान्ते वाक्शतं तिष्ठेदुत्तानो**

विरेचने नस्ये दत्ते पश्चाद् दोषदेशसात्म्याद्यपेक्षया स्नेहं नस्यमवसेच-येत् । नस्यावसाने वाक्छतं मात्राशतमुत्तानो निद्रामसेवमानस्तिष्ठेत् शयीत ॥

**धारयेत्ततः ।**
**धूमं पीत्वा कवोष्णांबु कबलं कण्ठशुद्धये ॥ २२ ॥**

ततो वाक्छतावस्थानादनन्तरमुत्क्लिष्टदोषशोषोपशान्तये अविशेष्याभिधानाद् विरेचनाद्यन्यतमं धूमं पीत्वा दोषाद्यपेक्षया कण्ठशुद्ध्यर्थमीषदुष्णजलकवलं धारयेत् । हृद्याकारोऽपि — 'अविशेष्याभिधानात् स्निग्धमध्यमतीक्ष्णानामन्यतमं धूमं पीत्वा दोषाद्यपेक्षये'त्याह । ततो धूमपानकवलानन्तरं भोजनविधानमत्रानुक्तम्, स्नेहाचारेणैव सिद्धत्वात् । तन्त्रान्तरे तु स्पष्टमुक्तम् —

"नस्यात् संशुद्धशिरसो हितं सद्यस्तु भोजनम् ।
शुद्धे शिरसि वायुस्तु जन्तोः कुप्येदभोजनात् ॥"

इति ॥ २२ ॥

**सम्यक्स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षपाटवम् ॥ २३ ॥**

**सम्यक्स्निग्धे** शिरसि बृंहणशमनयोरेकतरेण सम्यक्स्निग्धे । नस्यप्रयोगे सम्यग् जाते सुखोच्छ्वासादयः स्युः । सम्यग्विरिक्तेऽप्येवमिति बोद्धव्यम् । उक्तं हि सङ्ग्रहे— "सम्यक्स्निग्धे मूर्धनि विरिक्ते वा सुखोच्छ्वासनिःश्वासक्षवथुस्वप्नप्रबोधाक्षिपाटवानि स्यु"रिति ॥ २३ ॥

**रूक्षे तु स्तब्धता शोषो नासास्ये मूर्धशून्यता ।**

**रूक्षे तु** शिरसि स्तब्धता स्यात् । तथा नासायामास्ये च शोषः मूर्धः शून्यता च स्यात् । हृद्याकारस्तु— "रूक्षेऽतिरूक्षे विरेचननस्येन कृतेन स्तब्धता शोषश्च नासिकायामास्ये च स्याताम् । शिरसः शून्यता च, कफक्षयादि"त्याह । 'रूक्षेऽक्षिस्तब्धता' इति वा पाठः ॥ २३ ॥

**स्निग्धेऽतिकण्डूर्गुरुता प्रसेकारुचिपीनसाः ॥ २४ ॥**

**अतिस्निग्धे** शिरसि बृंहणशमनयोरन्यतरेण कण्ड्वादयः स्युः ॥२४॥

**सुविरिक्तेऽक्षिलघुतास्वरवक्त्रविशुद्धयः ।**

**कफवृद्ध्यां सुविरिक्ते** विरेचननस्येन सम्यग्विरिक्ते शिरसि अक्षिलाघवादयः स्युः ॥ २४ ॥

**दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते ॥ २५ ॥**

**दुर्विरिक्ते गदोद्रेको** विरेचननस्येन कफस्य सम्यगनिर्हरण व्याधेर्वृद्धिः । **अतिविरेचिते** अतिकफहरणाच्छिरसः क्षामता सादः स्यात् ॥ २५ ॥

अधुना प्रतिमर्शस्य विषयमाह—

**प्रतिमर्शः क्षतक्षीणबालवृद्धसुखात्मसु ।**

**प्रयोज्योऽकालपलिते**

**प्रतिमर्श इत्यादि । प्रतिमर्शः** क्षतादिषु प्रयोज्यः । अकालपलितेऽपि योज्यः ॥ २५ ॥

**न त्विष्टो दुष्टपीनसे ॥ २६ ॥**

**मद्यपीतेऽबलश्रोत्रे क्रिमिदूषितमूर्धनि ।**

**उत्कृष्टोत्क्लिष्टदोषे च**

**नत्विष्ट** इत्यादि । दुष्टपीनसादिषु तु षट्सु न प्रयोज्यः । **दुष्टपीनसो** नासारोगेषु वक्ष्यमाणः । **मद्यपीतः** पीतमद्यः । **अबलश्रोत्रो** दुर्बलश्रोत्रो रुद्धश्रवणमार्गः । क्रिमिदूषितो मूर्धा यस्य सः (क्रिमिदूषितमूर्धा) । एवमुत्कृष्टः प्रवृद्धो दोषो यस्य सः उत्कृष्टदोषः । तथा उत्क्लिष्टः प्रबलक्षोभो दोषो रोगकारी यस्य सः उत्क्लिष्टदोषः । सञ्चितानां स्वस्थानस्थितानां दोषाणां कारणान्तरेण स्थानात् प्रच्युतानां प्रबलविकारकारितोत्क्लेशः । **पाठ्यकारस्तु—** "उत्क्लिष्टोत्क्लिष्टदोषेषु अत्यन्तोत्क्लिष्टदोषेष्वि"त्याह । एषु प्रतिमर्शो न योज्यः ॥ २६ ॥

कुतो हेतोरित्याह—

**हीनमात्रतया तु सः ॥ २७ ॥**

हीना मात्रा यस्य सः हीनमात्रः तस्य भावो हीनमात्रता यस्मादसौ हीनमात्रतया प्रयुज्यते । एषां चोदीर्णरोगत्वात् तावता दोषोत्क्लेश एव भवति, न शमः । प्रतिमर्शो दुष्टपीनसादिषु हीनमात्रतया व्याधिवृद्धिमेव करोतीत्यर्थः । तुशब्देन दुष्टपीनसादिषु विरेचनं नस्यं कार्यमिति सूचयति ॥ २७ ॥

**निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम् ।**

**शिरोऽभ्यञ्जनगण्डूषप्रस्रवाञ्जनवर्चसाम् ॥ २८ ॥**

**दन्तकाष्ठस्य हासस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ।**

**असौ** प्रतिमर्शो **द्विबिन्दुको** निशादीनां पञ्चदशानां कालानामन्ते प्रयोज्यः । द्विबिन्दुक इत्यनेन प्रतिमर्शस्य मात्रां वक्ति ॥ २८ ॥

---

१. 'क्षतक्षाम', २. 'वर्षेऽपि' ३. 'हि' इति मुद्रिताष्टाङ्गहृदयपाठः-

**पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात् ॥ २९ ॥**

**दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः ।**

तत्र निशान्तादिषु **पञ्चसु** प्रतिमर्शे प्रयुक्ते स्रोतसां **शुद्धिर्भवति** । **क्रमात्** क्रमेण पठितेषु त्रिषु अध्वान्तादिषु प्रतिमर्शे दत्ते सति क्लमनाशः स्यात् । उपलक्षणं चेदम् । मनःप्रसादशिरोलाघवे अपि भवतः । शिरोऽभ्यञ्जनादिषु पञ्चस्वन्ते प्रतिमर्शे योजिते दृष्टेर्बलं स्यात् । ततोऽनन्तरं दन्तकाष्ठहासान्तयोर्द्वयोरिति शेषः । तयोर्यथासङ्ख्यं दन्तानां दृढत्वं पवनस्य शमश्च स्यात् ॥ २९ ॥

अधुना नस्यादीनां पुरुषविशेषे नियमं करोति—

**न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ ३० ॥**

**न चोनाष्टादशे धूमः कबलो नोनपञ्चमे ।**

**न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ ३१ ॥**

**न नस्यमित्यादि । "इदानीं प्रतिमर्शस्य सर्वदा प्रयोज्यत्वं वक्तुकामः शुद्धिनस्यधूमकबलानां वयोविशेषापेक्षः प्रयोग इति प्रथमं ब्रूते" इति हृद्याकारः । "न नस्यमित्यादिना प्रतिमर्शस्य सर्वकालिकत्वं ब्रुवन् सर्वेषामपि शोधनानां कालनियतिं ब्रूते" इति पाठ्यकारः !** ऊनसप्तवर्षे नस्यं न प्रयोजयेत् । पूर्णसप्ताब्दस्य नस्यार्हत्वम् । तथा अतिक्रान्ताशीतिवर्षे च नस्यं न प्रयोज्यम् । अतीताशीतिवर्षस्तु नस्यानर्हत्वम् । अपूर्णाष्टादशवर्षे च धूमो न प्रयोज्यः । पूर्णाष्टादशवर्षस्य धूमत्रयेऽपि योग्यता स्यात् । कबलोऽपूर्णपञ्चसंवत्सरे न प्रयोज्यः, पूर्णपञ्चमस्य कबलयोग्यता । ऊनदशमवर्षे शुद्धिर्वमनविरेचनलक्षणा न प्रयोज्या, अतीतसप्ततिवर्षे च शुद्धिर्न कार्या ॥ ॥ ३०, ३१ ॥

**आजन्ममरणं शस्तः प्रतिमर्शस्तु वस्तिवत् ।**

**मर्शवच्च गुणान् कुर्यात् स हि नित्योपसेवनात् ॥ ३२ ॥**

**न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्शवद् भयम् ।**

**आजन्मेत्यादि । तुर्विशेषे । प्रतिमर्शः** पुनरितरनस्यादिवन्न कालापेक्षः, किन्तु **वस्तिरिव आजन्ममरणं** जन्मनः प्रभृत्यामरणात् **शस्तो** हितः यथा वस्तिरूनवर्षात् प्रभृत्यामरणाद् विहितः तथायमपीत्यर्थः । जन्म च मरणं च जन्ममरणम् अवधिं कृत्वा प्रतिमर्शो हित इत्यर्थः । उक्तं हि निमिना—

"जातमात्रमुपादाय प्रतिमर्शो विधीयते ।
पञ्चवर्षमुपादाय कार्यं कवलधारणम् ॥
सप्तवर्षमुपादाय नस्तः कर्म विधीयते ।
तदूर्ध्वं द्वादशे वर्षे भक्षयेद् दन्तधावनम् ॥"

इत्यादि । स प्रतिमर्शो नित्योपसेवनात् सततमभ्यस्यमानो मर्श इव गुणान् सुखोच्छ्वासादीन् कुर्यादिति स्तुतिः । अथवा स प्रतिमर्शो नित्योपसेवनात् शिरोवस्तिसदृशान् (गुणान्) करोति मर्शसदृशांश्च गुणान् सुखोच्छ्वासादीन् करोति । अत्र प्रतिमर्शे यन्त्रणा 'उष्णोदकोपचारी स्यादि'त्यादिका नास्ति । व्यापद्भयं 'अक्षिस्तब्धता शोषः' इत्यादिभ्यो मर्श इव भयं नास्ति मर्शवत्, सप्तम्यन्ताद् वतिः ॥ ३२ ॥

तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ॥ ३३ ॥
शिरसः श्लेष्मधामत्वात् स्नेहाः स्वस्थस्य नेतरे ।

तैलमित्यादि । तैलमेव नित्याभ्यासेन प्रतिमर्शन्यायेन नस्यार्थे श्रेष्ठं भवति स्वस्थस्य । कुतः, मूर्ध्नः कफस्थानत्वात् । न त्वपरे स्नेहा वसामज्जघृतादयः, तेषां श्लेष्मलत्वादिति भावः ॥ ३३ ॥

आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता ॥ ३४ ॥
मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि ।
को मर्शं सपरीहारं सापदं च भजेत्ततः ॥ ३५ ॥
अच्छपानविकाराख्यौ कुटीवातातपस्थिती ।
अन्वासमात्रावस्ती च तद्वदेव च निर्दिशेत् ॥ ३६ ॥

आशुकारी मर्शः, चिरकारी प्रतिमर्शः । गुणोत्कर्षयुक्तो मर्शः, गुणापकृष्टतान्वितः प्रतिमर्शः । इत्यनयोर्भेदः । यदि च मर्शे प्रतिमर्शे च विशेषो न स्यात् ततो मर्शं सपरिहारं सव्यापदं च को भजेत्, न कश्चिदपि भजेदित्यर्थः । प्रतिमर्शविशेषवदच्छपानविकाराख्यौ स्नेहौ शीघ्रकारित्वादिना विशेषेण निर्दिशेत् । तथा कुटीप्रवेशस्थित्या यद्रसायनमुपयुज्यते, यच्च वातातपादिपरिहारस्थित्या रसायनं क्रियते ते च द्वे अपि तथैव विशेषेण निर्दिशेत् । तथान्वासोऽनुवासनं मात्रावस्तिश्च । तावप्येवं चिरकारित्वादिगुणौ निर्दिशेत् ॥ ३४–३६ ॥

स्वस्थस्य तैलमेव विहितमिति तैलं दर्शयन् नस्यार्थं प्रधानमणुतैलमाह जीवन्तीत्यादिना —

जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वीत्वङ्मधुकप्लवागरुवरीपुण्ड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभिः स्थिरे कृमिहरं पत्रं त्रुटिं रेणुकां
किञ्जल्कं कमलाद् बलां शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥३७॥
तैलाद्रसं दशगुणं परिशेष्य तेन
तैलं पचेच्च सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ ३८ ॥

जीवन्त्यादीनि सप्तविंशतिद्रव्याणि तैलसमानि प्राब्राणीति वृद्धवैद्यव्यवहारात् तैलसमानि परस्परसमभागानि गृहीत्वा एकीकृत्य परिच्छिद्य तुल्या ततः शतगुणे दिव्ये जले मेघमुक्ते गाङ्गे आकाशादेव पटादिभिर्गृहीते क्वाथयेद् विपाचयेत् । पाठ्यकारोऽपि—"औषधाच्छतगुणं दिव्यं जलम्"इत्याह । "तैलाच्छतगुणम्"इत्यरुणदत्तः । तावत् क्वाथयेत् यावद् दशगुणो रसः तैलात् स्यात् , यावत् क्वाथो दशभागशेषः स्यादित्यर्थः । तेन च क्वाथेन तैलं दशैव वारान् पचेत् । तैलाद् दशगुणं क्वाथं परिशेष्य तं क्वाथं दशधा विभजेत् । तेषु क्वाथभागेषु एकस्मिन्नेकस्मिन् सकृत् सकृत् पचेत्। हाटकोऽप्याह—"ततः क्वाथाद् दश भागाः समाः कार्याः । तत्रैकांशे समं तैलं तेन सह पाचयेत् । तत् पक्वं पुनर्द्वितीयेन पचेत् । एवं शेषांशैः इति। दशमे च पाके तैलसममाजं दुग्धमजाक्षीरं क्षिपेत् । एतत् तैलं नस्यार्थं महागुणं सर्वोत्तमगुणमणुतैलसंज्ञं कथयन्ति । (अणुषु तैलम्) अणुतैलम् अणुस्रोतोगामित्वात् । अणूनीन्द्रियस्रोतांसि प्रविशतीत्यर्थः । सूक्ष्मसिराप्रवेशेनेन्द्रियगुणाधायकत्वं दर्शयति। गोपी शारिवा । पुण्ड्राह्वं प्रपुण्डरीकम् । धावन्यौ कण्टकारिका बृहती च । सुरभिः सल्लकी । स्थिरे सालपर्णी पृश्निपर्णी च । सर्वद्रव्याणि कर्मान्तान्यभिधाय सुरभिरिति कथं प्रोक्तवान् न जानीमः । संग्रहेऽपि—"बृहतीद्वयांशुमतीद्वये"इति प्रोक्तम्। सुरभी इति केचित् पठन्ति । सुरभिमित्यस्मद्गुरवः पठन्ति ॥ ३७, ३८ ॥

१. 'वरा' २. 'रेणुकं' ३. 'कमलाह्वयं' मुद्रिताष्टाङ्गहृदयपाठः

नस्याभ्यासः कर्तव्य इति तं प्रस्तौति—

घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ।
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ ३९ ॥

घनेत्यादि । नस्यशीलिनो निबिडोन्नतररमणीयत्वगादयः स्युः । घनादिगुणं त्वगादि येषां त एवम् । घनादीनां त्वगादिभिर्यथासंभवं संबन्धः । तथा पुष्टेन्द्रियाः पलितवर्जिता भवेयुरिति । केचित् स्नेहस्वेदाभ्यां सह सप्तकर्माणीति प्रत्यवतिष्ठन्ते । तन्न श्रद्धेयम् "आशु सकलदोषनिर्हरणसामर्थ्य-रूपस्य कर्मलक्षणस्य स्नेहस्वेदयोरभावात्" इति न्यासे ॥ ३९ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
विंशोऽध्यायः ॥

## अथ एकविंशोऽध्यायः ।

ऊर्ध्वाङ्गचिकित्साप्रसङ्गाद् धूमपानविधिं जिगदिषुराह —

अथातो धूमपानविधिर्नामाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
जत्रूर्ध्वकफवातोत्थविकाराणामजन्मने ।
उच्छेदाय च जातानां पिबेद्धूमं सदात्मवान् ॥ १ ॥

जत्रूर्ध्वेत्यादि । "उत्तमाङ्गाद् दोषनिर्हरणप्रसङ्गे धूमस्यापि तद्गुणत्वात् तद्विधानप्रदर्शनार्थोऽयमध्याय आरभ्यते" इति हाटकः । "धूमं पीत्वे-त्युक्तत्वाद् धूमविधिमाहे"ति पाठ्यकारः । "अथ धूमविधिर्नस्यविधौ धूमप्र-सक्ततः जत्रूर्ध्वव्याधिहन्तृत्वादथवा धूमवर्णना" इति हृद्याकारः । जत्रुण ऊर्ध्वं कफवातोत्थविकाराणां कफेन वातेन च कफवाताभ्यां वा उत्था उत्थिता उत्थानशीला इत्यर्थः । तेषां श्लेष्मवातोद्भवानां विकाराणामजन्मने असम्भवायानुत्पत्त्यै इत्यर्थः । तथा जातानां सम्भूतानाम् । उत्पन्नाना-मुच्छेदाय विनाशाय सदा सर्वर्तुषु धूमं पिबेत् । आत्मवान् सुमतिः हिताहार-विहार इत्यर्थः । "आत्मवान् जितात्मे"ति हृद्याकारः । धूनोति दोषवैषम्यमि-ति धूमः । कम्प्यते वायुनेति वा धूमः । जत्रूर्ध्वमिति वा पाठः ॥ १ ॥

**स्निग्धो मध्यः स तीक्ष्णश्च वाते वातकफे कफे ।**
**योज्यः**

स च धूमः स्निग्धमध्यतीक्ष्णभेदेन त्रिविधो यथाक्रमं वातादिषु योज्यः । स्निग्धो वाते, मध्यो वातकफसंसर्गे, तीक्ष्णः कफे योज्य इति । स्निग्धो बृंहणो मृदुरिति पर्यायाः । शमनः प्रायोगिको मध्यम इति द्वितीयस्य । शोधनो विरेचनस्तीक्ष्ण इति तृतीयस्य ।

त्रिविधस्यापि प्रतिषेधविषयमाह—

**न रक्तपित्तार्तविरिक्तोदरमेहिषु ॥ २ ॥**
**तिमिरोर्ध्वानिलाध्मानरोहिणीदत्तवस्तिषु ।**
**मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥ ३ ॥**
**शिरस्यभिहते पाण्डुरोगे जागरिते निशि ।**

(रक्त)पित्तार्त्यादिषु निशि जागरितान्तेषु धूमो न योज्यः नाचरणीयः । वाते वातकफे कफे च धूमस्यानुज्ञातत्वात् पित्तार्तौ प्राप्तिरेव नास्ति । तत् किं प्रतिषेधेन ? ब्रूमः । वातप्रकृतेर्वातपित्तार्तौ सत्यां कश्चिद् भिषक्पाशो भ्रान्त्या प्रकृत्यनुरूपोपक्रमचिकीर्षया धूमं नियोजयेत् । तन्निषेधार्थमिदमुक्तम् । अथवा पित्तप्रकृतेर्वातश्लेष्मव्याध्युद्भूतौ न योज्यमिति प्रतिपादनार्थमिदं गदितमिति । आशिशब्दो मत्स्यादिषु विषान्तेषु प्रत्येकं योज्यः । अत्र च यथासंभवं पानं मद्यादिषु, भोजनं मत्स्यादिषु । अशितग्रहणं चतुर्विधेऽप्याहारेऽस्तीति चतुर्विधेऽपि ह्याहारे अशनशब्देनास्त्येव व्यवहारः । यथा "मात्राशी सर्वकालं स्यादि"ति । केचित्तु यवागूपायिन्यपि धूमपानं नेच्छन्ति । तेषां हि प्रयुक्तो धूमो भ्रमज्वरशिरोविघातेन्द्रियोपतापताल्वशोषपाकधूमायनच्छर्दिमूर्च्छारक्तपित्तादीनि मृत्युं वा जनयति ॥ २-३ ॥

**रक्तपित्तान्ध्यबाधिर्यतृण्मूर्च्छामदमोहकृत् ॥ ४ ॥**
**धूमोऽकालेऽतिपीतो वा**

अकाले पीतः काले वातिपीतो धूमो रक्तपित्तादीन् करोति । मूर्च्छा संज्ञानाशः । मोहश्चित्तनाशः, 'मुह वैचित्ये' इति पाठात् । आन्ध्यबाधिर्यग्रहण-

धूमाङ्गोपलक्षणार्थम् । तेन संग्रहोक्तमर्दितमपि गृह्यते । अकाले अयोग्यव्याधौ पूर्वोक्ते रक्तपित्तार्त्यादौ पीतः प्रयुक्तो धूमो रक्तपित्तादिकृत् । अप्रतिषिद्धेऽपि काले क्षुतादावतिमात्रया पीतो रक्तपित्तादिकृत् ॥ ४ ॥

तत्र शीतो विधिर्हितः ।

तत्राकाले पीतेऽतिमात्रया च पीते धूमे शीतः सर्पिष्पाननस्यालेपपरिषेकादिविधिरुपक्रमो रक्तपित्ताध्यायोक्तो हितो बाह्यान्तः कर्तव्यः । "तत्र रक्तपित्तादौ" इति हाटकः ॥

"हृत्कण्ठेन्द्रियसंशुद्धिः शिरसो लाघवं शमः ।
यथेरितानां दोषाणां सम्यक्पीतस्य लक्षणम् ॥"

इदानीं त्रयाणां धूमानां पृथक् पृथक् कालं दर्शयन्नाह—

क्षुतजृंभितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ॥ ५ ॥
हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ।
कालेष्वेषु निशाहारनावनान्ते च मध्यमम् ॥ ६ ॥
निद्रानस्याञ्जनस्नानछर्दितान्ते विरेचनम् ।

क्षुतेत्यादि । क्षुतादीनामष्टानामन्ते मृदुं स्नेहनाख्यं धूमं पिबेत् । एष्वेव पूर्वोक्तेषु कालेषु क्षुतान्तादिषु निशादीनामन्ते च मध्यमं धूमं पिबेत् । मध्य एव मध्यमः । 'मध्यान्मः' (४-३-८) इति मः । निद्रादीनामन्ते विरेचनं तीक्ष्णं धूमं पिबेत् । एषु हि कालेषु वातकफोत्क्लेशो भवति ॥ ५-६ ॥

सांप्रतमस्य नेत्रस्य स्वरूपमाह—

वस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजुम् ॥ ७ ॥
मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम् ।

वस्तीत्यादि । वस्तौ नेत्रं वस्तिनेत्रं वस्तिनेत्रेण समं द्रव्यं वस्तिनेत्रतुल्यं द्रव्यमुपादानकारणं हेमादिधातुदार्वस्थिवेण्वादि यस्य धूमनेत्रस्य । तद् वस्तिनेत्रसमद्रव्यं हेमादिसम्भवमित्यर्थः । त्रिकोशं त्रिपर्व यस्य वंशस्येवान्तः स्तोकस्तोके त्रीणि सूक्ष्मच्छिद्राणि विबन्धनानि भवन्ति । तैर्हि प्रतिहतो धूमः शनैः शिरः प्रविशन् सुखकरो भवति । तथाचागमः—

"दूराद् विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः ।
नेन्द्रियं बाधते धूमः" ॥

इति । तस्य च नेत्रस्यान्तः शिथिला शलाका (तथा) धार्या यथा पांस्वादि न प्रविशति । "धूमपानकाले त्वपनेया" इतीन्दुः । "त्रयः कोशाः पर्वद्वयविभक्ता नेत्रान्तरालभागा यस्य नेत्रस्य तत् त्रिकोशम्" इति हृद्याकारः । "*त्रिकोशं त्रिविधकोशाकारम्" इत्यरुणदत्तः । ऋजु न वक्रम् । अकुटिलमित्यर्थः । मूलं चाग्रं च तस्मिन् यथासंख्यमङ्गुष्ठकोलास्थिप्रवेशम् । अङ्गुष्ठं च कोलास्थि चेति समाहारे द्वन्द्वः । तत् प्रविशत्यस्मिन्निति 'पदरुजविशस्पृशो घञ्' (३.३.१६) इति घञ् । मूलेऽङ्गुष्ठप्रवेशद्वारम्, अग्रे बदरास्थिप्रवेशद्वारम् । मूले धूमवर्तिप्रणिधानार्थमङ्गुष्ठप्रवेशाच्छिद्रकरणम् । एवं धूमनेत्राख्यं यन्त्रं शिल्पिभिः कारयेद् भिषक् । अथवा कर्मारैरिति शेषः ॥ ७ ॥

इदानीं नेत्रस्य दैर्घ्यप्रमाणमाह—

**तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ॥ ८ ॥**
**अङ्गुलानां क्रमात् पातुः प्रमाणेनाष्टकानि तत् ।**

तीक्ष्णेत्यादि । तदिति नेत्रं पूर्वोक्तम् । तन्नेत्रं तीक्ष्णादिकस्य त्रिविधस्य धूमस्य क्रमाद् यथासंख्यं दैर्घ्येण पातुरातुरस्य त्रीण्यङ्गुलाष्टकानि चत्वार्यङ्गुलाष्टकानि पञ्चाङ्गुलाष्टकानि स्युः । अर्थः—तीक्ष्णे चतुर्विंशतिरङ्गुलानि स्युः । स्नेहने द्वात्रिंशदङ्गुलानि स्युः । मध्ये चत्वारिंशदङ्गुलानि स्युरिति ।

"धूमे कासहरे नेत्रं वमने च दशाङ्गुलम् ।
व्रणधूपननेत्रं तु स्यादष्टाङ्गुलमायतम् ॥
धूमो दूरात् प्रवृत्तो हि नेत्रपर्वतनूकृतः ।
नेत्रस्योर्ध्वाग्रतनुतावशाच्च तनुतां गतः ॥
शनैः श्लिष्यन् त्वचो बाधां न करोति न नेत्रयोः" ॥ इति ॥

'तीक्ष्णमध्यस्नेहनेषु' इति केचित् पठन्ति ॥

इदानीं धूमपानप्रकारमाह—

**ऋजूपविष्टस्तच्चेता विवृतास्यस्त्रिपर्ययम् ॥ ९ ॥**
**पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत् ।**

---

* इदं मुद्रितारुणदत्तव्याख्यायां न दृश्यते ।

ऋज्वित्यादि । ऋजु अवक्राङ्गम् उपविष्ट आसीनः । तथा तच्चेताः धूमपानगतचित्तः । तथा विवृतास्यः प्रसारितमुखः व्यात्तमुख इत्यर्थः । नेत्राप्रनिविष्टदृष्टिरित्यपि वक्तव्यम् । हृद्याकारोऽपि— "धूमनेत्रगताक्षश्च स्याद्" इत्याह । कथं पिबेत्, त्रिपर्ययम् आक्षेपविसर्जनावपनार्थं त्रयः पर्यायाः क्रमा यस्य स त्रिपर्ययः तम् । आदानविसर्गयोस्त्रितयेन युक्तं धूमं मुखेन पिबेदित्यर्थः । आक्षेप आदानम् । मोक्षः स्वीकृतस्य विसर्गः । ताभ्यामेकं पानम् । त्रिपर्ययं त्रिवारान् । पिधायच्छिद्रमिति, प्रकृतत्वान्नासिकायाः छिद्रम् । एकैकमिति, 'एकं बहुव्रीहिवत्' (८-१-९) इति (बहुत्वसुलोपनं ?)। तेनायमर्थः— एकं नासापुटमङ्गुल्या पिधाय स्थगयित्वा अपरेण नासापुटेनाकृष्य धूमं पिबेत् । "ऋजूपविष्ट इत्यादिना नासिकया पिबेदित्येवमन्तमेकमेव वाक्यम्, नासिकाधूमपानविषयमेव च" इति केचित् ॥

नासिकामुखपानयोर्विषयभेदमाह—

प्राक् पिबेत् नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ॥ १० ॥
उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कण्ठगे ।

प्रागित्यादि । घ्राणगते शिरोगते वा दोषे उत्क्लिष्टे स्वस्थानाच्चलिते सति प्राक् पूर्वं नासया पिबेत् पश्चान्मुखेन । अनुत्क्लिष्टे दोषे उत्क्लेशनार्थं वक्त्रेण प्राक् पिबेत् पश्चान्नासिकया । कण्ठगते दोषे उत्क्लिष्टे प्राङ्मुखेन पिबेत् । कण्ठगे दोषेऽनुत्क्लिष्टे तु विपरीतम् । उत्क्लेशनार्थं प्राङ्नासिकया पिबेत् पश्चाद् वक्त्रेणेति विपरीतत्वम् ॥

मुखेनैवोद्वमेद् धूमं नासया दृग्विघातकृत् ॥ ११ ॥

मुखेनैवेत्यादि । नासया आस्येन वा पीतं धूमं वक्त्रेणैवोद्वमेद् उत्सृजेत्, न तु घ्राणेन । तत्र हेतुमाह— नासया उत्सृज्यमानो धूमो दृष्टेर्विघातं नाशं तिमिरादिं करोति । तस्मीन्मुखेनैवोत्सृज्यते नतु घ्राणेन ॥ ११ ॥

उत्क्लेशनप्रकारं दर्शयति—

आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रिभिः ।

आक्षेपेत्यादि । आक्षेपः आदानं धूमस्य । मोक्षः आत्तस्य विसर्जनम् । आक्षेपमोक्षैरादानविसर्गैस्त्रिभिस्त्रिभिः संयुक्तैस्त्रीन् वारान् धूमः पातव्य उत्क्ले-

१. 'एकैकमित्येकं बहुव्रीहिवदिति द्वित्वसुब्लोपौ' इत्यरुणदत्तः ।

शनार्थम् । त्रिरिति 'द्वित्रिचतुर्भ्यः सुच्' (५-४-१८) इति सुच् । 'आक्षेपमोक्षैः पातव्यः स च धूमास्त्रिभिस्त्रिभिः' इति वा पाठः । त्रिपर्यय इत्यध्याहार्यम् । आगमो हि—

"तस्य धूमस्य पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः"

इति । त्रिभिरेवापानैः प्रयोग एकः कृतो भवति । आक्षेपमोक्षावापानमित्याहुः ॥ [११ ॥

अह्न इत्यादिना धूमत्रयस्य पानसंख्यां दर्शयति—

अह्नः पिबेत् सकृत् स्निग्धं द्विर्मध्यं शोधनं परम् ॥ १२ ॥

त्रिश्चतुर्वा

अह्नः अहोरात्रे सकृदेकवारं स्निग्धं मृदुं धूमं पिबेत् । *अह्न इति षष्ठी सप्तम्यर्थे । "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" (२-३-६४) इति प्रायोगिकः । मध्यमं धूमं द्विः अह्नो द्वौ वारौ पिबेत् । अह्न इत्यत्राप्यनुवर्तते । शोधनं तीक्ष्णं धूमं त्रिस्त्रीन् वारान् चतुर्वा चतुरो वारान् अह्नः पिबेत् । कृत्वसुजर्थे वारशब्दः ॥

मृदौ तत्र द्रव्याण्यगरुगुग्गुलु ।
मुस्तस्थौणेयशैलेयनलदोशीरवालकम् ॥ १३ ॥

वराङ्गकौन्तीमधुकाविल्वमज्जैलवालुकम् ।
श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम् ॥ १४ ॥

सल्लकीकुङ्कुमं माषा यवाः कुन्दुरुकं तिलाः ।
स्नेहः फलानां साराणां मेदो मज्जा वसा घृतम् ॥ १५ ॥

मृदावित्यादि । तत्र तेषु त्रिषु धूमेषु मध्ये मृदौ स्नेहने धूमे द्रव्याण्यगुरुप्रभृतीनि घृतान्तानि योज्यानि । वराङ्गो लवङ्गः । कौन्ती हरेणुः । सल्लकी परूषकः । फलानामक्षोलनालिकेरादीनां स्नेहः । तथा साराणां खदिरासनादीनां स्नेहः । 'मधु(क)मदनयोरेकयोनित्वादुष्णर्स्योपयोगो मदनस्यात्र विरुद्धः' इति केचित् । तच्चायुक्तम् द्रव्यान्तरसंयोगत्वात् । घृतं चात्र गव्यमेव प्रायं मुख्य(त्वमु ? त्वाद् । उ)क्तं हि— 'गव्ये क्षीरघृते श्रेष्ठे' इति ॥ १३-१५ ॥

---

* अह्न इति 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति षष्ठी । १. 'दुष्णस्यो' इति अरुणदत्त ।

शमने सल्लकी लाक्षा पृथ्वीका कमलोत्पलम् ।
न्यग्रोधोदुंबराश्वत्थप्लक्षलोध्रत्वचः सिता ॥ १६ ॥
यष्टीमधुः सुवर्णत्वक् पत्मकं रक्तयष्टिका ।
गन्धाश्चाकुष्ठतगराः, तीक्ष्णे ज्योतिष्मती निशा ॥ १७ ॥
दशमूलमनोह्वालाक्षा श्वेता फलत्रयम् ।
गन्धद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ १८ ॥

**शमने** मध्यमे धूमे द्रव्याणि सल्लक्यादीनि योज्यानि । सुवर्णत्वक्= ([illegible]) । रक्तयष्टिका=(ചെവ്വള്ളിക്കൊടി) । **गन्धाश्चाकुष्ठतगराः** गन्धद्रव्याणि कुष्ठतगरवर्ज्यानि शमने योज्यानि । गन्धशब्देन गन्धद्रव्याण्येवोच्यन्ते । नच गुणशब्देन गुणिषु प्रयोगः शिष्टसंमतः । यथाह—

"न कदाचित् प्रयोगोऽस्ति चन्दनं गन्ध इत्यपि"

इति । गन्धशब्देन गन्धवन्ति एलादिगणपठितानि द्रव्याणि गृह्यन्ते । कुष्ठतगरवर्जनं किमिति चेत् तयोरतितीक्ष्णत्वादिति भावः ।

**तीक्ष्णे** धूमे द्रव्याणि ज्योतिष्मत्यादीनि योज्यानि । **गन्धद्रव्याणि तीक्ष्णान्युग्राणि** कुष्ठतगरादीनि लाक्षादीनि च । यथाह—

"लाक्षा सर्जरसश्चैव श्रीवासः कुन्दुरुस्तथा ।
नवो नळश्च धूमज्ञैरुग्रधूप इति स्मृतः ॥"

इति । **गणो मूर्धविरेचनः** शिरःशोधनः शोधनादिगणः । सङ्ग्रहे 'वेल्लापामार्गे'-त्यादि पठितः ॥ १६-१८ ॥

जले स्थितामित्यादिना धूमवर्तिविधानमाह । अथवा धूमार्थं धूमद्रव्यैर्वर्तिकल्पनामाह—

जले स्थितामहोरात्रमिषीकां द्वादशाङ्गुलाम् ।
पिष्टैर्धूमौषधैरेवं पञ्चकृत्वः प्रलेपयेत् ॥ १९ ॥
वर्तिरङ्गुष्ठकस्थूला यवमध्या यथाभवेत् ।
छायाशुष्कां विगर्भां तां स्नेहाभ्यक्तां यथायथम् ॥ २० ॥
धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत् ।

**पूर्वं शुष्कामिषीकां** कुशदर्भादिमूलं वा शुष्कम**होरात्रं सकलं जले स्थापयेत्** । अहोरात्रमित्यत्यन्तसंयोगे द्वितीया । रात्रिन्दिवमम्भसि स्थितत्वादु-

च्छूनां दैर्घ्येण द्वादशाङ्गुलामिषीकां पञ्चकृत्वः पञ्चवारान् धूमोक्तैर्यथास्वमौषधैः सुपिष्टैरक्षमात्रैरिषीकामध्ये नवाङ्गुले उच्छोष्योच्छोष्य प्रकर्षेण लेपयेत् । एवं लेपयेदिति वक्ष्यमाणापेक्षम् । यथा लिप्ते वर्तिरङ्गुष्ठपरिणाहा यवमध्या यववत् स्थूलमध्या कृशभागद्वया स्यात् तथा लेपयेत् । एतदाकृतिविधानं च त्रिविधेऽपि नेत्रे वर्तेः सुखप्रवेशार्थम् । अक्षमात्रं पिष्टमौषधं पञ्चधा विभज्य एकेनांशेन लिम्पेत् । पूर्वलिप्तस्य शोषणे द्वितीयादिना भागेन लेपयेदिति । उक्तं च—

"तत्र धूमौषधं पिष्ट्वा बिलालपदमात्रकम् ।
इषीकामूलमालिम्पेन्मूलं वा कुशकाशयोः ॥

पञ्चकृत्वोऽथवा सप्तकृत्वो वार्तिर्यथा तथा ।
स्थूलमध्या कृशप्रान्ता * पट्वाकारा यवोपमा ॥"

इति । तां वर्तिं इषीकां वा छायया शुष्कां विगर्भां विगतेषिकां जले स्थितत्वादुच्छूना पश्चादुच्छुष्का इषीका वर्तिं मुञ्चति । तां यथास्वं स्नेहेन घृतादिनाभ्यक्ताम् । 'कफवातहरस्नेहेन तैलादिना सिक्ताम्' इति हृद्याकारः । अग्निप्लुष्टामङ्गारप्रदीप्तां धूमनेत्रार्पितां त्रिविधधूमनेत्रमूलच्छिद्रनिहितां पातुं पानार्थं प्रयोजयेत् । वचनं हि— "यथास्वं च धूमद्रव्याणां कल्केन श्लक्ष्णेनाक्षमात्रेण द्वादशाङ्गुलायतामिषीकामम्भस्यहोरात्रोषितां तत्र नवाङ्गुलां पञ्चप्रलेपामङ्गुष्ठस्थूलां यवमध्यां छायाविशुष्कां वर्तिं विगतेषीकां कृत्वा स्नेहाक्तामङ्गारेषु प्रदीप्य नेत्रमूलच्छिद्रे वर्तिं धूममुद्वहन्तीं निधाय यथार्हं पानाय योजयेत्" इति । धूमनेत्रार्पितामिति । अत्र द्विधा प्रयोगः— तां वर्तिं ज्वालयित्वा ज्वालां विनाश्य तदेव पूर्वज्वलितमग्रं नेत्रमूले प्रवेश्य धूमपानं वह्नौ धूमे पातव्ये, वर्तिं नेत्रमूले समर्प्याधोभागे ज्वालयित्वा वर्त्यन्तर्गतधूमस्ये पातव्ये, स्यादिति ॥ १९, २० ॥

अधुना अपरमपि धूमविधानप्रकारमाह—

**शरावसंपुटच्छिद्रे नालीं न्यस्य दशाङ्गुलाम् ॥ २१ ॥**
**अष्टांगुलां वा वक्त्रेण कासवान् धूममापिबेत् ।**

शरावेत्यादि । शरावयोः संपुटं युग्मं तस्य छिद्रे नालीं दशाङ्गुलामष्टाङ्गुलप्रमाणां वा न्यस्य निवेश्य कासी धूममापिबेत् । अर्थः— अपधूम-

* पट्वः = कारवेल्ली तदाकारा ।

खदिरबदरादिदारुस्थिराङ्गारप्रकरपूर्णे शरावे कासहरचूर्णं सस्नेहं गुलिकां वा न्यस्य ओष्ठैकदेशे वृत्ताच्छिद्रेण मध्याच्छिद्रेण वा शरावेण सम्यक् पिधाय तस्मिन् पार्श्वच्छिद्रे मध्याच्छिद्रे वा नाडीं न्यस्य निवेश्य कासामयी मुखेन धूमं पिबेत् । कासवतो धूमपाने नासया न प्रयोगः । सङ्ग्रहे चोक्तम्—"कासघ्नं तु चूर्णं गुलिकां वा निर्धूमदीप्तस्थिराङ्गारपूर्णे सुसंस्थिते शरावे प्रक्षिप्यान्येन मूर्ध्नि प्रवृत्तच्छिद्रेण शरावेणापिधाय तत्स्रोतसि नेत्रं कृत्वा मुखेनैव धूमं पिबेत् । उरःप्राप्तं च मुखेनैवोद्वमेत् । प्रशान्ते च धूमे पुनः क्षिपेत् पिबेद्वा दोषशुद्धेर्लाघवात् । तद्वद्वमनमपि कृसरामनतिघनां पीत्वा पिबेत् । तद्वद् व्रणमपि धूपायेत्, वैशद्याय क्लेदवेदनोपशमाय च" । धूपनं शरीरस्य बहुधा प्रयोज्यम् । धूमोऽन्तः । "धूञ् कम्पने" धातुः । 'इषियुधीन्धिदसिश्यासूधूभ्यो मक्' (उ० १–१५०) इति औणादिको मकारः कर्त्रर्थः । कफवातयोः कम्पनं करोतीति । धूमस्यायोगे दोषोत्क्लेशाद् रोगवृद्धिः । अतियोगे पित्तरक्तकोपनिमित्ता व्याधयः स्युः । सम्यग् लक्षणं सङ्ग्रहाद् ज्ञेयम्—

"हृत्कण्ठेन्द्रियसंशुद्धिः शिरसो लाघवं शमः ।
यथेरितानां रोगाणां सम्यक् पीतस्य लक्षणम् ॥"

इति ॥ २१ ॥

**कासः श्वासः पीनसो विस्वरत्वं**
**पूतिर्गन्धः पाण्डुता केशदोषः ।**
**कर्णास्याक्षिस्रावकण्ड्वार्तिजन्यं**
**तन्द्रा हिध्मा धूमपं न स्पृशन्ति ॥ २२ ॥**

**कास** इत्यादि । कासादयो धूमपं न स्पृशन्ति धूमं पातुरेते न संभवन्तीति भावः । **पूतिर्गन्धः** आस्यनासिकयोः । **पाण्डुता** मुखस्य । **केशदोषा** अकालपलितपिञ्जरत्वादयः । **कर्णादिषु** प्रत्येकं स्रावादिचतुष्टयं योज्यम् ॥ २२ ॥

इति हृदयबोधिकायाम् एकविंशोऽध्यायः ॥

---

## अथ द्वाविंशोऽध्यायः प्रारभ्यते ।

"जत्रूर्ध्वरोगप्रस्तावादाह—धूमविधेरनुगण्डूषादिविधिं पश्चादाश्च्योतादिविधिं तत । अथवा कवोष्णाम्बुकबलम्" इत्युक्तत्वाद् गण्डूषादिविधिमाह । अथ वा,

धूमगण्डूषयोर्वक्त्रयोज्यत्वसमभावतः।
धूमानन्तरमुच्यन्ते गण्डूषाद्यास्तु संप्रति ॥

**अथातो गण्डूषादिविधिन्नामाध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

**चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ।**
**रोपणश्च, त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ १ ॥**

गण्डूषादयोऽस्मिन् विधीयन्ते इति गण्डूषादिविधिरध्यायः । आदिग्रहणेन कवलादयो बोद्धव्याः । गण्डूषः स्निग्धादिभेदेन चतुष्प्रकारः । चत्वारः प्रकारा भेदा यस्य स चतुष्प्रकारः । गण्डे धार्यो द्रवो **गण्डूषः**। गण्डशब्दोऽत्रास्य वाचकः 'गण्डुं वदनैकदेशे'[1] इति धातुः । तत्र वदनैकदेशे मुखे ऊष इत्यौणादिको धार्यमाणद्रवमाचष्टे । तानेव प्रकारानाह— **स्निग्धः** इति । शमनश्च शोधनश्चेति द्वन्द्वसमासः । रोपणश्च ।

**अन्त्यो व्रणघ्नः, स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ।**

तत्र तेषु गण्डूषेषु मध्ये **त्रयः** स्निग्धादयो गण्डूषाः यथासंख्यं **त्रिषु** वातादिषु योज्याः । वाते स्निग्धः पित्ते शमनः श्लेष्माणि शोधन इत्यर्थः। **अन्त्य**श्चतुर्थो रोपणाख्यो **व्रणघ्न** आस्यव्रणशोधने योज्य इत्यर्थः ॥

तेषां साधनान्याह—

**स्नेहैः, संशमनस्तिक्तकषायमधुरौषधैः ॥ २ ॥**

**स्निग्ध** इत्यादि । **अत्र** एषु गण्डूषेषु मध्ये **स्निग्धो** वातहरैः स्वाद्वादिभिर्भवति । **अरुणदत्तस्तु** 'स्निग्धो मधुरादिसाधितैः स्नेहैर्भवती'त्याह ।

---

1. **'वि' इति मुद्रितधातुपाठः.**

(सं)शमनास्तिक्तकषायमधुरशीतैरौषधैः पटोलारिष्टजम्ब्वाम्रमालतीपल्लवोत्पल-मधुककाथशर्करोदकक्षौद्रक्षीरेक्षुरसघृतादिभिः स्यात ॥ २ ॥

शोधनस्तिक्तकट्वम्लपटूष्णैः, रोपणः पुनः ।
कषायतिक्तकैः, तत्र स्नेहः क्षीरं मधूदकम् ॥ ३ ॥

शोधनो गण्डूषः तिक्तकट्वादिभिरौषधैर्भवति । रोपणस्तु गण्डूषः कषायतिक्तकैः स्यात् ॥

ननु द्रव्याणां शुष्कत्वात् गण्डूषानुपपत्तिरित्याह.–

शुक्तं मद्यं रसो मूत्रं धान्याम्लश्च यथायथम् ।
कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ४ ॥

तत्रेत्यादि । तत्र तेषु पूर्वोक्तेषु गण्डूषेषु स्नेहादिकं कल्कैर्यथास्वं युक्तं विपक्वं वा कल्कैर्यथास्पर्शं शीतमुष्णं वा प्रयोजयेत् । हृद्याकारोऽप्याह– ‘वाते तैलादयः स्नेहा यथायथं कल्कैर्वातादिहरद्रव्यं पिष्ट्वा चूर्णयित्वा वा संयोज्य धार्याः तद्वदितरयोरपि विपक्वं वातादिहरद्रव्यसिद्धैः कषायैर्वा गण्डूषो धार्यः’ इति ॥ ३, ४ ॥

दन्तहर्षे दन्तचाले मुखरोगे च वातिके ।
सुखोष्णमथवा शीतं तिलकल्कोदकं हितम् ॥ ५ ॥

दन्तहर्षादौ कवोष्णमथवा शीतं दोषवशात् तिलकल्कोदकं हितम् । हृद्याकारोऽप्याह–‘दन्तहर्षादिषु वातिकेषु सुखोष्णमीषदुष्णं तिलकल्कमिश्रमुदकं हितम् । अथवा शीतं पित्तसम्बन्धे रक्तसम्बन्धे च सति शीतम्’ इति ॥ ५ ॥

गण्डूषधारणे नित्यं तैलं मांसरसोऽथवा ।

गण्डूषधारणे नित्यं तैलं मांसरसो वा हितम् । नित्यमिति स्वस्थ-विषयम् । गण्डूषधारणे नित्यं तैलं हितम् ।

आगमो हि–

“हन्वोर्बलं स्वरबलं वदनोपचयः परः ।
स्यात् परं रससंज्ञानमन्ने च रुचिरुत्तमा ॥

न चास्य कण्ठदोषः स्यादोष्ठयोः स्फुटनाद् भयम्।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च।
खरानपि परान् भक्ष्यान् स्नेहगण्डूषधारणात्॥"

इति॥

ऊषादाहान्विते पाके क्षते वागन्तुसम्भवे॥ ६॥
विषक्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथवा।

ऊषादिषु सर्पिर्गण्डूषे धार्यं क्षीरं वा। ऊषादाहान्विते—वक्रे इति शेषः। ऊषा प्रादेशिको दाहः। पाको मुखपाकः। क्षते वागन्तुजे। आगन्तुश्चूर्णादिः। तथा विषे क्षाराग्निभ्यां दग्धे च॥

वैशद्यं जनयत्यास्ये संदधाति मुखव्रणान्॥ ७॥
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम्।

माक्षिकगण्डूषधारणं मुखे वैशद्यं जनयति पिच्छिले वदने मधुधारणे सति वैशद्यमपैच्छिल्यं जनयति। कफहरं हि तत्। मुखे व्रणांश्च सन्दधाति व्रणहरं चेत्यर्थः। तथा दाहं तृष्णां च प्रशमयति॥

धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्॥ ८॥

धान्याम्लं गण्डूष उपयुक्तं वदनवैरस्यं तथा मलं दौर्गन्ध्यं चापनयति॥ ८॥

तदेवालवणं शीतं मुखशोषहरं परम्।

तदेव काञ्चिकम् अलवणमीषल्लवणयुक्तं परमतिशयेन मुखशोषहरम्। अलवणमिति लवणनिषेधात् पूर्वत्र लवणविधिर्न भवतीत्यभिप्रायः॥

आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम्॥ ९॥

क्षाराम्बु क्षारेण स्वर्जिकादिना युक्तं जलं कफस्य चयं भिनत्ति॥ ९॥

सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम्।

सुखोष्णोदकगण्डूषैर्वक्त्रलाघवं सम्पद्यते। सुखोष्णोदकधारणं कफहरं च, लाघवफलनिर्देशाद् गौरवस्य कफकार्यत्वादिति॥

निवाते सातपे स्विन्नमृदितस्कन्धकन्धरः॥ १०॥
गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत्।

**निवात** इत्यादिनेतिकर्तव्यतोक्तिः । **निवाते** वातरहिते **सातपे** च आतपसहिते देशे **आसीनः** । हाटकोऽपि—'निवाते आतपसहिते स्थाने सुखोपविष्टः" इत्याह । तथा **स्विन्नमृदितस्कन्धकन्धरः** स्कन्धौ च कन्धरा च स्कन्धकन्धरं पूर्वं स्विन्नं पश्चान्मृदितं स्कन्धकन्धरं यस्य स एवम् । **गण्डूषं** वरमध्यावरं **क्रमाद्** वक्त्रार्धत्रिभागचतुर्भागपूरणद्रवरूपं कोलप्रमाणकल्करूपं वा गण्डूषं **धारयेत्** । **अपिबन्**, द्रवत्वादधोगामित्वं हि तस्य सम्भाव्यत इति तन्निषेधः । तथा **किञ्चिदुन्नतास्यः** । उक्तवांश्च—"अथ निवाते सातपे सुखोपविष्टस्तन्मनाः स्विन्नमृदितस्कन्धकपोलललाटदेशः क्रमाद् वक्त्रार्धत्रिभागचतुर्भागपूरणीं द्रवमात्रां कल्कं वा कोलप्रमाणं किञ्चिदुन्नामितमुखोऽनभ्यवहरन् धारयेत्" इति ॥

कियांस्तस्य काल इत्याह—

**कफपूर्णास्यता यावत् स्रवद्घ्राणाक्षताथवा ।**

साधारणे **यावत् कफपूर्णास्यत्वं** भवेत्, **अथवा** यावत् स्रवद्घ्राणाक्षता भवेत् तावद् गण्डूषं धारयेत् । स्रवद्घ्राणाक्षि यस्मिन् स स्रवद्घ्राणाक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' (५-४-११३) इति षच् । तस्य भावः स्रवद्घ्राणाक्षता । एवं च गण्डूषाः पञ्च सप्त वा धारयितव्याः, यावद्वा स्वास्थ्यं स्यात् ।

गण्डूषकबलयोः पर्यायत्वे सत्यपि स्वसमयसिद्धं भेदमाह—

**असञ्चार्यो मुखे पूर्णे गण्डूषः कबलोऽन्यथा ॥ ११ ॥**

**असञ्चार्य** इत्यादि । **मुखे पूर्णे** सति यः सञ्चारयितुमशक्यः स **गण्डूष** उच्यते । गण्डूषस्य तिस्रो मात्राः । तासामर्धमुखपूरणी श्रेष्ठा, त्रिभागमुखपूरणी मध्या, चतुर्भागमुखपूरण्यधमा । कल्कस्यापि कर्षो मुख्यः, अर्धकर्षमानं मध्यं, चतुर्भागमानमधमम् । सञ्चारयितुं शक्यते मुखे पूर्णे सति यः स कबल उच्यते । अर्धपूरणीं मात्रां धृत्वा श्लेष्मपूरितास्यत्वं यावत् तावद् धारणं **गण्डूषः**, मध्यमाधममात्राधारणेन स्रवद्घ्राणाक्षत्वं यावत्तावद् धारणं **कबल** इति । हाटकोऽपि "कवलगण्डूषयोः सञ्चारासञ्चारकृतो विशेषः । एवञ्च गण्डूषाः पञ्च वा सप्त वा धारयितव्याः यावद्वा स्वास्थ्यं स्यात् । यावद्वा सम्यक् पीतधूमलिङ्गोत्पत्तिः" इत्याह । वचनं हि—

"त्रीन् पञ्च सप्त वा वारान् धारयेत् कवलग्रहम् ।
अयोगयोगातियोगाः कवलस्य च धूमवत् ॥"

इति ॥ ११ ॥

**मन्याशिरःकर्णमुखाक्षिरोगाः**
**प्रसेककण्ठामयवक्त्रशोषाः ।**
**हृल्लासतन्द्रारुचिपीनसाश्च**
**साध्या विशेषात् कवलग्रहेण ॥ १२ ॥**

**मन्याशिर** इत्यादि । मन्यादीनां रोगेण सम्बन्धः । प्रसेकादीनां द्वन्द्वः । आमयशब्दस्य कण्ठेन सम्बन्धो विविधकण्ठरोगसूचनार्थः । मन्यारोगादयो विशेषेण **कवलग्रहेण** कवलधारणेन **साध्याश्चि**कित्स्याः । कवलग्रहणेत्यत्र न स्वसंज्ञाङ्गीकारः, वक्रान्तःप्रयुज्यमानत्वात् ॥ १२ ॥

प्रतिसारणमाह—

**कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् ।**

**कल्क** इत्यादि । प्रतिसारणं कल्कादिभेदेन त्रिधा त्रिप्रकारं स्यात् । **प्रतिसारणं** प्रतिघर्षणं स्रावणमिति पर्यायाः=(ကိုးကာက) । **कल्को** जलादिपिष्टः । माक्षिकादिना द्रवीक्रियते यद् द्रव्यं सा **रसक्रिया** । **चूर्णं** प्रथितमेव । **इन्दुकारोऽप्याह**—'कल्को द्रवपिष्टः, रसक्रिया घनीभूता द्रवशया, चूर्णमद्रवम्' इति ॥

तस्य कफरोगेष्वेव प्रयोग इत्याह—

**युञ्ज्यात्तत् कफरोगेषु गण्डूषविहितौषधैः ॥ १३ ॥**

**तत्** प्रतिसारणं कल्कादिरूपं यथायोग्यं **कफरोगेषु** गण्डूषोक्तैरौषधैर्युञ्ज्यात् । सामान्योक्तावपि कफरोगविषयत्वात् शोधनगण्डूषोक्तैरिति वेद्यम् ।

"गलशुण्ठ्युपजिह्वादौ वक्रान्तर्यत् प्रलिप्यते ।
प्रतिसारणमुद्दिष्टं तद् गण्डूषोक्तभेषजैः ॥ १३ ॥"

मुखे प्रयुज्यमानत्वात् त्रिविधत्वाच्च मुखालेपोक्तिः

**मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च सः ।**
**उष्णो वातकफे शस्तः शेषेष्वत्यर्थशीतलः ॥ १४ ॥**

**मुखे**त्यादि । मुखालेपस्त्रिप्रकारः । दोषघ्नो विषघ्नो वर्णकरश्च । स च मुखालेपो **वातकफे उष्णः शस्तः** वाते कफे च कोष्णो हित इत्यर्थः

अत्युष्णस्य कफविलायनत्वाद् रोगवृद्धिरिति कवोष्ण इति वेद्यम्। शेषेषु पित्ते श्लेष्मपित्ते वातपित्ते च रक्ते च रक्तसंसर्गे चातिशयेन शीतलः शीतः शस्तः ॥ १४ ॥

त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः ।
अशुष्कस्य स्थितिस्तस्य शुष्को दूषयति छविम् ॥ १५ ॥

तमार्द्रयित्वापनयेत् तदन्तेऽभ्यंगमाचरेत् ।
विवर्जयेद्दिवास्वप्नभाष्याग्न्यातपशुक्क्रुधः ॥ १६ ॥

न योज्यः पीनसेऽजीर्णे दत्तनस्ये हनुग्रहे ।
अरोचके जागरिते, स[1] तु हन्ति सुयोजितः ॥ १७ ॥

अकालपलितव्यंगवलीतिलकनीलिका[2]ः ।

स च त्रिप्रमाणः त्रीणि प्रमाणानि यस्य सः त्रिप्रमाणः। कथमित्याह— वातादिष्वङ्गुलचतुर्भागोन्नतिः अङ्गुलत्रिभागोन्नतिः अङ्गुलार्धभागोन्नतिरिति। उन्नतिरुत्सेधः। अङ्गुलशब्दस्य समस्तस्यापि निष्कृष्यान्यत्राप्यन्वयोऽर्थवशात्। तस्य मुखालेपस्याशुष्कस्य स्थितिः। न च शुष्यन्नवेक्ष्य इत्यर्थः। हृद्याकारोऽपि 'अशुष्कमेवापनयेद्' इत्याह। शुष्कस्तु मुखालेपश्छविं त्वचो दूषयति। तं मुखालेपमार्द्रयित्वा जलादिभिरुपनयेत्। 'तं शुष्कम्' इति केचित्। हृद्याकारोऽपि 'शुष्कश्चेदार्द्रयित्वापनयेत्' इत्याह। तदन्ते आलेपान्ते तस्मिन् अपनीते अभ्यङ्गं कुर्यात्। मुखालेपी च दिवास्वप्नादीन् वर्जयेत्। मुखालेपे क्रियमाणे दिवास्वप्नादयो वर्जनीयाः। अहःस्वप्नसेवनात् त्वक्कण्डूपीनसदृष्ट्युपघातादिभयं स्यात्। पीनसादिषु जागरितान्तेषु मुखालेपो न योज्यः।

स तु मुखालेपः सुयोजितः सम्यक् प्रयुक्तः विधिना सेवितः अकालपलितादीन् नाशयति ॥

ऋतुभेदेन लेपद्रव्यभेदानाह—

कोलमज्जा वृषान्मूलं शाबरं गौरसर्षपाः ॥ १८ ॥
सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ् निस्तुषा यवाः ।

---

१. 'स च' मुद्रिताष्टाङ्गहृदये. २. 'तिमिर' मुद्रिताष्टाङ्गहृदये सङ्ग्रहे च.

दर्भमूलहिमोशीरशिरीषमिसितण्डुलाः ॥ १९ ॥
कुमुदोत्पलकल्हारदूर्वामधुकचन्दनम् ।
कालेयकतिलोशीरमांसीतगरपद्मकम् ॥ २० ॥
तालीसगुन्द्रापुण्ड्राह्वयष्टीकाशनतागरुः ।
अर्धार्चैर्विहिता लेपा हेमन्तादिषु षट् स्मृताः ॥ २१ ॥

कोलमज्जेत्यादि । कोलमज्जादयोऽर्धार्चैर्विहिताः अर्धश्लोकोक्ताः षट् मुखालेपा हेमन्तादिषु षट्सु ऋतुषु हेमन्तशिशिरवसन्तग्रीष्मवर्षाशरत्सु क्रमात् स्मृताः । मुनिभिरिति शेषः । इत्यर्धर्चोदितालेंपा इति वा पाठः । कालेयकं पीतचन्दनम् । 'रक्तवर्ली'ति केचित् ॥ १८-२१ ॥

मुखालेपनशीलानां दृढं भवति दर्शनम् ।
वदनश्चापरिम्लानं श्लक्ष्णं तामरसोपमम् ॥ २२ ॥

मुखालेपाभ्यासवतो दर्शनं दृष्टिः दृढं स्यात् । चक्षुः सबलं भवति । मुखं च विकसितं पद्ममिव कोमलं पद्मतुल्यं च जायते ॥ २२ ॥

अभ्यङ्गप्रसङ्गात् तमाह—

अभ्यङ्गसेकपिचवो वस्तिश्चेति चतुर्विधम् ।
मूर्धतैलं, बहुगुणं तद्विद्यादुत्तरोत्तरम् ॥ २३ ॥
तत्राभ्यंगः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु ।
अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ॥ २४ ॥
परिषेकः, पिचुः केशशातस्फुटनधूपने ।
नेत्रे स्तब्धे च, वस्तिस्तु प्रसुप्त्यर्दितजागरे ॥ २५ ॥
नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ।

अभ्यङ्गेत्यादि । अभ्यङ्गादिभेदेन मूर्धतैलं चतुर्विधं भवति । शिरसि यत् तैलं दीयते तन्मूर्धतैलमुच्यते । मूर्ध्नि तैलप्रयोगो मूर्धतैलमित्यर्थः । तच्च मूर्धतैलमुत्तरोत्तरं बहुगुणं विद्यात् । वस्तिः सर्वशरीरे प्रयुज्यत इति प्रसिद्धः । सेकस्तैलेन । पिचुः कार्पासमयः । वस्तिरिति 'वस निवासे' वसतीति वस्तिः "वसेस्तिप्" इति तिप्प्रत्ययः । चिरकालं शिरसि तिष्ठतीत्यर्थः ।

---

1. 'इत्यर्धार्धोदिता लेपा' मुद्रिताष्टाङ्गहृदये संग्रहे च.

तत्र तेषु मध्ये रौक्ष्यादिष्वभ्यङ्गः प्रयोक्तव्यः । अरूंषिकादिषु परिषेकः प्रयोक्तव्यः । अरूंष्येवारूंषिका । केशशातादिषु पिचुः प्रयोक्तव्यः । बस्तिः पुनः प्रसुप्त्यादौ प्रयोज्यः ॥ २३-२५ ॥

तस्य शिरोवस्तेरप्रसिद्धत्वात् तद्विधानमुच्यते—

**विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदौ ॥ २६ ॥**
**शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ।**
**द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरस्समम् ॥ २७ ॥**
**आकर्णबन्धनस्थाने ललाटे वस्त्रवेष्टिते ।**
**चेलवेणिकया बध्वा माषकल्केन लेपयेत् ॥ २८ ॥**

विधिरित्यादि । तस्य शिरोवस्तेर्विधिर्विधानमुच्यत इति शेषः । जानुसमे जानुतुल्ये तथा मृदौ वस्त्राद्यास्तरणादिनास्तृतत्वादकठिने निषण्णस्य उपविष्टस्यासीनस्य तथा शुद्धाक्तस्विन्नदेहस्य नरस्य शुद्धो वमनादिना अक्तस्तैलादिना स्विन्नश्च स्वेदेन सङ्करादिना देहः शरीरं यस्य सः एवं तस्य । हृद्याकारस्तु 'शुद्धो वमनविरेचनाभ्यां, यद्यपि शुद्धिरिति निरूहणस्यास्रुतीनामप्याख्या । तथापि वमनविरेचनयोरेवात्र ग्रहणम्' इत्याह । 'अक्तस्तैलेन' इति च । कदा दिनान्ते सायं रात्रौ वा । चर्मपट्टं चर्मखण्डम् । गव्यं वा माहिषं वा गव्यं गोर्माहिषं महिषस्य । तथा द्वादशाङ्गुलविस्तीर्णं तथा शिरस्समं शिरसस्तुल्यं दैर्घ्येण तथा आकर्णं कर्णं यावद् बन्धनस्थानं बन्धनस्थितिर्यस्य तदेवं कर्णप्रवेशनमिति यावत् । तदेवंविधं चर्मपट्टं ललाटे वस्त्रवेष्टिते वस्त्रखण्डेन बद्धे निवेश्य चेलवेणिकया वस्त्रपट्टिकया बध्वा माषकल्केन कदुष्णाम्बुमृदितेन लेपयेद् गोधूमकल्केन वा । संग्रहे तूक्तम्—"निवातस्थस्य स्वभ्यक्तस्विन्नस्य जानुसमसोपाश्रयासनोपविष्टस्य केशान्ते श्लक्ष्णं त्र्यङ्गुलं माषपिष्टेन सूक्ष्मेण सद्यः सुखाम्बुना मृदितेनोभयतः प्रदिग्धे वस्त्रं बध्नीयात् । ततस्तस्योपरि संधाय वस्तिमूलं दृढमवलीकं चेलवेणिकया बध्वा पुनर्माषपिष्टेनापरिस्रावितं कृत्वा" इत्यादि ॥ २६-२८ ॥

**ततो यथाव्याधि शृतं स्नेहं कोष्णं निषेचयेत् ।**
**ऊर्ध्वं केशभुवो यावदङ्गुलं, धारयेच्च तम् ॥ २९ ॥**

१. 'चेल' २. 'त्र्यङ्गुलं' इति मुद्रिताष्टाङ्गहृदयपाठः

तत एवं कृते सत्यनन्तरं यथाव्याधि व्याध्यनुसारेण शृतं पक्वमन्यतमं स्नेहं सुखोष्णमासेचयेत् केशभुवो यावत् केशभूमेः केशमूलादुपरि यावदङ्गुलं तावत् स्नेहं निषेचयेत्।

स च स्नेहः कियन्तं कालं धारयितव्य इत्याह—

आवक्त्रनासिकोत्क्लेदाद्, दशाष्टौ षट् चलादिषु।
मात्रासहस्राण्य,रुजेत्त्वेकं, स्कन्धादि मर्दयेत्॥ ३०॥
मुक्तस्नेहस्य, परमं सप्ताहं तस्य सेवनम्।

धारयेदित्यादि। तं च स्नेहमावक्त्रनासिकोत्क्लेदाद् यावद् वक्त्रनासिकास्रुतिः स्यात् तावत् धारयेत्। दशेत्यादि। चलादिषु वातादिषु यथासंख्यं दशाष्टौ षट् मात्रासहस्राणि स्नेहं धारयेत्। वाते दशमात्रासहस्राणि, पित्तेऽष्टौ, कफे षण्मात्रासहस्राणीत्यर्थः। अरुजे तु स्वस्थवृत्ते एकमात्रासहस्रं धारयेत्। मुक्तस्नेहस्यापनीतशिरोवस्तेः स्कन्धादिषु मर्दयेत्। आदिशब्देन ग्रीवाललाटपृष्ठशिरांसि गृह्यन्ते। स्नेहवस्तिर्हि स्नेहशब्देनात्र गृह्यते। तत उष्णाम्बुस्नातं च यथार्हं भोजयेत्। स्नेहोक्तं चास्याहारविहारमादिशेत्। अत्र ह्युवाच। 'उष्णोदकोपचारी स्यात्' इत्यारभ्य

'सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः'।

इति। तस्य च स्नेहवस्तेः परमं सेवनं सप्त दिनानि। तस्मात् त्रीणि पञ्च सप्त वाहानि रोगापेक्षया कर्तव्यः शिरोवस्तिरित्यवतिष्ठते॥ ३०॥

स्नेहधारणप्रसङ्गात् कर्णपूरणधारणोक्तिः—

धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयन्॥ ३१॥
रुजः स्यान्मार्दवे यावन्मात्राशतमवेदने।

धारयेदित्यादि। तथा कर्णपूरणं स्नेहं धारयेत्। किं कुर्वन्, कर्णमूलं विमर्दयन्। कियन्तं कालं, यावत्पीडाया मार्दवं भवेत्। अवेदने स्वस्थवृत्ते मात्राशतं यावत् तावद् बिभृयात्॥

मात्राप्रसङ्गात् तस्या अपि लक्षणमाह—

यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम्।
निमेषोन्मेषमात्रेण समं मात्रा तु सा स्मृता॥ ३२॥

यावदित्यादि। दक्षिणं हस्ताग्रं कर्तृ यावज्जानुमण्डलं दक्षिणं पर्येति परिवृत्यैति आवृत्य गच्छति परिवर्तत इत्यर्थः। कियता कालेन, निमेषोन्मेषमात्रेण समं निमेषोन्मेषकालेन समम्, न तु विश्रम्य। सा मात्रा स्मृता। तावान् कालो मात्रा स्मृता मुनिभिरिति शेषः। दक्षिणशब्देनात्र काकाक्षिन्यायेन द्वयोरपि युज्यते। अन्यत्राप्युक्तम्—

"निमेषोन्मेषणं पुंसां स्फोटनं वा तथाङ्गुलेः।
अक्षरस्य लघोर्वापि मात्रा तूच्चारणं स्मृतम्॥" इति॥

कचसदनसितत्वपिञ्जरत्वं
परिपुटनं शिरसः समीररोगान्।
जयति जनयतीन्द्रियप्रसादं
स्वरहनुमूर्धबलं च मूर्धतैलम्॥ ३३॥

कचानां सदनादिभिः सम्बन्धः। परिपुटनं कचानामेव। प्रकृतत्वाच्छिरसः समीररोगान् शिरसि स्थितान् वातरोगांश्च जयति हन्ति। कचशतनेति पाठे कचानां शतनादयः। शिरसः परिपुटनं समीररोगाश्च शिरसि स्थिता एव। इन्द्रियाणां चक्षुरादीनां प्रसादं जनयति। तथा स्वरादिबलं च जनयति। मूर्धतैलं कर्तृ॥ ३३॥

इति हृदयबोधिकायां द्वाविंशोऽध्यायः॥

---

# अथ त्रयोविंशोऽध्यायः ।

—०—

ऊर्ध्वाङ्गस्य प्रकृतत्वात् तत्र च नेत्रयोः प्राधान्यात् शालाक्यस्य चाष्टाङ्गानुप्रवेशात् सूत्रस्थाने नेत्रोपचाराध्याय आरभ्यते । अथवा–

'शिरोबस्तिविधावुक्तमिन्द्रियाणां प्रसादनम् ।
तेन नेत्रप्रसादार्थमप्याश्च्योतनमुच्यते' ॥

'कवलादिप्रसङ्गादाश्च्योतनाञ्जनविधिमाह' इति पाठ्यकारः ॥

**अथात आश्च्योतनाञ्जनविधिमध्यायं व्याख्यास्यामः ।**

आश्च्योतनं नयनसेकः । तच्चाञ्जनं च तयोर्विधिर्यस्मिन्नध्याये स एवम् ।

**सर्वेषामाक्षिरोगाणामादावाश्च्योतनं हितम् ।**
**रुक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम् ॥ १ ॥**

सर्वेषामित्यादि । सकलानामक्षिरोगाणां वक्ष्यमाणानामादौ प्रथममाश्च्योतनं नयनसेकः कषायादिना यथास्वं नानाद्रव्यपरिकल्पितेन हितं शस्तम् । यतस्तदाश्च्योतनमुपयुक्तं रुगादिघ्नं स्यात् । रुगादिनाशनत्वादाश्च्योतनं कार्यमित्यर्थः । अव्यक्तेषु रुगादिषु आश्च्योतनद्रव्यैरक्षिलेपो हितः । उक्तवांश्च—

'आश्च्योतनं हि सर्वाक्षिरोगेष्वाद्य उपक्रमः ।'

इति ॥

नानाद्रव्यकल्पनया रागाश्रुघर्षरुक्तोददाहशोफकण्डूघ्नम् । अव्यक्तेष्वेवङ्गुणमेव पक्ष्मपरिहारेणाक्षिकोशालेपनमाश्च्योतनद्रव्यैः । तत् पुनर्बिडालकसंज्ञं भवति । आश्च्योतनबिडालकयोरकालो रात्रिः कालश्च सर्वमहरिति ॥ १ ॥

**उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः ।**

तद् आश्च्योतनं वाते वातिकेषु रोगेषु उष्णं नात्युष्णम् । कफे कोष्णम् अत्यल्पोष्णमिति ग्राह्यम् । स्पर्शशीतोचितत्वाद् दृष्टेः । रक्ते पित्ते च शीतलं हितम् ।

आश्च्योतनविधानमाह —

**निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥ २ ॥**
**शुक्त्या प्रलम्बयान्येन पिचुवर्त्या कनीनिके ।**
**दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत् ॥ ३ ॥**

१. अरुणदत्तपाठे 'आश्चोतनं' इत्येव दृश्यते ।

ततः प्रमृज्य मृदुना चेलेन कफवातयोः ।
अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ ४ ॥

**निवातस्थस्ये**त्यादि । निवातदेशे शयनस्थितस्यातुरस्य वैद्यो वामेन पाणिनोन्मील्य लोचनमपाङ्गदेशे भाजनं निधायान्येन दक्षिणेन पाणिना शुक्तौ प्रलम्बया पिचुवर्त्या दश द्वादश वा बिन्दून् कनीनिके नासानिकटे नेत्रप्रदेशे द्व्यङ्गुलाद् द्व्यङ्गुलोच्छ्रायादवसेचयेत् । नातिदूरान्नातिनिकटात् । एवमस्य बिन्दुपातेनाक्षिताडनाद् रागादयो न जायन्ते । **हृद्याकारो**ऽपि 'अङ्गुलासन्ने कृतं न दोषं स्रावयति । त्र्यङ्गुले कृतमक्षिरागाय स्यादिति द्व्यङ्गुलवचनम्' इत्याह । अनन्तरं कोमलेन चेलेन वस्त्रखण्डेन प्रमृज्य शोधयेत् । शोधयित्वान्येन शोधनाच्चेलादन्येन चेलेन वस्त्रखण्डेन कोष्णजलाप्लुतेन कफवातयोरक्षि मृदु नातिशयेन स्वेदयेत् । न तु रक्तपित्तयोरित्यर्थः ॥ ४ ॥

आश्च्योतनं द्रव्यस्वरूपं वक्तुकामस्त्याज्यस्वरूपमाह —

अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ।
अतिशीतं तु कुरुते निस्तोदस्तम्भवेदनाः ॥ ५ ॥
कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।
विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ ६ ॥

**अत्युष्णे**त्यादि । अत्यर्थमुष्णमतितीक्ष्णं चाक्षिसेचनमाश्च्योतनं रुजे रोगाय दृङ्नाशाय च स्यात् । **हृद्याकारस्तु** — 'अत्युष्णतीक्ष्णं अत्युष्णैरतितीक्ष्णैश्च द्रव्यैश्चित्रकादिभिः कृतं रुगादिकरं नेत्रयोरिति तत् त्याज्यम्' इत्याह । अक्षिसेचनमिति सर्वत्र संबध्यते । अतिशीतं चाश्च्योतनं निस्तोदादीन् विधत्ते । **निस्तोदः** सूच्येव व्यथः । **स्तम्भो**ऽक्षणः स्तम्भनमिव । **वेदना** शूलम् । **बहु** अतिमात्रमाश्च्योतनं, कषायवर्त्मतादीन् कुरुते । **कषायवर्त्मता** बहलवर्त्मता । स्थूलवर्त्मता वर्त्मनोरीषच्छोफोत्पत्तिरित्यर्थः । अथवा कषायवर्त्मता रक्तवर्त्मता । (ഇമ ൂവക്ക) **घर्षः** वर्त्मनोः परस्परं संश्लेषात् कटकटायनम् । अथवा कषायवर्त्मता श्लिष्टवर्त्मता । घर्षः पांसुपूर्णप्रतिभासः (കരുകരുക്ക) । **अत्यल्पमक्षिसेचनं** विकारस्य वृद्धिं कुरुते । **अपरिस्रुतं** बहुशः पटेनागालितमाक्षिसेचनं **संरम्भं** नेत्रयोः क्षोभं कुरुते । अपरिस्रुतं = (അരിക്കാത്തത്.) 'संरम्भो सद्या वेदना' इति **हृद्याकारः** । 'संरम्भः = (കരുകരുക്ക)' इति **पाठ्यकारः** ॥ ६ ॥

तदाश्च्योतनं कियन्मात्रं कियन्तं कालं कया युक्त्या दोषरहितमित्यत आह—

**गत्वा सन्धिशिरोघ्राणमुखस्रोतांसि भेषजम्।**
**ऊर्ध्वगान्नयने न्यस्तमपावर्तयते मलान्॥ ७॥**

**गत्वेत्यादि**। 'कया युक्त्या नेत्रप्रयुक्तमौषधं दोषानपनयतीत्याह—गत्वेत्यादिना' इति हाटकः। सन्ध्यादीनां द्वन्द्वः। स्रोतःशब्देन षष्ठीसमासः। सन्धिशब्देन अक्षिकोशसंबन्धिनः सन्धयो गृह्यन्ते। तेनाक्षिकोशसन्धिस्रोतांसि सिरास्रोतांसि घ्राणस्रोतांसि च गत्वा नयने **न्यस्तं** क्षिप्तमौषधं जत्रुण **ऊर्ध्वगान्** दोषानपावर्तयते आकर्षति। यावन्मात्रेण सन्ध्यादिषु सर्वं गच्छति तावता सेकः कार्य इति मात्रोक्तिः। सन्धिसिराघ्राणमुखस्रोतस्सु रसाभिव्यक्तिरिति कालोक्तिः। सन्ध्यादिषु स्थितं दोषं चालयित्वापावर्तयति नाशयति। नयने प्रयुक्तं तदिति **युक्त्यभिधानम्**॥ ७॥

**अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले।**
**पक्वलिङ्गेऽल्पशोफातिकण्डूपैच्छिल्यलक्षिते॥ ८॥**

**अथाश्च्योतनादनन्तरम् अञ्जनं** प्रयोक्तव्यम्। कीदृशस्यातुरस्य, **शुद्धतनोः** शोधितशरीरस्य वमनादिभिर्नस्यादिभिश्च **मले** दोषे **नेत्रमात्राश्रये** न तु सकलशरीरव्यापिनि नेत्र एव तिष्ठति दोषे तदाञ्जनप्रयोगः। तथा **पक्वलिङ्गे** पक्वलिङ्गता कथं वास्येति विशेषणद्वारेणाह—अल्पशोफेनातिकण्डूपैच्छिल्येन लक्षिते अवगते **पक्वलिङ्गे** सति। इन्दुरपि 'पक्वलिङ्गेऽल्पशोफादिभिर्लक्षिते उद्वीक्षिते ज्ञाते सति' इत्याह। **हृद्याकारस्तु**—'पक्वलिङ्गेऽल्पशोफार्तिकण्डूपैच्छिल्यलक्षणे' इति पठति। अर्थः—**पक्वलिङ्गे** परिपाकलक्षणे सति कीदृशे अल्पशोफार्तिकण्डूपैच्छिल्यलक्षणे अल्पो मन्दः शोफः अल्पार्तिर्वेदना अल्पा कण्डूश्च अल्पं च पैच्छिल्यम्। लक्षणशब्दः स्वरूपवचनः। अल्पाः शोफादय एव स्वरूपं पक्वलक्षणस्येत्यर्थः॥ ८॥

पक्वलिङ्गान्तरमपि नेत्रविशेषणत्वेन वदति—

**मन्दघर्षाश्रुरागेऽक्ष्णि प्रयोज्यं घनदूषिके।**
**आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः॥ ९॥**

**मन्दघर्षाश्रुरागेऽक्षणीति** । **मन्दाः** अल्पाः घर्षादयो यस्मिन् नयने तस्मिन् । एतदपि पक्वलिङ्गमेव । तथा **घनदूषिके** चाक्षिण अञ्जनं प्रयोज्यम् । घना दूषिका यस्मिन् नयने तस्मिन् । तदपि दोषाणां पक्वलिङ्गमेव । **दूषिका**=(പീള)। तथा पित्तेन कफेन रक्तेन **चार्ते** पीडितेऽक्षणीति सम्बन्धः । **मारुतेन संसृष्टैः** पित्तादिभिरार्तेऽक्षिण **विशेषेणा**ञ्जनं प्रयोज्यम् । केवलेन वा वातेनार्ते स्रावणस्थानपेक्षितत्वान्मारुतेन संसृष्टैरिति वाच्यम् । अथवा **विशेषतः** पित्तादिभिरार्द्रे नेत्रे । न विशेषशब्दस्य मारुतेन सम्बन्धः । पित्तादिदोषक्रमो न विवक्षितः । वातपित्तकफशोणितैर्दूषिते नेत्रे विशेषतोऽञ्जनं प्रयोजयेदिति ॥ ९ ॥

**लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा ।**
**अञ्जनं, लेखनं तत्र कषायाम्लपटूषणैः ॥ १० ॥**

**रोपणं तिक्तकैर्द्रव्यैः, स्वादुशीतैः प्रसादनम् ।**

तदञ्जनं लेखनादिभेदेन त्रिप्रकारम् । लिख्यते शस्त्रेणेव शुक्रार्मादीति **लेखनम्** । रोप्यते संरोह्यतेऽभिष्यन्दादादीति **रोपणम्** । प्रसाद्यते निर्मलीक्रियतेऽनेनेति प्रसादनं दृष्टेः **प्रसादनम्** । **सङ्ग्रहे** च—'यत् स्नेहनमञ्जनं कथितं तद् रोपणदृष्टिप्रसादनयोरेवान्तर्भूतत्वात् पृथङ्नोक्तम्' । **हाटकोऽपि**—'रोपणदृष्टिप्रसादनयोरन्तर्भूतत्वात् स्नेहनमञ्जनं पृथङ्नोक्तम्' इत्याह । **हृद्याकारोऽ**प्याह—'शुक्रार्मादिकं विलिख्य नाशयतीति लेखनं, व्रणादीनां संरोहणं करोतीति रोपणं, प्रसन्नत्वं निर्मलत्वं करोतीति प्रसादनम्' इति । अन्यच्चोक्तं **सङ्ग्रहे**—'तत्तु लेखनं रोपणं स्नेहनं प्रसादनमिति चतुर्विधं भवति' इति । **सारकृत्त्वाह**—'त्रिधाञ्जनं' इति। 'षड्विधं प्रतिरसभेदादञ्जनं' इति केचित् । 'तीक्ष्णमृदुकल्पनया द्विविधमञ्जनं' इति केचित् । 'स्नेहनेन सह चतुर्विधम्' इति **सङ्ग्रहे** । अत्र त्रिविधग्रहणं प्रसादनस्नेहनयोरेकत्वविवक्षयेति । तत्र तेषु त्रिष्वञ्जनेषु मध्ये लेखनमञ्जनं कषायादिभिर्द्रव्यैः शुक्रार्मादिषु प्रयोज्यम् । रोपणं **तिक्तकैर्द्रव्यैः** स्यात् । **तिक्त**ग्रहणमुपलक्षणार्थम् । तेन **सङ्ग्रहोक्तैः** कषायद्रव्यैः सस्नेहैः रोपणमञ्जनं वेद्यम् । **स्वादुशीतैर्द्रव्यैः प्रसादनम्** । वचनं हि—'तत्राम्लादिरसः पञ्चभिः शुक्रार्मादिषु लेखनम् । तिक्तकषायैः सस्नेहैरभिष्यन्देषु रोपणम् । सर्पादिवसाभिर्वाततिमिरादिषु स्नेहनम् । स्वादुशीतैः सस्नेहैरभिष्यन्दान्ते, सूर्योपरागाशनिविद्युत्सम्पात-

भूतपिशाचात्यद्भुतदर्शनोपहतायां दृष्टौ स्वस्थवृत्ते च प्रसादनम्' इति । प्रसादनमेव चूर्णं तीक्ष्णनाञ्जनेनाभिसन्तप्ते चक्षुषि प्रयुज्यमानं प्रत्यञ्जनसंज्ञां लभते ।

अञ्जनप्रयोगे करणभूतं शलाकायन्त्रमाह—

**दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना ॥ ११ ॥**

**प्रशस्ता लेखने ताम्री रोपणे काललोहजा ।**
**अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने ॥ १२ ॥**

**दशेत्यादि ।** **दशाङ्गुला** राजमाषसदृशपरिमाणा **शलाका प्रशस्ता** । **मध्ये तनुः** तथा **मुकुलानना** यूथिकामुकुलाकारे द्वे आनने मुखे यस्याः सा' अतीक्ष्णाग्रेत्यर्थः । **लेखने** अञ्जने **ताम्री** ताम्रमयी शलाका प्रशस्यते । **रोपणे काललोहजा** आयसी **प्रशस्ता** । **काललोहं** कृष्णायसम् । **अङ्गुली च** हस्तावयवविशेषो रोपणे एव । **प्रसादने** अञ्जने **सुवर्णोत्था** कनकमयी **रूप्यजा** च रूप्यमयी शलाका प्रशस्तेत्यन्वयः ॥ १२ ॥

**पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ।**
**गुरौ मध्ये लघौ दोषे ताः क्रमेण प्रयोजयेत् ॥ १३ ॥**

अञ्जनं त्रिप्रकारं स्यात् । कथम् ? पिण्डो रसक्रिया चूर्णं इति । **पिण्डो** वर्तिः । **रसक्रिया** मध्वादिना द्रवीकृता । **चूर्णो** रेणुः । तान् पिण्डरसक्रिया-चूर्णान् यथापूर्वं बलिनो गुरुदोषादिषु **क्रमेण प्रयोजयेत्** । **गुरौ** बलवति दोषे पिण्डः प्रयोज्यः । **मध्ये** मध्यबले दोषे रसक्रिया । **लघौ** मृदुबले दोषे चूर्णं इत्यर्थः ॥ १३ ॥

**हरेणुमात्रं पिण्डस्य वेल्लमात्रा रसक्रिया ।**
**तीक्ष्णस्य द्विगुणं तस्य मृदुनः, चूर्णितस्य च ॥ १४ ॥**

**द्वे शलाके तु तीक्ष्णस्य तिस्रः स्युरितरस्य च ।**

**पिण्डस्येत्यादि** । तीक्ष्णद्रव्यस्य तीक्ष्णद्रव्यकृतपिण्डस्य **हरेणुमात्रं** प्रमाणं कथयन्ति । मृदुद्रव्यकृतस्य पिण्डस्य **द्विगुणं** प्रमाणं द्विहरेणुमात्रं वदन्ति । रसक्रियायां तीक्ष्णद्रव्यकृतायां विलङ्गफलमात्रं प्रमाणमाहुः । मृदुद्रव्यकृतायां द्विविलङ्गमात्रं प्रमाणमिति वेद्यम् । वितुण्बफलमात्रकमिति वा पाठः ।

वितुण्डो बिल्वः तस्य फलम् । चूर्णे तीक्ष्णे द्विगुणां शलाकां मृदौ त्रिगुणां शलाकामभिदधुः । हाटकोऽप्याह—'पिण्डे तीक्ष्णे कलायमात्रं प्रमाणं रसक्रियायां बिल्वफलमात्रकं तीक्ष्णे द्विगुणा शलाका चूर्णे, सर्वत्रोक्ता द्विगुणा मात्रा मृदौ' इति । तन्त्रान्तरेऽपि प्रोक्तं—'लेखनमञ्जनं ताम्ररजतकांस्याद्यन्यतमधातुषु धार्यम् । रोपणं सुवर्णपात्रशङ्खान्यतमेषु धार्यम् । प्रसादनं स्फटिकाक्षचन्दनान्यतमेषु धार्यम् । एवं ह्यञ्जनमव्यापन्नगुणं भवति । वर्तिघर्षणार्था शिला अतिश्लक्ष्णा निम्नमध्यानुद्धारिणी पञ्चाङ्गुलायता त्र्यङ्गुलविशाला' इति । अन्यत्राप्युक्तम्—

"पात्रे तु कुर्यात् सौवर्णे मधुरं राजतेऽम्लकम् ।
लवणं मेषशृङ्गे स्यात् कांस्ये तिक्तकृतं भवेत् ॥

वैडूर्यमणिसम्भूते कटुकं ताम्रलोहयोः ।
पात्रेऽञ्जनं कषायोत्थं स्थापयेद् बहुविद् भिषक् ।
शाङ्गे नले वृक्षमये स्फाटिके शीतमञ्जनम् ॥"

इति ॥

यत्र कालेऽञ्जनं न योज्यं तमाह—

**निशि स्वप्ने न मध्याह्ने म्लाने नोष्णगभस्तिभिः ॥ १५ ॥**
**अक्षिरोगाय दोषाः स्युर्वर्धितोत्पीडितद्रुताः ।**

**निशीत्यादि** । **निशि** रात्रावञ्जनं न प्रयोज्यम् । तथा **स्वप्ने** स्वप्नकाले अञ्जनं न प्रयोज्यम् । मध्याह्ने अञ्जनं न प्रयोज्यम् । **म्लाने** लोचनेऽञ्जनं न प्रयोज्यम् । केन म्लाने ? उष्णाभिर्दीधितिभिः । यस्मादेषु कालेष्वञ्जनेन प्रयुक्तेन दोषा वृद्धिं नीताः, तथान्यस्थानगतत्वादुत्पीडितास्तथा द्रुताः कालस्यौष्ण्याद् विलयं गता अक्षिरोगाय स्युः । तस्मादेषु कालेषु अञ्जनं न प्रयोज्यम्' इति **अरुणदत्तोक्तिः** । **हाटकोऽप्याह**—'निशि रात्रौ अञ्जनं न प्रयोज्यम् । तथा स्वप्नकाले न योज्यम् । तथोष्णगभस्तिभिर्म्लाने लोचने, यस्मादेषु कालेष्वञ्जने प्रयुक्ते यथाक्रमं वर्धिता उत्पीडिता द्रुता दोषा अक्षिरोगाय स्युः' इति । **हृद्याकारस्त्वेवमाह**—

'निशि स्वप्ने न च म्लाने योज्यमुष्णगभस्तिभिः ।'

इति। 'निशि रात्रौ स्वप्ने कृते उष्णगभस्तिभिरादित्यकिरणैर्म्लाने तान्ते चक्षुषि तीक्ष्णमञ्जनं न योज्यम्। एषु कालेषु प्रयुक्तेनाञ्जनेन वर्धिता वृद्धिं नीताः उत्पीडिता ऊर्ध्वं गता द्रुता द्रवीभूताः वातादयश्चक्षूरोगाय भवन्ति।' अयमर्थः स्वप्नेन कृतेन वर्धितानां दोषाणां शान्त्यै प्रातःकालेऽञ्जयेद् मध्याह्ने तीक्ष्णतरैरादित्यकिरणैरुत्पीडितानां दोषाणां नाशाय सायमपराह्णे चाञ्जयेदिति। सारकृत्त्वेवमाह —

'निशि स्वप्नेन मध्याह्ने पानान्नोष्णगभस्तिभिः।'

इति। अस्मद्गुरवोऽब्रुवन्, सर्वेषामपि प्रायशोऽयमेव पाठः। अस्यार्थः सुबोध एव। तथाप्यरुणदत्तदुर्व्याख्यातत्वाद् विलिख्यते। रात्रौ स्वप्नेन वर्धितोत्पीडितद्रुता दोषा अक्षिरोगाय स्युः। मध्याह्ने पानान्नोष्णगभस्तिभिर्वर्धितोत्पीडितद्रुताश्चेति।

**प्रातः सायं च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत्सदा॥ १६॥**

प्रातरित्यादि। "यतः पूर्वोक्तेषु कालेषु पूर्वोक्ता दोषास्तस्मात् पूर्वाह्णेऽपराह्णे च तच्छान्त्यै तस्याक्षिरोगोपशमनाय व्यभ्रे विगताभ्रे विगतमेघे रवौ सदैव नेत्रेऽञ्जयेत्" इत्यरुणदत्तोक्तिः। हाटकोऽप्याह —'अतोऽस्मात् कारणात् तच्छान्त्यै व्यभ्रे रवौ पूर्वाह्णापराह्णयोः सदैवाञ्जयेत्' इति। अञ्जयेत् सदेति उचिताञ्जनविषयमेतद् वचनमिति वेद्यम्। तथाच वैदेह्यां संहितायां स्कन्दरक्षितायां पठ्यते —

"अनञ्जनेनाभ्युषितान् मनुष्यान्
प्रबाधते दत्तमिवाञ्जनं तान्।
अथाञ्जनेनाभ्युचितानने‍का-
ननञ्जनाद् व्याधिरुपैति कृच्छ्रः॥

तस्माद्धि नित्याञ्जनमेव पथ्य-
मनञ्जनं चानुचितस्य पथ्यम्।
अनञ्जना त्वञ्जनमेव भूय-
स्तस्माद्धि नित्याञ्जनमेव कुर्यात्॥

अनञ्जनो यस्तु पुनर्मनुष्यः
कथं सुखी स्यात् पुनरञ्जनेन।"

इति । एतच्च स्वस्थवृत्त एवोच्यते । आतुरवृत्ते तु व्याध्युपशमावधित्वादञ्जनस्य ॥ १६ ॥

मतान्तरमाह —

**वदन्त्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमञ्जनम् ।**
**विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ॥ १७ ॥**

वदन्तीत्यादि । अन्ये त्वाचार्या एवं मन्यन्ते । तीक्ष्णमञ्जनं दिवा न प्रयोज्यमिति । कस्मादित्याह— यस्माद् विरेकदुर्बलं तीक्ष्णाञ्जनेन विरेचितत्वाद् दुर्बलं चक्षुरादित्यं प्राप्य सीदति तस्माद् दिवसे तीक्ष्णमञ्जनं न प्रयोज्यम् । विरेकदुर्बलमिति तीक्ष्णाञ्जनेन चक्षुषि दोषास्रावो विरेचनमुच्यते तदादित्यकिरणसम्बन्धाद् दृष्टिः सीदति ॥ १७ ॥

तत्पक्षेऽञ्जनकालः रात्रिरित्याह —

**स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता ।**
**शीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनः ॥ १८ ॥**

यस्मात् स्वप्नेन तर्पिता तथा कालस्य रात्र्याख्यस्य सौम्यत्वेन च तर्पिता दृष्टिस्तीक्ष्णाञ्जनक्षोभितापि पुनःस्थैर्यं प्राप्नोति । कीदृग्दृष्टिः, आग्नेयी अग्न्युत्कटभूतसम्भवा तथा स्वभावतः शीतसात्म्या । तस्माद् रात्रावञ्जनं प्रयोज्यम् । आग्नेयीति 'अग्निकलिभ्यां ठग् वक्तव्यः' इति ठक् । शीतं सात्म्यं यस्याः पैत्तिकज्वरस्येव । हृद्याकारोऽप्याह —"स्वप्नेन तर्पिता तृप्ता रात्रिकालस्य सौम्यत्वेन शीतत्वेन तृप्ता शीतसात्म्या शीतप्रिया आग्नेयी अग्न्युद्रिक्तमहाभूतोत्पन्ना अतिस्थिरतां लभते । पुनरिति हेत्वर्थः । येनैवंविधा दृष्टिः तस्माद् रात्रौ तीक्ष्णाञ्जनं प्रयोज्यम्" इति ॥ १८ ॥

तदेतदन्यमतव्यापकमिति दूषयन्नाह—

**अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे ।**
**काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् ॥ १९ ॥**

अत्युद्रिक्त इत्यादि । अत्युत्कृष्टे बलासे श्लेष्मणि अथवा लेखनार्हे गदे शुक्रार्मादौ नात्युष्णे ग्रीष्मवर्ज्ये काले तीक्ष्णमञ्जनमह्न्यपि योजयेत् काममनुमतमेतत् । उष्णे तु ग्रीष्मे अह्नः अत्युष्णत्वादञ्जनस्य तैक्ष्ण्यातियोगेन दृष्टिविघातः स्यात् ॥ १९ ॥

"अत्र मतभेदे सारभूतं स्वपक्षं दर्शयति । अत्युद्रिक्ते बलासे तु अतिप्रवृद्धे श्लेष्मणि अथवा लेखनीये विलेख्य नाश्ये शुक्रार्मादौ काममनुमतं अह्नि नात्युष्णतीक्ष्णमञ्जनं प्रयोजयेत् । एतदत्र ग्राह्यम् । अत्युष्णतीक्ष्णमक्षिण अञ्जनं न योज्यमिति । तदेव वदति अश्मन इत्यादि" इति । अरुणदत्तस्त्वाह — "दिनेऽप्यत्युष्णे तीक्ष्णमञ्जनं न प्रयोजयेत्; काममनुमतमेव । अह्नि नात्युष्णे अञ्जनं प्रयोजयेत्" इत्यर्थः ॥ १९ ॥

अत एवाह —

**अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ।**
**उपधातोऽपि तेनैव तथा नेत्रस्य तेजसः ॥ २० ॥**

**अश्मन** इत्यादि । यथा पाषाणाच्छस्त्रस्योत्पत्तिः तस्मादश्मनस्तैक्ष्ण्यं श्लक्ष्णता । **उपधातोऽपि** कुण्ठत्वादिकः तेनैव पाषाणेन न केवलं तीक्ष्णता । **तथा** तेनैवाश्मशस्त्रन्यायेन **नेत्रस्य तेजसः** । तेजसोऽग्नेरश्मस्थानीयात् सकाशात् नेत्रस्य जन्म रविसंज्ञात् तेजसः सकाशात् तीक्ष्णता दर्शनपटुत्वम् । आलोकसहायं हि चक्षुर्विषयं गृह्णाति । अतिभासुरेणात्युष्णेन तेन तस्योपघातः । तस्माद् यदन्ये गदन्ति सामान्येन दिवाञ्जनं न प्रयोज्यमिति तदसदेवेति । हृद्याकारोऽप्याह —

'पाषाणादग्निसन्तप्तादयसो जन्म दृश्यते ।
तत एव च लोहस्य शस्त्रादेस्तीक्ष्णतोदयः ॥
विनाशः शस्त्रधारायाः प्रायः पाषाणघाततः ।
तथा नेत्रस्य जन्मापि तैक्ष्ण्यं दर्शनशक्तितः ॥
नाशो दृष्टेरमेयदिव्यादेः । तस्मान्न तीक्ष्णोष्णमक्षिण योजयेत् ।"
इति ॥ २० ॥

**न रात्रावपि शीतेऽति नेत्रे तीक्ष्णाञ्जनं हितम् ।**
**दोषमस्रावयत्स्तम्भकण्डूजाड्यादिकारि च ॥ २१ ॥**

अपि च रात्रावपि नेत्रे कफाधिक्येनातिशीते कण्डूपैच्छिल्याद्यनुमिते तीक्ष्णमञ्जनं न हितं न प्रयोज्यम् । 'अतिशीते काले' इत्यस्मद्गुरवः । तत्र

दोषमाह — यतो निशि तीक्ष्णमञ्जनं उपयुक्तं तीक्ष्णत्वाद् दोषं नेत्रगत-मुत्क्लेश्य कालस्य सौम्यत्वात् स्तब्धं सद्दोषं स्रावणयोग्यमस्रावयद् रात्रिशैत्योप-हतशक्तित्वात् स्रावयितुमसमर्थं नेत्रे कण्डूजाड्यगौरवादिकरं न तु शमनकारि। तस्मात् "शीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनः" इत्येतदप्यसत् । तस्मात् पूर्वोक्तमेवानवद्यम् । एवंविधे काले निशि प्रसक्तस्यापि निषेध इति यावत् ॥ २१ ॥

नाञ्जयेदित्यादिना तीक्ष्णाञ्जनानर्हानाह —

नाञ्जयेद् भीतवमितविरिक्ताशितवेगिते ।
क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोकजागरे ॥ २२ ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ।
अजीर्णेऽग्न्यर्कसन्तप्ते दिवा सुप्ते पिपासिते ॥ २३ ॥

भीतादीनां पिपासितान्तानां विंशतेः पुरुषाणामक्षिवैद्यो नाञ्जयेत् तीक्ष्णाञ्जनेनेत्यर्थः । अशितोऽत्र सद्यो भुक्तो वेद्यः । सद्यो भुक्तस्य नयने नाञ्जयेदित्यर्थः । सूक्ष्मभासुरभैरवादिदर्शनादभिघाताद् वा तान्ते ग्लाने अक्षिणी यस्य सः एवं तस्मिन् । जलदच्छन्नत्वाददृष्टेऽर्के । एष्वञ्जनादूष्मा ऊर्ध्वाङ्ग-संरम्भाश्रुवेदनाविलरागनिस्तोददूषिकाकृच्छ्रोन्मीलनश्वयथुशुक्लतिमिरादीन् जनयेत ॥ २२, २३ ॥

साम्प्रतं यादृशमञ्जनं न प्रयोज्यं तादृशं दर्शयति —

अतितीक्ष्णमृदुस्तोकबहुच्छघनकर्कशम् ।
अत्यर्थशीतलं तप्तमञ्जनं नावचारयेत् ॥ २४ ॥
अथाऽनुन्मीलयन् दृष्टिमन्तःसञ्चारयेच्छनैः ।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥ २५ ॥
तीक्ष्णं व्याप्नोति सहसा न चोन्मेषनिमेषणम् ।
निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत् ॥ २६ ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ २७ ॥
दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा ।
ऊर्ध्ववर्त्मनि सङ्गृह्य शोध्यं वामेन चेतरत् ॥ २८ ॥

**अतितीक्ष्णेत्यादि** । अतितीक्ष्णादिगुणमञ्जनं न प्रयोजयेत् । अतिशब्दस्य तीक्ष्णादिभिर्घनान्तैः सम्बन्धः अत्यर्थशीतलमित्येतस्मादत्यर्थशब्दस्तप्तमित्यत्रानुवृत्तिकृतेन सम्बन्धेन योज्यः । तप्तमत्यर्थतप्तम् । अथैवमञ्जनस्वरूपमवेत्य नेत्रे अञ्जिते सति दृष्टिगोलकम**नुन्मीलयन्** नेत्रस्यान्तर्मध्ये शनैः शनैरौषधं **सञ्चारयेत्** । तथा **वर्त्मनी किञ्चिच्चालयेत्** । एवं कृते सति थञ्जनं नेत्रं व्याप्नोति । **सहसेत्यादि** । **सहसा** विध्यतिक्रमेण **उन्मेषणनिमेषणं** न कुर्यात् । चशब्दोऽवधारणे । नैव समाचरेदित्यर्थः । **हाटकोऽपि**—'सहसोन्मेषनिमेषणं न कुर्यात्' इत्याह । **वर्त्मभ्यां** चान्योन्यनिष्पीडनं न समाचरेत् । वा शब्दोऽवधारणे । सहसा क्षालनं च न कुर्यात् । सबाष्पोत्क्लिष्टदोषस्तम्भभयात् । सङ्ग्रहे चाञ्जनविधिरुक्तः—"अथ सुखोपविष्टस्यातुरस्य सूपविष्टो वैद्यो वामाङ्गुष्ठेनोत्तरं वर्त्मोत्क्षिप्य कृष्णभागस्याधःकनीनिकादपाङ्गं यावदञ्जनं नयेत् । अनल्पमप्रभूतमनतितीक्ष्णमनच्छसान्द्रकर्कशमद्रुतविलम्बितमतिर्यग्दृष्ट्यकम्पितमनाक्रान्तं च । चूर्णे तु गतागतं कुर्यात् । अन्यथा रागाश्रुशुक्लाद्युत्पत्तिः" इति । **अपेतः** अपगतः **औषधसंरम्भो** यस्मान्नेत्रात् तदेवमपेतौषधसंरम्भत्वान्निर्वृतं अपेतदुःखानुवृत्ति यदालोचनं तदा व्याध्यादियोग्यैर्जलैः प्रक्षालयेत् । तत्र व्याधिरभिष्यन्दादिः । **दोषो** वातादिः । ऋतुर्वसन्तादिः । **ततो** नयनप्रक्षालनादनन्तरं दक्षिणेनाङ्गुष्ठेन सवस्त्रेण **वामं** नयनमूर्ध्वं वर्त्मनि सम्यगादाय शोधनीयं वामेनाङ्गुष्ठेन सवाससा इतरद्दक्षिणमूर्ध्वं वर्त्मनि सङ्गृह्य शोध्यम् ॥ २४—२८ ॥

किमिति शोध्यत इत्याह—

**वर्त्मप्राप्ताञ्जनाद्दोषो रोगान् कुर्यात्ततोऽन्यथा ।**
**कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत्पुनः ॥ २९ ॥**
**तीक्ष्णाञ्जनाभिसंन्तप्ते तूर्णं प्रत्यञ्जनं हितम् ॥**

**ततोऽन्यथा** अशोध्यमाने वर्त्मनि प्राप्तं च तदञ्जनं च वर्त्मप्राप्ताञ्जनं तस्माद् दोषो वर्त्मनि **रोगान् कुर्यात्** । वर्त्मप्राप्तोऽञ्जनादिति वा पाठः । कण्डूश्च जाड्यं चेति समाहारे द्वन्द्वः । तस्मिन् सति **तीक्ष्णमञ्जनं** प्रयोज्यम् । अथवा **तीक्ष्णं धूमं** प्रयोज्यम् । हाटकोऽपि—"यस्याञ्जिते सति कण्डूजाड्ये भवतः । तस्य तीक्ष्णमञ्जनं धूमं वा पुनरवचारयेत्" इत्याह । एतदेव च दुर्विरिक्ताक्षिलक्षणं साधनं च । अविविरेकात् सन्तापनिस्तोदशूलस्तम्भघर्षाश्रुदारुण-

1. 'तप्ते तु चूर्णं' मुद्रिताष्टाङ्गहृदयपाठः।

प्रतिबोधनकषायवर्त्मताशिरोरुग्दृष्टिदौर्बल्यानि । तत्र शीतमाश्च्योतनम् । प्रत्यञ्जनं वा सम्यग् विरेकाद् यथास्वमामयोपशमः । सुखोन्मीलननिमीलनवातातपसहत्वानि चेति । हृद्याकारस्त्वाह—"अञ्जनं तीक्ष्णं योजयेत् । न धूमेन तीक्ष्णशब्दान्वयः । मृदुधूमस्यात्र विधानमिति" इति । तीक्ष्णाञ्जनाभिसन्तप्ते लोचने तूर्णं प्रत्यञ्जनं पूर्वोक्तं हितम् । प्रत्यञ्जनमिति शीतस्य चूर्णाञ्जनस्याख्या ॥ २९ ॥

इति श्रीदासपण्डितकृतायां हृदयबोधिकायां
त्रयोविंशोऽध्यायः ॥

---

## अथ चतुर्विंशोऽध्यायः ।

—०—

**अथातस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः ।**

आश्च्योतनाञ्जनाभ्यां हि नयनस्य प्रायो दौर्बल्यं स्यादिति तर्पणादेरुपयोगो युक्त इत्याह—

तर्पणं च पुटपाकश्च तयोर्विधिः । हृद्याकारोऽप्याह —

"तीक्ष्णाञ्जनप्रयोगेण दौर्बल्ये सति चक्षुषोः ।
बलाधानार्थमेतर्हि तर्पणादेरुपक्रमः ॥"

इति ॥

अथवा प्रत्यञ्जनं हितमित्युक्तत्वात् प्रत्यञ्जनसंज्ञितं तर्पणमाह—

**नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते ।**
**वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलेक्षणे ॥ १ ॥**
**कृच्छ्रोन्मीलशिरोहर्षशिरोत्पाततमोऽर्जुनैः ।**
**स्यन्दमन्थान्यतोवातवातपर्यायशुक्रकैः ॥ २ ॥**
**आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके ।**
**निवाते तर्पणं योज्यं शुद्धयोर्मूर्धकाययोः ॥ ३ ॥**
**काले साधारणे प्रातः सायं चोत्तानशायिनः ।**
**यवमाषमयीं पालीं नेत्रकोशाद्बहिः समाम् ॥ ४ ॥**

द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत्।
चक्षुर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ॥ ५ ॥
नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम्।
आपक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्वतः ॥ ६ ॥

मात्रा विगणयेत्तत्र वर्त्मसन्धिसितासिते।
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ॥ ७ ॥

शतानि सप्त चाष्टौ च दश मन्थे दशानिले।
पित्ते षट् स्वस्थवृत्तौ च बलासे पञ्च धारयेत् ॥ ८ ॥

नयन इत्यादि। चक्षुषि ताम्यति ग्लायति सति तथा स्तब्धादिगुणे तर्पणं कार्यम्। ताम्यत्वं ग्लानिः। शीर्णे पक्ष्मणि यस्य तदेवम्। आविलम-स्पष्टमीक्षणं दर्शनं यस्य तदेवम्। शीर्णपक्ष्म च तदाविलेक्षणं च तस्मिन्। कृच्छ्रो-न्मीलादयोऽक्षिरोगेषु वक्ष्यन्ते। कृच्छ्रोन्मीलादीनां द्वन्द्वः। तैरातुरे। तमः तिमिरम्। तथा शान्ताः शमं गताः रागादयो यस्मिन्नयने तस्मिन्। तथा नस्या-(न)र्हे यतो वक्ष्यति—

'तर्पणं पुटपाकं च नस्यानर्हे न योजयेत्।'

इति। हाटकोऽप्याह— 'नयनं ताम्यत्वादिगुणयुक्तं कृच्छ्रोन्मीलनाद्यातुरं चापगतरागादि च तत्र तर्पणं योज्यम्' इति। इन्दुव्याकारोऽप्याह — 'नयने ग्लान्यादि दशरोगार्ते कृच्छ्रोन्मीलादिभिर्दशभिरातुरे च तर्पणं योज्यम्' इति। कीदृशि स्थाने निवाते विगतानिले। उपलक्षणं चेदम्। विगतातपरजोधूमादिके इत्यपि द्रष्टव्यम्। मूर्धकाययोः शुद्धयोः वमनविरेकाभ्यां नस्येन च। यथा-योगं वमनविरेकनस्यकृतशुद्धिरित्यर्थः। ''शुद्धयोर्वमनादिभिर्नस्यादिभिश्चे''ति इन्दुव्याकारः। काले साधारणे वसन्तादिके सायं प्रातर्वा दोषदूष्याद्यपेक्षया उत्तानशायिनः सुखे शयने शयितस्योत्तानस्येत्यर्थः। यवैर्मिश्रा माषास्ते प्रकृता यस्याः सा यवमाषमयी। हाटकस्तु—'यवमिश्रमाषमयीं यवमयीं माषमयीं वा' इत्याह। तां तादृशीं पालीं भित्तिं नेत्रकोशाद् बहिर्बध्यते उभयपार्श्वयोः समां अनिम्नोन्नतां द्व्यङ्गुलोच्चां द्व्यङ्गुलमुच्छ्रायवतीं तथा दृढां यथा स्नेहो न स्रवेदि-त्यर्थः। तां पालीं कृत्वा यथास्वं यथायोगं दोषदूष्याद्यनुरोधात् पक्वं घृतं निमीलिते अनुन्मीलिते लोचने क्षिपेत्। 'यथार्हौषधविपक्वं घृतम्' इति हाटकः।

यथास्वं सिद्धमिति प्रतिव्याधिविहितैरौषधैः साधितम् । सर्पिरिति 'कृच्छ्रोन्मीले पुराणाज्यं' इत्यादि वक्ष्यमाणमित्यर्थः, इति हृद्याकारः । कीदृशं सर्पिः । तप्तेन जलेन प्रकर्षेण विलायितं द्रवीकृतम् । आ पक्ष्माग्रात् पक्ष्माग्राणि यावन्निमग्नानि तावत् सर्पिरावपेत् । राज्यन्धादिषु वातप्रधानेषु वसां यथास्वमौषधसिद्धां तथैव विलायितां आपक्ष्माग्राद् आवपेत् । "वसां योजयेदिति शेषः" इति हृद्याकारः । अथ घृताद्यावपनादनन्तरं शनैः शनैरुन्मीलनं कुर्वतस्तस्यातुरस्य मात्राः पूर्वोक्ता विगणयेत् । मात्रामिति वा पाठः । तत्र तेषु वर्त्मादिके व्याधौ सर्पिषि क्षिप्ते शतसङ्ख्यादिं मात्रां विगणयेत । क्रमेण वर्त्मव्याधौ मात्राशतं, सन्धिरोगे त्रीणि शतानि, सितरोगे पञ्च शतानि, असितरोगे सप्तशतानि, दृष्टिरोगे अष्टाशतानि धारयेदिति क्रमार्थः । मन्थोऽतिमन्थो नेत्ररोगः तस्मिन् दशशतानि । अनिले वातव्याधौ दशशतानि । पित्ते पित्तरोगे षट् शतानि । स्वस्थवृत्ते स्वस्थस्य दृष्टिबलार्थं क्रियमाणे षट् शतानि । पित्तस्वस्थयोः किं मात्रासाम्यविधानमिति चेद् उच्यते । वाते दशशतानि, श्लेष्मणि पञ्च शतानि, तयोर्मध्यमात्रा पित्तस्य तद्वद् देकगत्या दोषसात्म्यात स्वस्थस्यापि षण्मात्राशतविधानमिति । बलासे कफे पञ्चशतानि धारयेत् । अनिले दशेति । ननु वर्त्मसन्धिसितासितादिषु जाता व्याधयोऽपि वातादिजा एव । तत् कथमनिले दशेत्येवमादिकमुक्तवानिति । ब्रूमः । मन्थप्रसङ्गात् सर्वाक्षिरोगाः स्यन्दादयः एवात्रानुमीयन्ते । वात इत्युक्ते वाताभिष्यन्दः । पित्त- इत्युक्ते पित्ताभिष्यन्द इत्यादि । अन्ये वातादिजनिततिमिरादीनां विशेषोक्तिरिति ॥ १—८ ॥

**कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे निगालयेत् ।**
**पिबेच्च धूमं नेक्षेत व्योम रूपं च भासुरम् ॥ ९ ॥**

ततः यथोक्तमात्राधारणादनन्तरं अपाङ्गदेशे शलाकया द्वारं कृत्वा स्नेहं पात्रे भाजने निगालयेत् स्रावयेत् क्षिपेदित्यर्थः । आधारे चापनीते यवकल्केन सक्तुपिण्ड्या वा अक्षिकोशौ प्रमृज्य स्नेहेरितकफोपशान्तये यथार्हं स्नेहनादिकं धूमं च पिबेत् । न केवलं तर्पणं कुर्यात् । प्रक्षालितनेत्रं चैनमामयादिवशेन भोजयेत् । तथा व्योम नभो न पश्येत् । भासुरं रूपं च । उपलक्षणं चेदम् । आतपमपि न पश्येत् । अथवा भासुरं रूपमातपादि न पश्येत् ॥ ९ ॥

इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे।
स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ १० ॥

इत्थमनेन क्रमेण प्रतिदिनं वायौ तर्पणं दद्यात्। पित्ते पुनरेकाहान्तरं तर्पणं दद्यात्। कफे स्वस्थे च द्विदिनान्तरं योजयेत्। कफस्वस्थयोरत्रापि न साम्याद् द्विदिनान्तरविधानम्। कफस्य स्नेहो न मुख्यमौषधम्। ततो द्विदिनान्तरम्। स्वस्थस्य दोषसाम्याद् द्विदिनान्तरप्राप्तिः। द्विदिनान्तरत्वेऽपि स्वास्थ्यानुवृत्तिरिति। इत्येवमातृप्तेर्यावन्नयनस्य तृप्तिः स्यात् तावदेव तर्पणं योजयेत् ॥ १० ॥

तृप्तस्य किं लक्षणमित्याह —

प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम्।
तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥
स्नेहपीता तनुरिव क्लान्ता दृष्टिर्हि सीदति।
तर्पणानन्तरं तस्माद् दृग्बलाधानकारिणम् ॥ १२ ॥
पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव यक्ष्मसु।
स वाते स्नेहनः श्लेष्मसहिते लेखनो हितः ॥ १३ ॥
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः।

प्रकाशेत्यादि। प्रकाशक्षमतादिकं तृप्ते सम्यक् तर्पिते लक्षणम्। प्रकाशक्षमता प्रभाभास्वरादिसहत्वम्। अतृप्ते ईषत् तृप्ते सति यथोक्तलक्षणवैपरीत्यम्। अतितृप्ते कफोद्भवाः कण्डूपैच्छिल्यादिका रुजाः स्युः। अथ पुटपाकः। स्नेहपीता पीतस्नेहा दृष्टिः क्लान्ता तनुरिव यस्मादवसीदति। पीतस्नेहा तनुरिव दृष्टिरपि तर्पणेन सन्ना स्यात् तस्मात् कारणात् तर्पणानन्तरं पुटपाकं प्रयुञ्जीत। कीदृशं, दृशोर्बलं तस्याधानं दृग्बलं प्रबन्धेन प्रवृत्तिः तत् करोतीति दृग्बलाधानकारिणम्। हेतौ द्वितीया। दृग्बलाधानकारणत्वात् प्रयुञ्जीतेत्यर्थः पूर्वोक्तेष्वेव तर्पणोक्तेषु कृच्छ्रोन्मीलादिषु यक्ष्मसु रोगेषु पुटपाकविषयाविषययोस्तर्पणैकयोगक्षेमत्वान्नोक्तिः। तर्पणपुटपाकयोः पृथगपि प्रयोगः शास्त्रसिद्धः। द्वयोरेकत्र प्रयोगे तर्पणानन्तरम्। स च त्रिविधः। स्नेहनो लेखनः प्रसादनश्च। स च पुटपाको वाते स्नेहनो हितः। श्लेष्मसहिते लेखनो हितः। दृग्दौर्बल्यादिषु प्रसादनो हितः। पत्रमृद्भ्यां पिधाय पाकः पुटपाकः ॥ ११-१३ ॥

त्रिविधपुटपाकानामिदानीं कल्पनामाह — भूशयेत्यादि । इत्याकारस्तु इदानीं साधनप्रयोगक्रमावुच्येते इत्याह —

भूशयप्रसहानूपमेदोमज्जावसामिषैः ॥ १४ ॥

स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ।
मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैन्धवैः ॥ १५ ॥

स्रोतोजशङ्खफेनालैर्लेखनं मस्तुकल्कितैः ।
मृगपक्षियकृन्मांसवसान्त्रहृदयामिषैः ॥ १६ ॥

मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ।

भूशया बिलेशया भेकगोधाद्याः । प्रसहा गोखरादयः । आनूपा महामृगाः, अप्चराः, मत्स्याः तेषां मेदोमज्जावसामिषैः तथा जीवनीयैः जीवन्तीकाकोल्यादिभिश्च क्षीरपिष्टैः स्नेहनं पुटपाकं कल्पयेत् योजयेत् । मृगा हरिणादयः, पक्षिणो लावादयः, तेषां यकृन्मांसानि तैस्तथा मुक्तादिभिर्मस्तुकल्कितैः पिष्टैः लेखनं कल्पयेत् । प्रसहानां मृगपक्षिणां स्नेहेन पुटपाक उपयुक्तत्वाद् जाङ्गला एव मृगपक्षिणो ग्राह्याः । प्रसादनं च जाङ्गलमृगपक्षिणां यकृदादिभिस्तथा मधुरैर्मधुरवर्गोक्तद्रव्यैर्घृतान्वितैः स्त्रीक्षीरान्वितैः स्त्रीक्षीरपिष्टैः प्रसादनं कल्पयेत् । "स्त्रीस्तन्यादिपिष्टैः" इति हाटकः । "स्त्रीस्तन्यक्षीराज्यपिष्टैः" इति सङ्ग्रहे ॥ १४—१६ ॥

अधुना पुटपाकस्य कल्पनामाह —

बिल्वमात्रं पृथक्पिण्डं मांसभेषजकल्कयोः ॥ १७ ॥

उरुबूकवटाम्भोजपत्रैः स्नेहादिषु क्रमात् ।
वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ॥ १८ ॥

पचेत् प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम् ।
नेत्रे तर्पणवद्युञ्ज्यात्, शतं द्वे त्रीणि धारयेत् ॥ १९ ॥

मांसं च भेषजकल्कश्च तयोः पृथक् बिल्वमात्रं पलमात्रं पिण्डमेरण्डादीनां पत्रैः स्निग्धादिषु क्रमाद् वेष्टयित्वा कृष्णमृत्तिकया लिप्तं वृद्धवैद्यव्यवहाराद् द्व्यङ्गुलोत्सेधं मृदा लेपः । धवादीन्धनैः प्रदीप्तैः पचेत् । स्निग्धादिषु क्रमादित्यत्रापि योज्यम् । तत्र स्नेहने पुटपाके एरण्डप-

त्रैर्वेष्टनं, धवकाष्ठैः प्रदीपनम् । लेखने वटपत्रैर्वेष्टनं, धन्वनेन्धनैः प्रदीपनम् । प्रसादने जलजपत्रैर्वेष्टनं, गोमयेन्धनैः प्रदीपनमिति क्रमार्थः । अग्न्याभमिति अग्निवर्णं सत् पक्वं ज्ञात्वापनीय पत्रं वाससा निष्पीड्य तद्रसं नयने तर्पणमिव दद्यात् । उरुबूकः एरण्डः । धन्वनं(ढामण) ॥ १९ ॥

**लेखनस्नेहनान्तेषु पूर्वौ कोष्णौ हिमोऽपरः ।**
**धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत् ॥ २० ॥**

**तर्पणं पुटपाकं च नस्यानर्हे न योजयेत् ।**
**यावद्दिनानि युञ्जीत द्विस्ततो हितभाग्भवेत् ।**
**मालतीमल्लिकापुष्पैर्बद्धाक्षो निवसेन्निशि ॥ २१ ॥**

**शतमित्यादि** । लेखनादिषु शतादीनि धारयेत् । तत्र **लेखने शतं** मात्राणां धारयेत् । **स्नेहने द्वे** शते । **अन्ते प्रसादने त्रीणि** शतानि धारयेत् । अन्त्य इति वा पाठः । **पूर्वौ** स्नेहनलेखनौ **कोष्णौ** ईषदुष्णौ योज्यौ । **हिमोऽपरः** प्रसादनाख्यः । **तयोरेवाद्ययोः** पुटपाकयोः स्नेहनलेखनयोरन्ते धूमपः स्यात् स्नेहेरितकफोपशान्त्यै । न तु प्रसादनान्ते इत्येवशब्दार्थः । अत एव प्रसादने धूमपानं न योज्यम् । तत्र च तेषु पुटपाकेषु तर्पण इव **योगाः** स्युः । तृप्तिवदिति 'सप्तम्यन्ताद् वतिः' । योगा इति बहुवचननिर्देशात् सम्यग्योगायोगातियोगा गृह्यन्ते । योगातियोगायोगास्तर्पणवदवगन्तव्या इत्यर्थः । पुटपाकस्त्वेकाहं त्र्यहं वा योज्यः । तर्पणपुटपाकौ नस्यायोग्ये न योजयेत् । नस्यानर्हाः, 'योजयेन्न तु नावनम्' इत्युक्ताः । **हृद्याकारो**ऽपि— 'अञ्जनायोग्याः नस्यायोग्या उक्ताः प्रागेव' इत्याह । **यावद्दिनानि** यावन्मात्राणि दिनानि तौ तर्पणपुटपाकौ **युञ्जीत** कुर्वीत तावन्त्यहानि[1] **ततो द्विः** द्विगुणानि दिनानि **हितभाक्** हिताहारविहारसेवी स्यात् । यावद्दिनं तर्पणपुटपाकयोरासेवा तद्द्विगुणं वर्ज्यं वर्जनम् । तथा पक्वातीसारस्य पुटपाकस्यायमेव पाकविधिः । कृततर्पणपुटपाको मालत्यादिभिः पुष्पैर्बद्धाक्षो विभावरीं वसेत् । **मालती** सुमनाः । **मल्लिका** गन्धवार्षिका । **हृद्याकारो**ऽपि —'दृष्टिप्रसादनाय मालत्यादिमालापिनद्धनेत्रः स्वप्यात्' इत्याह । आश्च्योतनादिषु प्रयोगवैकल्याद्ये व्याधयस्तेषु यथास्वं चिकित्सां कुर्यात् । वचनं हि —

---

१. 'यावन्त्यहानि' मुद्रिताष्टाङ्गहृदयपाठः.

1779

'सेकेऽञ्जने तर्पणे च पुटपाके च ये गदाः ।
जायेरन् विधिविभ्रंशाद् यथास्वं तान् प्रसाधयेत् ॥'' इति ।

**सर्वात्मना नेत्रबलाय यत्नं कुर्वीत नस्याञ्जनतर्पणाद्यैः ।**
**दृष्टिश्च नष्टा विविधं जगच्च तमोमयं जायत एकरूपम् ॥ २२ ॥**

**सर्वेत्यादि** । आत्मशब्दः प्रकारवचनः । **सर्वात्मना** सर्वेण प्रकारेण **नेत्रबलाय** चक्षुःसामर्थ्याधानाय चक्षूरक्षणायेत्यर्थः नस्यादिभिर्यत्नं कुर्यात् । आदिशब्देन शुध्यादयो गृह्यन्ते । 'सर्वात्मना सर्वप्रयत्नेन' इति **पञ्जिकायाम्** । नेत्रबलंप्रति यत्नाकरणे दोषमाह — **दृष्टिश्चेति** । अत्र चशब्दो हेतौ । 'यतो **दृष्टिर्यदि नष्टा** स्यात् ततो **जगद्** विविधमपि **तमोमयमन्धकारमयमेकरूपम**विलक्षणं सम्पद्यते'' इति **सर्वाङ्गसुन्दरा** । **हृद्याकारस्त्वेवमाह** — ''नेत्रे **विनष्टे** विविधमिति नानाप्रकारं जगत् प्रपञ्चजातमेकरूपमेकमिव भवति । **तच्चैकरूपं** किमात्मकं **तमोमयं** तमोविकारम् । 'प्रकृतिविकारभावे मयट्' । **यथा निमीलिताक्षस्य** तमःप्रतिभासः तथा चक्षुषि **नष्टे** सर्वं तमोरूपमिव **भवति''** इति । ''न द्रव्यव्यतिरिक्तं भावरूपं तमः'' इति **वैदान्तिकाः** । ''भावाभावस्तमः'' इति **तार्किकाः** । **पाठ्यकारस्त्वेवमाह**— ''दृष्टिश्च नष्टेति । **नष्टा** दृष्टिर्विविधं जगद् दृश्यं चान्धकाररूपमेव जायत इत्यर्थः । एषा दृष्टिः एतद् दृश्यमिति विशेषप्रतीतिर्न स्यादित्यर्थः'' इति । अन्ये चशब्दस्य **चेदित्यन्वयं ब्रुवते ॥ २२ ॥**

इति श्रीदासपण्डितकृतायां हृदयबोधिकायां
चतुर्विंशोऽध्यायः ॥

---

## अथ पञ्चविंशोऽध्यायः ।

वस्तिनस्याञ्जनादीनि यन्त्राश्रयाण्येवेति यन्त्रविधिमाह । अथवा—

"यन्त्रशस्त्रादिसापेक्षमूर्ध्वाङ्गं प्रागुदीरितम् ।
यत् तद्यन्त्राणि निर्णेतुं यन्त्राणां विधिरुच्यते ॥"

• 'अतिक्रान्तेषु वस्त्यादिषु यन्त्राणि प्रकृतानि तस्मात् सर्वयन्त्राणि क्रियोपयोगीनि एकत्रैव वक्ष्यन्ते' इति पाठ्यकारः । इन्दुरप्याह— 'अत्र हि निजागन्तुभेदेन द्विविधस्य रोगस्य चिकित्सा प्रकृता । उभययत्रापि च यन्त्रशस्त्रोपयोगात् तन्निर्णयारम्भः । तत्रापि यन्त्रेण दृष्टं गृहीतं वा पश्चाच्छस्त्रेण युज्यते इति प्रथमं यन्त्राणि निर्णीयन्ते' इति ।

### अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः ।

यन्त्रस्य विधिर्यन्त्रविधिः शल्योपायत्वाच्च यन्त्राणामिदमुच्यते । अर्शोभगन्दरादिषु शस्त्रादिनियोजने नीरुजाङ्गरक्षणाय नियम्यते शस्त्रक्षारादिकमिति यन्त्रम् ।

अथवा शल हिंसायां धातुः तस्मिन् शल्यम् । मनःशरीराबाधकरमित्यर्थः । 'यती प्रयत्ने' तस्मिन् यन्त्रमिति प्रयत्नसाधनः प्रवृत्त्युपायो यन्त्रमित्यर्थः ।

एतदेव स्पष्टयन्नाह—

**नानाविधानां शल्यानां नानादेशप्रबाधिनाम् ।**
**आहर्तुमभ्युपायो यस्तद्यन्त्रं यच्च दर्शने ॥ १ ॥**
**अर्शोभगंदरादीनां शस्त्रक्षाराग्नियोजने ।**
**शेषाङ्गपरिरक्षायां तथा वस्त्यादिकर्मणि ॥ २ ॥**
**घटिकालाबुशृङ्गं च जाम्बवोष्ठादिकानि च ।**

तदाह नानाविधानामित्यादि । नानाविधानामनेकप्रकाराणां शस्त्रवेणुपाषाणादिरूपाणां तथा कर्णिनालीनाराचादीनां च नानादेशप्रबाधिनां कर्णभूदन्तवेष्टकजत्रुशङ्खादिविविधशरीरप्रदेशप्रवेशिनां शल्यानामाहरणे आकृष्टौ योऽभ्युपाय उपाय एव तद्यन्त्रमुच्यत इति शेषः । यच्च दर्शने उपायः अर्शोभगन्दर नालीव्रणादीनां तच्च यन्त्रम् । तथा एतेषामेवार्शोभगन्दरादीनां शस्त्रादियोजने

सति शेषस्य नीरुजाङ्गस्य परिरक्षायां रक्षानिमित्तं स्वस्थस्याङ्गस्य शल्याद्याबाधानिवृत्यर्थं य उपायस्तच्च यन्त्रमिति संबन्धः । तथा वस्तिनस्यादिकर्मणि य उपायस्तच्च यन्त्रम् । तथा घटिकादि च यन्त्रत्रयं पवनाकर्षणाय च रक्तस्याकर्षणाय च । तथा जाम्बवोष्ठसन्दंशादीनि यन्त्राणि । जाम्बवोष्ठं = (കൊടിൽ കാഞ്ഞി) ॥ २ ॥

यन्त्राणां किं रूपं किं कार्यमित्याह—

**अनेकरूपकार्याणि यन्त्राणि विविधान्यतः ॥ ३ ॥**

**विकल्प्य कल्पयेद् बुद्ध्या, यथास्थूलं तु वक्ष्यते ।**

**अनेके**त्यादि । रूपाणि च कार्याणि च रूपकार्याणि अनेकानि रूपकार्याणि येषां तानि यन्त्राणि । **विविधानि** नानाप्रकाराणि । **तत्रानेकरूपत्वं** कङ्कमुखस्वस्तिकाद्याकारत्वम् । **अनेककार्यत्व**मस्थिलग्नशल्याहरणादिकम् । यतश्चानेकरूपकार्यत्वात् स्वस्थातुरोपकरणानां यन्त्राणां नानाविधत्वं अतस्तानि **बुध्या विकल्प्य** कार्यानुरोधात् **कल्पयेत्** । [1]कर्मवशात् तेषामियत्तावधारणाशक्यत्वात् । तथा हि यन्त्राणां नानाकारत्वान्नानाकर्मत्वान्नानाप्रमाणत्वात् सङ्ख्यालक्षणादीनामियत्तावधारणं कर्तुं न पार्यते । नानाविधा हि बाह्याध्यात्मिकानां भावानां सन्निवेशविशेषाः । न ह्येकोऽन्येन कथञ्चिदपि सादृश्यं यातीत्यतो बहुत्वम् । ननु यन्त्राणां दिङ्मात्रेऽप्यनभिज्ञः कथं कल्पनां कर्तुं पारयेदित्याह । यथास्थूलं तु वक्ष्यते यानि यानि स्थूलानि **यथास्थूलम्** । "यथा सादृश्ये" इत्यव्ययीभावः । यथास्थूलोक्त्या शेषाण्यपि स्वबुध्या विकल्प्य कर्तुं समर्थो भवतीति भावः । 'आकारानन्त्यात् प्रयोजनानेकत्वाच्च सङ्ख्यातीतानि यन्त्राणि' इत्येके । 'एकोत्तरं यन्त्रशतम्' इत्यन्ये । अत्र पुनः षड्विधानि यन्त्राणि निर्दिश्यन्ते समासतः । कथम्, स्वस्तिकसन्दंशतालनालीशलाकाख्यानि अनुयन्त्राणि चेति । सर्वाणि यन्त्राणि इदं षट्कं नातिवर्तन्ते ।

अथ यन्त्राण्याह—

**तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ ४ ॥**

**मुखैर्मुखानि यन्त्राणां कुर्यात्तत्संज्ञकानि च ।**

---

१. 'कार्यवशात्' इति पाठान्तरम् ·

अष्टादशाङ्गुलायामान्यायसानि च भूरिशः ॥ ५ ॥
मसूराकारपर्यन्तैः कण्ठे बद्धानि कीलकैः ।
विद्यात् स्वस्तिकयन्त्राणि मूलेऽङ्कुशनतानि च ॥ ६ ॥
तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ।

तुल्यानीत्यादि । येन पार्श्वेन शल्यमुद्ध्रियते तद् यन्त्राणां मुखं वेद्यम् । कङ्कादीनां पक्षिमृगाणां मुखैस्तुल्यानि यन्त्राणां मुखानि कुर्यात् । आदि-शब्देन गृध्रहरिणहंसादिपरिग्रहः । तानि तत्संज्ञकान्येव । चशब्द एवार्थे । तानि यन्त्राणि तथानामान्येव कङ्कमुखं सिंहमुखमित्यादि । आकारा-नुगताभिधानानीत्यर्थः । अष्टादशाङ्गुलायामानि अष्टादशाङ्गुलदैर्घ्याणि स्वस्ति-काख्यानि यन्त्राणि विद्यात् । स्वस्तिकमिव स्वस्तिकम् । दक्षिणस्य बाहोर्वामे गमनं वामस्य दक्षिण इति स्वस्तिकता । भूरिशो बाहुल्येनायसानि च । दन्तकंसादिमयानामपि कचिद्दर्शनात् भूरिश इत्युक्तम् । तथा कण्ठे यन्त्रग्रन्थौ कीलकैर्बद्धानि, कीदृशैः कीलकैः मसूराकाराः पर्यन्ताः प्रान्ताः येषां तैः । यत्र प्रदेशे यन्त्राणां हस्तग्रहणं तन्मूलम् । तत्राङ्कुशवन्नतानि वक्राणि परिणतानि । हृद्याकारोऽपि— 'मूले हस्तग्राह्ये देशे' इत्याह । 'मूलं हस्तग्रहणस्थानम्' इति हाटकः । पाठ्यकारस्त्वाह— 'मूलमिति वृन्तभागम् । अङ्कुशनतत्वमाकर्षणे सुखग्रहणार्थम् । स्वस्तिकमित्यनेन तन्नामान्येव' इति । तैः स्वस्तिकयन्त्रैः कङ्कमुखादिभिरस्थिसंलग्नस्य शल्यस्य काण्डफलादेराहरणमाक-र्षणमिष्यते ॥ ४–६ ॥

कीलबद्धविमुक्ताग्रौ सन्दंशौ षोडशाङ्गुलौ ॥ ७ ॥
त्वङ्मिच्छरास्नायुपिशितलग्नशल्यापकर्षणौ ।
षडङ्गुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम् ॥ ८ ॥
मुचुण्डी[1] सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा ।
गम्भीरव्रणमांसानामर्मणः शोणितस्य च ॥ ९ ॥

कीलेत्यादि । कीलेन मसूराकारपर्यन्तेन बद्धं तथा विमुक्तमग्रं मुखं ययोस्तौ कीलबद्धविमुक्ताग्रौ सन्दंशौ द्वौ भवतः । कीदृशौ, षोडशाङ्गुलप्रमाणौ । कोपयोगः स्यादेतयोरित्याह— त्वगादिलग्नस्य शल्यस्याकर्षणे आहरणे प्रयुज्यते । एकः कीलबद्धः अन्यः कीलरहितः । अस्पृष्टबाहुरङ्गुलीभ्यामिव

1, 'मुचुटी' इति सङ्ग्रहपाठः.

पुरुषः प्रयत्नेन शल्यं गृह्णीत इत्यर्थः । षाडित्यादि । षडङ्गुलोऽन्यः षोडशाङ्गुलसन्दंशद्वयादन्यः सन्दंशः । सूक्ष्मशल्यानां नासारोमादीनां तथोपपक्ष्मणां वर्त्मादिभवानां हरणे आकर्षणे प्रयुज्यते । षडङ्गुलान्या इति पाठान्तरम् । अन्या सन्दंशजातिरेवेति। उपपक्ष्माणि वर्त्मरोगे वक्ष्यन्ते। संग्रहेऽप्युक्तम्—'तथान्यः सन्दंशः षडङ्गुलोऽर्धाङ्गुलविस्तृतो वक्रद्विबाहुरङ्गुलिप्रान्तसमागमाकृतिः सूक्ष्मशल्याक्षिपक्ष्मव्रणाधिमांसाहरणे' इति । मुचुण्डी नाम सूक्ष्मदन्ता सूक्ष्मा दन्ताः यस्याः सैव ऋजुरवक्रा । न तु सन्दंशवद् वक्रा सन्दंशवद् द्विबाहुरित्यर्थः । मूले बाह्वोः सङ्गमे हस्तग्रहणस्थाने रुचकमङ्गुलीयकं भूषणं यस्याः सैवम् । रुचकपीडनेन हि सा कर्म करोति । गम्भीरश्चासौ व्रणश्च गम्भीरव्रणः । तस्मिन् मांसमधिमांसम् एतद्विषये आहरणे अर्मणश्च छिन्नशेषस्याहरणे प्रयुज्यते । षडङ्गुलसन्दंशसदृशी तद्वन्मुचुण्डीति वचनात् तस्या मुचुण्ड्याः दन्ता अन्तर्बाह्ये भवन्ति । इन्दुरप्याह — "रुचकं वलयं तस्याश्च वलयं यथा यथा मूलादग्रं गच्छति तथा तथा तद्बाहू संयोजयति तस्याः" इति । संग्रहे चोक्तम्—"तद्वच्च मुचुटी । सूक्ष्मदन्तर्जुर्द्विभुजा मूले रुचकानद्धा वलयपीडनाच्छिन्नार्मशेषगम्भीरव्रणाधिमांसाहरणे" इति ॥ ९ ॥

द्वे द्वादशाङ्गुले मत्स्यतालवद् व्येकतालके ।
तालयन्त्रे स्मृते कर्णनालीशल्यापहारिणी ॥ १० ॥

द्वे इत्यादि। द्वे तालयन्त्रे भवतः। किं प्रमाणे, द्वादशाङ्गुलायामे। संस्थानमाह । मत्स्यतालवत् मत्स्यगलतालवद् व्येकतालके द्वितालकमेकम् । द्वयोः पार्श्वयोर्मत्स्यमुखाकारमपरमेकतालकमेकपार्श्वे मत्स्यमुखाकारमेव । हाटकोऽप्याह— "मत्स्यतालवन्मीनमुखवद् व्येकतालके एकमुभयतालकं अन्यदेकतालकम्" इति । ते द्वे तालयन्त्रे स्मृते । कर्णनाली कर्णस्रोतः तत्र शल्यमपहरतः कर्णनालीशल्यापहारिणी ॥ १० ॥

नालीयन्त्राण्युच्यन्ते —

नालीयन्त्राणि सुषिराण्येकानेकमुखानि च ।
स्रोतोगतानां शल्यानामामयानां च दर्शने ॥ ११ ॥
क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च ।
तद्विस्तारपरीणाहदैर्घ्यं स्रोतोऽनुरोधतः ॥ १२ ॥

**नालीयन्त्राणीत्यादि** । **नालीयन्त्राणि** वस्तिनेत्रवत् **सुषिराणि स्युः** । तानि च **एकानेकमुखानि** एकद्वाराणि अनेकद्वाराणि च । **हृद्यकारो**ऽप्याह— "नालीयन्त्राणि सुषिराणि अन्तः सावकाशानि वेणुनाल्यादिवत् एकमुखानि कानिचित् अर्शोयन्त्रादीनि अनेकमुखानि कानिचित् । यथा उदरवेधे उभयमुखद्वारा नाली विधीयते" इति । **स्रोत इत्यादि** । **कण्ठादिस्रोतोगतान शल्यानां दर्शननिमित्तं** विदधीत । तथा कण्ठादिस्रोतोगतानां रोगाणां **दर्शने** तथा **क्रियाणां** शस्त्रक्षाराग्निप्रक्षालनौषधप्रणिधानादीनां **सुकरत्वाय** च सौकर्यार्थम् । 'कण्ठादिस्रोतस्सु कर्मकरणार्थम्' इति केचित् । तथा विषदिग्धादीनां **आचूषणार्थं** च विदध्यात् । 'वातरक्ताद्याचूषणाय' इति **हृद्यकारः** । **तद्विस्तारे**त्यादि । तेषां नालीयन्त्राणां विस्तारादि स्रोतोऽनुरोधाद् भवति । **विस्तारः** पृथुत्वम् । **परीणाहो** वर्तुलत्वं दैर्घ्यमायामः । एतानि स्रोतोवशाद् भवन्ति । यथा अनुवासनोत्तरवस्तिनस्यधूमनालीकादिषु निर्दिष्टम् ॥ ११-१२ ॥

**दशाङ्गुलार्धनाहांतःकण्ठशल्यावलोकिनी ।**
**नाली, पञ्चमुखच्छिद्रा चतुष्कर्णस्य संग्रहे ॥ १३ ॥**
**वारङ्गस्य द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः ।**
**वारङ्गकर्णसंस्थानानाहदैर्घ्यानुरोधतः ॥ १४ ॥**
**नाडीरेवंविधाश्चान्या द्रष्टुं शल्यानि कारयेत् ।**

**दशेत्यादि** । अन्तः कण्ठे शल्यमन्तःकण्ठशल्यम् । **अन्तःकण्ठशल्यावलोकिनी** कण्ठाभ्यन्तरशल्यावलोकनार्थं **नाली दशाङ्गुला** आयामतः **अर्धनाहा** अतो दशाङ्गुलादर्धनाहा पञ्चाङ्गुलपरिणाहा अन्तः सुषिरा च । परतन्त्रवचनात् । "कण्ठशल्यदर्शनार्थं नाली दशाङ्गुलायता पञ्चाङ्गुलपरिणाहा" इति **संग्रहे** । **पञ्चे**त्यादि । नालीति वर्तते । पञ्च मुखानि छिद्राणि यस्याः सा । एकं मुखं शरवारङ्गस्य ग्रहणाय शेषाणि कर्णचतुष्टयस्य ग्रहणाय । सा नाली **चतुष्कर्णस्य वारङ्गस्य संग्रहे** संग्रहणनिमित्तं युज्यते । चत्वारः कर्णौ यस्य वारङ्गस्येति समासः । तत्र शरादेरन्तः प्रवेश्यः कीलो वारङ्ग उच्यते । वारङ्गान्तरं — **वारङ्गस्य द्विकर्णस्य** संग्रहे **त्रिच्छिद्रा** नाली स्यात् । त्रीणि छिद्राणि यस्या सा त्रिच्छिद्रा । त्रिच्छिद्रशब्दस्योपलक्षणार्थत्वात् त्रिमुखेत्येतदपि द्रष्टव्यम् । तस्य वारङ्गस्य प्रमाणं तत्प्रमाणं तस्मात् **तत्प्रमाणतः** । वारङ्गप्रमाणानुसारेण नालीप्रमाणं विज्ञेयम् । अथवा तत्प्रमाणतः वारङ्गकर्णानां

प्रमाणानुकूलेन। संग्रहे चोक्तम्— "द्विकर्णस्य तु वारङ्गस्य संग्रहार्थं त्रिच्छिद्रमुखां नालीं तत्प्रमाणतः कुर्यात्। तथा च चतुष्कर्णस्य पञ्चमुखच्छिद्राम्' इति। "पञ्चमुखायास्त्रिमुखायाश्च नाल्या मुखानां मूलमेकं विशति। तत्र मध्यमं मुखं वारङ्गग्रहणे शेषाणि तत्कर्णानाम्।" इतीन्दुः। 'वारङ्गग्रहणस्थानम्' इति हाटकः। वारङ्गेत्यादि। कर्णादीनां द्वन्द्वः। वारङ्गस्य कर्णादीनि तेषामनुरोधस्तस्माद् वारङ्गकर्णादिप्रमाणानुसारेणैवंप्रकारा अन्याश्च नालीः अन्या अपि नालीः शल्यानि शरीरान्तर्गतानि द्रष्टुं कारयेत्॥ ॥ १३–१४॥

पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशाङ्गुला॥ १५॥
चतुर्थसुषिरा नाडी शल्यनिर्घातिनी मता।

पद्मेत्यादि। मूर्ध्नि मूर्धभागे पद्मकर्णिकया जलजकर्णिकया सदृशी। कियत्प्रमाणा, द्वादशाङ्गुला दैर्घ्येण तथा चतुर्थसुषिरा चतुर्थो भागः सुषिरो यस्याः सा त्र्यङ्गुलसुषिरेत्यर्थः। एवं शल्यनिर्घातिनी ज्ञेया। प्रवेशमार्गाहरणाशक्यानां शल्यानां निर्घातनम्। निर्घातिन्यां सुषिरे भागे निर्घात्य शल्यं प्रविष्ठं मुखेन निर्गच्छति। संग्रहे चोक्तम् — "शल्यनिर्घातिनीं तु पद्मकर्णिकाकारशीर्षां द्वादशाङ्गुलां त्र्यङ्गुलसुषिरां कुर्यात्" इति॥

अर्शोयन्त्रमाह—

अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम्॥ १६॥
नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम्।
द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि॥ १७॥

मध्येऽस्य त्र्यङ्गुलं छिद्रमङ्गुष्ठोदरविस्तृतम्।
अर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकं तु तदूर्ध्वतः॥ १८॥
शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीडनम्।
सर्वथापनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरे॥ १९॥

अर्शसामित्यादि। अर्शसां सम्बन्धि यन्त्रकं गोस्तनाकारं कार्यम्। यन्त्रकमिति अल्पे कप्रत्ययः। दैर्घ्येण चतुरङ्गुलमातुराङ्गुलमानतः। नाहे परिणाहे पञ्चाङ्गुलं पञ्चाङ्गुलदीर्घेण सूत्रेण वेष्टनीयम्। स्थौल्यमित्यर्थः। पुंसामेव

पञ्चाङ्गुलं परिणाहे स्यात् स्त्रीणां तु परिणाहे षडङ्गुलम् । स्वभावत एव तासां गुदस्य पायोर्महत्त्वात् । तच्च त्रिविधमित्याह । व्याधेर्दर्शने द्विच्छिद्रमुभयपार्श्वच्छिद्रं कर्मणि शस्त्रक्षाराग्न्यवचारणे एकच्छिद्रमेकपार्श्वच्छिद्रं यन्त्रकम् । अस्य यन्त्रस्य मध्ये ऊर्ध्वमधश्चार्धाङ्गुलं मुक्त्वा त्र्यङ्गुलं छिद्रमङ्गुष्ठोदरविस्तृतं कुर्वीत । तदूर्ध्वतः छिद्रादूर्ध्वं नेत्रस्य मूलार्धाङ्गुले उच्छ्रितोद्वृत्तकर्णिकम् अथवा अर्धाङ्गुलोच्छ्रिता उद्वृत्ता कर्णिका यस्य तदेवं त्र्यङ्गुलच्छिद्रमङ्गुष्ठोदरतुल्यविस्तारम् । शमीसंज्ञं तृतीयं यन्त्रकं तादृक् गोस्तनाकारमित्यादिलक्षणलक्षितयन्त्रसदृशं स्यात् । अत्र विशेषमाह—आच्छिद्रं पार्श्वच्छिद्ररहितं विधेयम् । इदं च यन्त्रमर्शःप्रपीडने योज्यं स्यात् । संग्रहे चोक्तं— "अर्शोयन्त्रं त्रिविधम् । ताम्रायोहैमं दान्तं शार्ङ्गं वार्क्षं च गोस्तनाकारं चतुरङ्गुलायतं हस्ततलायतमेकं पञ्चाङ्गुलानि परिणाहेन पुंसां षडङ्गुलानि स्त्रीणाम् । द्विच्छिद्रं दर्शनार्थं एकच्छिद्रं कर्मणि । तथा हि । सुखेन दर्शनं शस्त्रक्षाराग्न्यनतिक्रमश्च । छिद्रं तु त्र्यङ्गुलायतमङ्गुष्ठोदरविस्तारं यदङ्गुलमवशिष्टं तस्याधोऽर्धाङ्गुलमुपरि तथा अर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकम् । तृतीयं तु तादृशमेव शम्याख्यं पार्श्वच्छिद्ररहितं पीडनार्थम्" इति । 'सर्वं परिणाहे पञ्चाङ्गुलं पुंसाम्' इतीन्दुः । अस्मद्गुरवस्तु "शम्याख्यं यन्त्रं चतुरङ्गुलं परिणाहे" इति वदन्ति । "शमिस्तु चतुरङ्गुलः" इति तन्त्रान्तरवचनात् तथा तस्यार्शोयन्त्रे प्रवेशायोग्यत्वाच्च । सर्वथा भगन्दरे भगन्दरयन्त्रे ओष्ठमपनयेत् । कुतः प्रभृति छिद्रादूर्ध्वमुपरिष्टादर्धाङ्गुलमपकर्षेदित्यर्थः । 'कर्णिका तु कार्यैव सर्वथा व्याधिदर्शने कर्मणि च' इति केचित् ।

"सर्वं चापनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरः"

इति केषाञ्चित् पाठः ॥ १६–१९ ॥

घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया ।
प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत् ॥ २० ॥

घ्राणार्बुदे घ्राणार्शसि च एकच्छिद्रा नाडी दैर्घ्येणाङ्गुलद्वयप्रमाणा प्रदेशिनीतुल्यपरिणाहा । सा च भगन्दरयन्त्रतुल्या स्यात् । अपनीतौष्ठेत्यर्थः ॥ २० ॥

अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम् ।
द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम् ॥ २१ ॥

अङ्गुलित्राणकाख्यं यन्त्रं दान्तं दन्तमयं काष्ठमयं वा चतुरङ्गुलप्रमाणमर्शोयन्त्रसदृशं द्विच्छिद्रमूर्ध्वाधश्छिद्रं गोस्तनाकृतिः स्यात्। अङ्गुलित्राणकमङ्गुल्यां प्रविष्टं अङ्गुलीमुखं नावृणोतीत्युभयतश्छिद्रं तच्च वक्त्रस्य विवृतावङ्गुलिप्रसारणे सुखं यथा वक्त्रविस्रावणे। अङ्गुलीनां दन्तेभ्यो रक्षणादन्वर्थमङ्गुलित्राणकमिति। तद् दृढेन सूत्रेण मणिबन्धप्रतिबद्धमास्यविस्रावणे योज्यम् ॥ २१ ॥

योनिव्रणेक्षणं मध्ये सुषिरं षोडशाङ्गुलम्।
मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम् ॥ २२ ॥
चतुःशलाकामाक्रान्तं मूले तद्विकसेन्मुखे।
यन्त्रे नालीव्रणाभ्यङ्गक्षालनाय षडङ्गुले ॥ २३ ॥
वस्तियन्त्राकृती मूलमुखेऽङ्गुष्ठकलायखे।
अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ॥ २४ ॥

योनिव्रणमीक्ष्यते येन तद् योनिव्रणेक्षणं यन्त्रम्। मध्ये मध्यभागे सुषिरमुभयतोमुखमित्यर्थः। तथा षोडशाङ्गुलं दैर्घ्येण, परिणाहतो योनिप्रमाणेनानुमेयम्। तथा मुद्राबद्धं सुषिरयुक्तया सञ्चारिण्या मुद्रया ऊर्मिकया बद्धम्। तथा चत्वारो भित्ताः पत्राणि यस्य तत् चतुर्भित्तम्। तथा कोणेषु चतस्रश्च शलाका यस्य तच्चतुःशलाकम्। मूले आक्रान्तं शलाकानां मूलं अनया शलाकाबद्धमुद्रया क्रान्तं तद् यन्त्रमुखे जलजमुकुलसदृशे विकसेत् प्रसरेत्। शलाकामूलाक्रमणाद् मुखविकासि स्यात्। यन्त्रे द्वे षडङ्गुले भवतः। किमर्थं, अभ्यङ्गश्च क्षालनं च तदभ्यङ्गक्षालनं नालीव्रणस्याभ्यङ्गक्षालनं तदर्थमुपयुज्यते। आकार आकृत् 'सम्पदादित्वात्' क्विप्। वस्तियन्त्रस्येवाकृद् आकारो ययोस्ते वस्तियन्त्राकृती 'गोपुच्छाकारम्' इत्यादि लक्षणयुक्ते। तथा मूलमुखे मूले मुखे च यथा सङ्ख्यमङ्गुष्ठकलायखे मूलेऽङ्गुष्ठतुल्यच्छिद्रे मुखे कलायतुल्यच्छिद्रे। अग्रतोऽकर्णिके अग्रतः कर्णिकारहिते इति वस्तियन्त्राद् विशेषः। मूले तु कर्णिके द्वे अपि वस्तिपुटयोजनार्थे कार्ये। एवेत्यग्रग्रहणम्। मूले मूलदेशे निबद्धं योजितं मृदुचर्म वस्तिपुटाकारं ययोस्ते निबद्धमृदुचर्मणी। "नालीव्रणस्य प्रक्षालनाभ्यञ्जनयन्त्रे षडङ्गुले वस्तियन्त्राकारे मुखतोऽकर्णिके मूलमुखयोरङ्गुष्ठकलायप्रवेशस्रोतसी" इति संग्रहे ॥ २२–२४ ॥

द्विद्वारा नलिका पिञ्छनलिका वा दकोदरे।
धूमवस्त्यादियन्त्राणि निर्दिष्टानि यथायथम् ॥ २५ ॥

दकोदरे जलस्रावणार्थं द्विद्वारा उभयमुखी नलिका नाली स्यात्। अथवा पिञ्छनलिका मयूरपिञ्छजा नालीत्यर्थः। पिञ्छं पक्षिणां पश्चिमा पक्षसंहतिः। धूमादियन्त्राणि यथास्वमध्यायेषु धूमपानविध्यादिषूक्तानि। आदिशब्देन स्वेदवस्त्युत्तरवस्तिप्रधमनमूत्रवृद्धिनिरुद्धमणिप्रभृतीनां ग्रहणम् ॥ २५ ॥

त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम्।
अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ २६ ॥

शृङ्गं त्र्यङ्गुलास्यं त्र्यङ्गुलविस्तारमुखम्। आस्यं रक्तग्रहणस्थानम्। दुष्टवातविषरक्ताम्बुदुष्टस्तन्यादेश्चूषणे चूषणनिमित्तं अष्टदशाङ्गुलं स्यात्। अष्टादशेति। "द्व्यष्टन—" इत्यादिना आकारादेशः। अष्टदशाङ्गुलमिति केषाञ्चित् पाठः। अष्टाङ्गुलं वा दशाङ्गुलं वा आयामे। तथाग्रे प्रान्ते सर्षपप्रमाणच्छिद्रम्। यः प्रदेशः चूषणाय शरीरे योज्यते तदग्रम्। तथा सुनद्धं लूतपट्टेन सम्यग् बद्धम्। चूचुकाकारमग्रे। चूचुकं स्त्रीस्तनाग्रम्। तच्छृङ्गं चूषणे वातविषरक्ताम्बुदुष्टस्तन्याचूषणार्थमिति यावत् ॥ २६ ॥

स्याद्द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः।
चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्तहृत् ॥ २७ ॥

अलाबुर्द्वादशाङ्गुलो दैर्घ्येण स्यात्। परिणाहे अष्टादशाङ्गुलः। चत्वारि वा त्रीणि वा अङ्गुलानि यस्य तच्चतुस्त्र्यङ्गुलं तथाद्दशं वृत्तं वर्तुलं मुखं यस्य स एवम्। तथान्तर्मध्ये दीप्तो ज्वलितः पिचुवर्तिभूर्जादिगर्भ इत्यर्थः। स ईदृशो आचूषणेन दुष्टकफसंसृष्टरक्तहरः स्यात् ॥ २७ ॥

तद्वद् घटी हिता गुल्मविलयोन्नमने च सा।
शलाकाख्यानि यन्त्राणि नानाकर्माकृतीनि च ॥ २८ ॥

यथायोगप्रमाणानि तेषामेषणकर्मणी।
उभे गण्डूपदमुखे स्रोतोभ्यः शल्यहारिणी ॥ २९ ॥

मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले ।
शङ्कवः षडुभौ तेषां षोडशद्वादशाङ्गुलौ ॥ ३० ॥

व्यूहनेऽहिफणावक्त्रौ द्वौ दशद्वादशाङ्गुलौ ।
चालने शरपुङ्खास्यावाहार्ये बडिशाकृती ॥ ३१ ॥

तद्वद् घटीति । तद्वत् तेन यथोक्तेनालाबुना तुल्यदैर्घ्यपरिणाहादिस्तुल्यकार्या च घटी स्यात् । तथान्तर्दीप्ता श्लेष्मरक्तहृच्च । सा च गुल्मस्य विलयने उन्नमने च हिता । न केवलं कफरक्तहृदिति चार्थः । शलाकासंज्ञानि यन्त्राणि विविधकर्माणि विविधाकाराणि यथायोगप्रमाणानि स्युः । यथायोगप्रमाणानीति, यत्र देहप्रदेशे प्रयुज्यन्ते तदनुरूपमानानि । पाठ्यकारोऽप्याह— "यथायोगप्रमाणानीति, यस्य यस्य पुरुषस्य यत्र यत्र यथा कृते सति परिणाहदैर्घ्ये समाने भवतः तथा कार्यमित्यर्थः" इति । "यथायोगदैर्घ्यपरिणाहानि" इति संग्रहे । तेषां शलाकायन्त्राणां मध्ये गण्डूपदमुखे भूनागमसृणमुखे एषणकर्मणी उभे शलाकायन्त्रे भवतः । एषणं मार्गपर्येषणं कर्म ययोस्ते तथोक्ते । एषणम् आरा (തണ്ടായക്കോല്) इति भाषा । तथा स्रोतोभ्यः शल्यहारिणी द्वे शलाकायन्त्रे भवतः । किं भूते, मसूरदलमिव वक्त्रं ययोस्ते अष्टाङ्गुले नवाङ्गुले वा स्याताम् । षट् शङ्कवः स्युः । शङ्कुः (കാറിക്കോൽ) तेषां मध्ये द्वौ षोडशाङ्गुलद्वादशाङ्गुलौ भवतः । व्यूहने व्यूहनकर्मणि अहिफणावक्त्रौ सर्पभोगमुखौ च । व्यूहनं संश्लेषणम् । "व्यूहनं विपरीतस्थानां मांसादीनां सम्यग्रचनम्" इतीन्दुः । स्थानादपेतानां मांसादीनां स्थानस्थापनं व्यूहनमित्यस्मद्गुरवः । व्यूहनं (അമുക്കിഅടക്കൽ) चालनेऽधिकदन्तादीनां चालने द्वौ शङ्कू द्वादशदशाङ्गुलौ शरपुङ्खमुखौ भवतः । आहार्ये आहरणे बडिशाकारौ द्वौ शङ्कू यथायोगप्रमाणौ भवतः ॥ २८–३१ ॥

व्यूहनायाहिफणमुखौ चालनाय शरपुङ्खमुखौ आहरणाय बडिशमुखौ इति षट् शङ्कूनुक्त्वा गर्भशङ्कुमाह—

नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः ।
अष्टादशाङ्गुलस्तेन मूढगर्भं हरेत् स्त्रियाः ॥ ३२ ॥

नत इत्यादि । गर्भशङ्कुरेकः नतोऽग्रेऽग्रतोभागे तथा शङ्कुना तुल्यः पूर्वोक्तेन शङ्कुना तुल्याकृतिः । अष्टादशाङ्गुलदीर्घः स गर्भशङ्कुरिति स्मृतः । मुनिभिरिति शेषः । तेन गर्भशङ्कुना स्त्रिया मूढगर्भमनिस्सरन्तं सन्तं हरेत् 'अष्टाङ्गुलायतः' इति वा पाठः ॥ ३२ ॥

अश्मर्याहरणे सर्पफणावद्वक्रमग्रतः ।
शरपुंखमुखं दन्तपातनं चतुरङ्गुलम् ॥ ३३ ॥

अश्मर्याहरणमश्मर्याकर्षणम् । सर्पफणावदग्रे वक्रं स्यात् । सर्पफणाख्यमेवैतद् यन्त्रं स्यात् । शरपुङ्खमुखाख्यं यन्त्रं चतुरङ्गुलं स्यात् । पूर्वं चलितानां कृम्यादिभिर्भक्षितानां वा दन्तानां पातनं स्यात् । अनेन हि दन्ताः पात्यन्ते । एतदेव हि दन्तनिर्घातनाख्यम् ॥ ३३ ॥

कार्पासविहितोष्णीषाश्शलाकाः षट् प्रमार्जने ।

प्रमार्जने विविधव्रणक्लेदक्षारमार्जने षट् शलाकाः स्युः । 'प्रमार्जने क्षारक्लेदादेः' इत्यरुणदत्तः । किम्भूताः, कार्पासविहितोष्णीषाः कार्पासेन विहितं कल्पितमुष्णीषं शिरोवेष्टनमिव यासां तथोक्ताः । कार्पासेन संस्कृतेन घनेन शिरसि बद्धा इत्यर्थः । 'पिहितोष्णीषाः' इति केषाञ्चित् पाठः । तत्र कोऽर्थ इति न जानीमः ॥

तासां प्रमाणं विषयं चाह—

पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले ॥ ३४ ॥

पायावित्यादि । पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले भवतः । आसन्नार्थे दशाङ्गुला दूरार्थे द्वादशाङ्गुला इत्यर्थः । हाटकोऽपि – 'आसन्ने दशाङ्गुला दूरार्थे द्वादशाङ्गुला' इत्याह ॥ ३४ ॥

द्वे षट्सप्ताङ्गुले घ्राणे द्वे कर्णेऽष्टनवाङ्गुले ।
कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम् ॥ ३५ ॥

घ्राणे षट्सप्ताङ्गुले भवतः । 'आसन्नदूरार्थे' इत्यत्राप्यनुवर्तते । आसन्ने घ्राणव्रणे षडंगुला दूरे घ्राणव्रणे सप्ताङ्गुला । कर्णे आसन्नदूरार्थेऽष्टनवाङ्गुले द्वे कर्णशोधनाख्यं यन्त्रमश्वत्थपत्रस्येव प्रान्तोऽग्रं यस्य तत् तथोक्तम् । अश्वत्थपत्रप्रान्तमिति अश्वत्थपत्रप्रान्तमेव गृह्यते नकुलाक्षिन्यायात् । तथास्रुवस्येवाननं यस्य तदेवम् । 'कर्णशोधनं स्रुवमुखमश्वत्थपत्राग्रम्' इति सङ्ग्रहे ॥ ३५ ॥

शलाकाजाम्बवोष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ।
युञ्ज्यात् स्थूलाणुदीर्घाणां, शलाकामन्त्रवर्ध्मनि ॥ ३६ ॥

मध्योर्ध्ववृत्तदण्डां च मूले चाऽर्धेन्दुसन्निभाम् ।

शलाकाजाम्बवोष्ठानामिति । शलाकाश्च जाम्बवोष्ठानि च तेषां पृथक् त्रयं क्षारे क्षारपातने अग्नौ अग्निदाहकरणे च युञ्ज्यात् । शलाका (പരന്നവ) । क्षारम् (കാരക്കോൽ) । अग्निः (ചൂട്ടുകോൽ) । जाम्बवोष्ठम् (കടക്കലയ്യാണി) । किंभूतानां शलाकाजाम्बवोष्ठानां, स्थूलाश्चाणवश्च दीर्घाश्च तेषाम् । अणुशब्दस्तन्त्रेण सूक्ष्महस्ववाची । तेन स्थूलसूक्ष्महस्वदीर्घाणामित्यर्थः । तत्र शलाकास्तिस्रः जाम्बवोष्ठानि च त्रीणि क्षारे तथाग्नौ च एवं द्वादशैतानि शलाकाख्यानि यन्त्राणि । क्षारपातनेऽग्निपातने च शलाकाबहुत्वमिच्छन्त्यपरे । ते तु पृथक् त्रयं युञ्ज्यात् । स्थूलाणुदीर्घाणामित्यत्र 'स्थूलानामणूनां दीर्घाणां च पृथक् त्रयं युञ्ज्यात्; शलाकानां जाम्बवोष्ठानां च' इति ब्रुवते । सङ्ग्रहे चोक्तम्-- "क्षाराग्निकर्मार्थे जाम्बवोष्ठानि द्वादशदशाष्टाङ्गुलानि क्रमाद् व्यङ्गुलाङ्गुलार्धाङ्गुलफलानि शलाकाश्च स्थूलसूक्ष्मदीर्घहस्वमध्यमाः" इति । शलाकामित्यादि — अन्त्रवर्ध्मनि आन्त्रवृद्धौ शलाकां युञ्ज्यात् । कीदृशीं, मध्यादूर्ध्वं वृत्तो दण्डो यस्यां ताम् । वृत्तग्रहणं शलाकासामान्यात् पृथुत्वनिराकरणार्थम् । तथा मूले मूलभागेऽर्धेन्दुसन्निभामर्धचन्द्राकाराम् अर्धेन्दुवक्रामित्यर्थः । "इन्दुवक्रायां वक्रादन्यस्मिन् पार्श्वे दण्डो विधेयः" इतीन्दुः ॥

कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ॥ ३७ ॥

कोलेत्यादि । कोलास्थि बदरास्थि तस्य दलमर्धखण्डमित्यर्थः । तत्तुल्यं तन्मात्रं मुखं यस्याः सा कोलास्थिदलतुल्यास्या= (അലകക്കോൽ.) नासार्शस्सु नासार्बुदेषु च दाहं करोति ॥ ३७ ॥

दशाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ।
कनीनीमध्यमानामीनखमानसमैर्मुखैः ॥ ३८ ॥

---

१. 'अष्टा' मुद्रिताष्टाङ्गहृदये सङ्ग्रहे च ।

दशेत्यादि। क्षारौषधक्रमे प्रणिधाने तिस्रः शलाकाः स्युः। कीदृश्यः, दशाङ्गुलाः। तथा कनीनिका च मध्यमा चानामिका च तासां नखास्तेषां मानं प्रमाणं तेन समैस्तुल्यैर्मुखैरुपलक्षिताः। सङ्ग्रहे चोक्तम्—"क्षारविषौषधप्रणिधानाय दर्व्यस्तिस्रोऽष्टाङ्गुला दर्व्याकाराः। कनीनिकानामिकामध्यमाङ्गुलिनखपरिमाणनिम्नमुखास्तथाङ्गुलिसंस्थानाः" इति॥ ३८॥

स्वंस्वमुक्तानि यन्त्राणि मेढ्रशुद्ध्यञ्जनादिषु।
अनुयन्त्राण्ययस्कान्तरज्जुवस्त्राश्ममुद्गराः॥ ३९॥
वध्रांत्रजिह्वबालाश्च शाखानखमुखद्विजाः।
कालः पाकः करः पादो भयं हर्षश्च तत्क्रियाः॥ ४०॥
उपायवित्प्रविभजेदालोच्य निपुणं धिया।

मेढ्रशुध्यादिषु उत्तरवस्त्यादिषु विषये स्वंस्वं यथास्वं यन्त्राणि उक्तानि गदितानि। आदिशब्देन नावनादिपरिग्रहः। अयस्कान्तादीन्यनुयन्त्राणि कल्पयेत्। स्वरूपयन्त्रकार्यकरणादनुयन्त्राणि। अयस्कान्तम्=(കാന്തക്കല്ല്)। रज्जु=(കയറ്)। वस्त्रम्=(പുടവ)। अश्म=(പാറ)। मुद्गरम्=(മുട്ടിത്തടി)। वध्रम्=(പാർവ)। आन्त्रम्=(കുടല്)। जिह्वा=(നാവ്) बाल(मूः)=(മയിർ)। शाखा=(താർ)। नखम्=(ഉകിർ)। मुखम्=(വായ്)। द्विजः=(പല്ല്)। पाकः=(പഴുപ്പ്)। करः=(കൈകെട്ട്)। पादः=(കാൽ) भयम्=(പേടി)। तत्क्रियास्तेषां यन्त्राणां क्रियाः निर्घातनादिकाः। बुध्या निपुणमालोच्य प्रविभजेत् निर्घातनादिकर्माणि प्रविभज्य युञ्ज्यादित्यर्थः। 'तत्क्रिया उक्ता यन्त्रक्रियाः' इति पाठ्यकारः।

"एतानि देहे सर्वस्मिन् देहस्यावयवेऽपि वा।
सन्धौ कोष्ठे धमन्यां च यथायोगं प्रयोजयेत्॥"

इति सङ्ग्रहे। 'अयस्कान्तादीन्यनुयन्त्राणि यथायोगं देहे प्रयोजयेत्।' इतीन्दुः॥ ३९–४०॥

तान्येव यन्त्राणां कर्माण्याह—

निर्घातनोन्मथनपूरणमार्गशुद्धि-
संव्यूहनाहरणबन्धनपीडनानि।
आचूषणोन्नमननामनचालभङ्ग-
व्यावर्तनर्जुकरणानि च यन्त्रकर्म॥ ४१॥

निर्घातनेत्यादि । यथासंभवं निर्घातनादि यन्त्राणां यन्त्रस्य वा कर्म । निर्घातनम् निपातनम्=(കൊട്ടിക്കിഴിക്ക) । उन्मथनमुन्मूलनम् =(തിരിച്ചു കഴിച്ചിടുക) । पूरणम् = (നിറയ്ക്കു) । मार्गशुद्धिः = (വഴിയുടക്കു) संव्यूहनम् = (അമുക്കിയാക്കു) । व्यूहनं विपरीतस्थानां पेश्यादीनां सम्यक् चलनमिति केचित् । विपरीतस्थानां मांसादीनां स्थानस्थापनं व्यूहनमिति च । आहरणम् =(പറിക്കു) । बन्धनम् =(കെട്ടുക) । पीडनम्=(അമുക്കുക) । आचूषणम्=(ഉറിഞ്ചുക) । उन्नमनम्=(ഉയർത്തുക) । नामनम्=(താഴ്ത്തുക) । चालनम् =(ഇളക്കുക) । भङ्गः = (ഒടിക്ക) । व्यावर्तनम् = (തിരിക്ക) । ऋजूकरणम् =(ചൊവ്വിടുക) । चः समुच्चये । प्रक्षालनादीनि समुच्चीयन्ते ॥ ४१ ॥

विवर्तते साध्ववगाहते च
ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्वेष्वविकारि यच्च ॥ ४२ ॥

विवर्तनादिभिश्चतुर्भिः कारणैर्यन्त्रेषु मध्ये कङ्कमुखं श्रेष्ठम् । निर्घातनादिव्यतिरिक्तयन्त्रकार्यकरणाद् विवर्तते व्रणप्रविष्टमपि परिवर्तयितुं शक्यमवगाहते साधु प्रविशति ग्राह्यं शल्यं गृहीत्वा उद्धरते उद्गच्छति यद् यस्मात् सर्वेष्वपि स्थानेषु मांससन्धिस्रोतःस्नाय्वस्थिकोष्ठेष्वविकारि । नास्त्यस्य विकार इत्यविकारि । सर्वेषु स्थानेषूद्धरणसामर्थ्यमस्य समानमित्यभिप्रायः । अतः सर्वयन्त्रेषु कङ्कमुखं प्रधानम् । 'व्यूहनं विवर्तनम्' इति हाटकः । "स्थानेषु सर्वेषु हृदयादिषु" इति हृद्याकारप्रभृतयः । यन्त्रेषु हस्तमेव श्रेष्ठं तदधीनत्वाद् यन्त्राणाम् । यन्त्रदोषाः सौश्रुते उक्ताः । "अतिदीर्घमत्यल्पग्राहि विषमग्राहि वक्रं मृदुमुखं मृदुकीलं मृदुपाशमिति यन्त्रदोषाः । उक्तदोषहीनमष्टादशाङ्गुलं यन्त्रं शस्तम्" इति ॥ ४२ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
पञ्चविंशोऽध्यायः ।

---

## अथ षड्विंशोऽध्यायः ।

**अथातः शस्त्रविधिमध्यायं व्याख्यास्यामः**

**इति ह स्माहुरात्रेयादयो महर्षयः ।**

यन्त्रेण दृष्टस्य गृहीतस्य च शल्यादेः शस्त्रं प्रयुज्यत इति, **शस्त्रस्वरूपविज्ञानार्थमध्यायारम्भः** । "यन्त्राणां शस्त्रापेक्षा यतः तस्माच्छस्त्रमाह" इति **पाठ्यकारः** ॥

"अन्योन्यापेक्षिता यस्मात् प्रयोगे यन्त्रशस्त्रयोः ।
तस्माद्यन्त्रविधेरूर्ध्वं शस्त्राणां विधिरुच्यते ॥"

इति च ॥

**षड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ।**
**शस्त्राणि रोमवाहीनि बाहुल्येनाङ्गुलानि षट् ॥ १ ॥**

**सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ।**
**अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयसि ॥ २ ॥**

**समाहितमुखाग्राणि नीलांभोजच्छवीनि च ।**
**नामानुगतरूपाणि सदा सन्निहितानि च ॥ ३ ॥**

**स्वोन्मानार्धचतुर्थांशफलान्येकैकशोऽपि च ।**
**प्रायो द्वित्राणि युञ्जीत तानि स्थानविशेषतः ॥ ४ ॥**

षडित्यादि । **बाहुल्येन शस्त्राणि षडङ्गुलानि** भवन्ति । तथा **षड्विंशतिसङ्ख्यानि** । तथा **सुकर्मारैः** कर्मकुशलैर्नरैर्**यथाविधि** सम्यङ्निष्पादितानि **रोमवाहीनि** रोमवहनसमर्थानि । वहनं **लेखनम्** । रोमवाहीनि— 'अनेन अङ्गसंवाहने कृते रोम्णा सार्धं गच्छन्तीत्यर्थः' इति **पाठ्यकारः** । सङ्ख्याग्रहणं शस्त्राणामसङ्करार्थम् । 'षाड्विंशतिम्' इति केषाञ्चित्पाठः । **सुरूपाणि** शोभनाकाराणि तथा **सुधाराणि** तीक्ष्णफलानि । धारा वेला वा । सुखेन गृह्यन्ते **सुग्रहाणि** सुग्रहणयोग्यानि **च कारयेत्** । अथवा शोभनो ग्रहो येषां तानि सुग्रहाणि । ग्रहम्=(പിടി) क कारयेत्, **अयसि** । कीदृशे, सुष्ठु ध्मातम्=(ഊതിക്കാച്ചിയ) **सुतीक्ष्णं** त्यक्तकिट्टम्=(നല്ലതാക്കാക്കുക) **आवर्तितं** हुलीकृतम्=(വട്ടമാക്കുക) । 'आवर्तितं पिण्डीकृत्य पक्वमयः' इतीन्दुः । एवंविधेऽयसि कारयेत् । अथवा एवंविधेऽयसि जातानीत्यन्वयः । कीदृशानि शस्त्राणि, **अकरालानि** सुदर्शनानि औज्वल्यं न कार्यमित्यर्थः । **समीहितं**

**सुष्ठु कृतं मुखाग्रं** येषां तान्येवम् । तथा नीलोत्पलद्युतीनि । **नाम्नानुगतं रूपं** येषां तानि फलाकृतिविशेषेणानुगतनामत्वं. वृचानामेषण्या तुल्य आकृतिविशेष इति यावत् । अन्वर्थनामानीत्यर्थः । तथा सर्वकालं **सन्निहितानि** समीपस्थानि च । स्वं च तदुन्मानं च **स्वोन्मान**मात्मीयप्रमाणं तस्मात् सकाशा**दर्धचतुर्थांश** अष्टमो भागः फलं येषां तान्येवम् । अत्रापि षडङ्गुलवद् बाहुल्येन फलस्याष्टभागत्वं परिग्राह्यम् । कुठारिकावृद्धिपत्रादीनां हीनाधिकफलवचनात् । अथवा कानिचित् स्वप्रमाणादर्धफलानि कानिचिच्चतुर्थांशफलानि कानिचिदष्टभागफलानि । "स्वप्रमाणादर्धचतुर्थफलानि सार्धत्रिभागफलानीत्यर्थः" इतीन्दुः । फलम् = (തല) । अपि चेति समुच्चये । **तान्येवंविधानि** शस्त्राणि **स्थानविशेषवशादेकैकशो द्वित्राणि प्रयुञ्जीत** । स्थानं बाह्वादि । एकैकश इति "एकं बहुव्रीहिवत्" इति द्वित्वसुब्लोपे ततः शस प्रत्ययः । सङ्ग्रहे चोक्तम्— "शस्त्राणि तु षड्विंशतिर्भवन्ति । तद्यथा— दन्तलेखनमण्डलाग्रवृद्धिपत्रे"त्यादि ॥ १-४ ॥

**मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृतिः ।**
**लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ॥ ५ ॥**

**मण्डलाग्र**मित्यादि । तेषां शस्त्राणां मध्ये **मण्डलाग्रं** नाम शस्त्रम् । कीदृक्, तर्जन्या अन्तर्नखस्तर्जन्यन्तर्नखः तस्येवाकृतिर्यस्य तदेवम् । अन्तर्नखं मांसनिकटं तदाकृति फलं यस्य । क तद्योज्यं, **लेखने छेदने** च । लेखनच्छेदनार्थं **पोथक्यादिषु योज्यम्** । आदिशब्देन वर्त्मरोगादयो गृह्यन्ते । उक्तं हि — भालुकीये—

"षड्भागे मण्डलं शुक्तिक्षुरसंस्थानमेव वा ।
मण्डलाग्रस्य धारेयं प्रमाणं तु षडङ्गुलम् ॥"

इति ॥ ५ ॥

**वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।**
**ऋज्वग्रमुन्नते शोफे गम्भीरे च तदन्यथा ॥ ६ ॥**

**वृद्धिपत्रं** नाम शस्त्रं **क्षुराकारं** स्यात् । तच्च छेदनादिषु योज्यम् । **छेदनम्** = (മുറിക്കൽ) **भेदनम्** (പിളർക്ക.) **पाटनम्** (വാർന്നുകളക) तेषु योज्यमिति प्रकृतम् । फलपरिमाणं तूक्तमेव । कीदृशम्, **उन्नते शोफे** ऋज्वग्रं स्यात् । योज्यमिति वा सम्बन्धः । ऋजु स्पष्टमग्रं यस्य तद् **ऋज्वग्रम्** ॥ ६ ॥

गम्भीरे तु शोफे तद् वृद्धिपत्रं अन्यथा कारयेदित्याह—

**नताग्रं पृष्ठतो दीर्घह्रस्ववक्त्रे यथाक्रमम्।**
**उत्पलाध्यर्धधाराख्ये छेदने भेदने तथा॥ ७॥**

**पृष्ठतः** पृष्ठदेशे **नताग्रं** नतमग्रं यस्य तदेवम्। **हाटकस्त्वाह**— "उन्नते शोफे ऋज्वग्रं योज्यम्। कथमन्यथेत्याह— पृष्ठदेशे नतमग्रं यस्य तद् गम्भीरेषु शोफेषु योज्यम्। ऋज्वग्रस्यातिप्रवेशभयादस्य छेदने कर्मण्यनपायित्वाद् गम्भीरेष्वित्युक्तम्" इति। "वृद्धिपत्रं क्षुराकारं तदुन्नते गम्भीरे वा श्वयथावृजु सूच्यग्रमिष्टम्। विपरीते तु पृष्ठतोऽवनतधारम्" इति **सङ्ग्रहे**। **दीर्घेत्यादि**। उत्पलं चाध्यर्धधारं च ते आख्ये ययोस्ते **उत्पलाध्यर्धधाराख्ये** शस्त्रे **यथाक्रमं** स्वप्रमाणापेक्षया **दीर्घह्रस्ववक्त्रे** भवतः। उत्पलमिति उत्पलपत्रं नाम शस्त्रं दीर्घमुखम्। अध्यर्धधारं ह्रस्ववक्त्रमित्यर्थः। "दीर्घवक्त्रा उत्पलधारा। ह्रस्ववक्त्रा अध्यर्धधारा" इति **हृद्याकारः**। ते च **छेदने भेदने** च योज्ये। **तथे**ति समुच्चये। पाटनेऽपि योज्ये इत्यर्थः।

"तुल्यमुत्पलपत्रेण तीक्ष्णधारं समाहितम्।
षडङ्गुलं भवेत् कार्यं शस्त्रमुत्पलपत्रकम्॥"

इति **भोजे**॥ ७॥

**सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले।**
**गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषणी॥ ८॥**

**सर्पास्यं** सर्पवक्त्रं नाम शस्त्रं नामानुगताकारं **घ्राणार्शश्छेदने कर्णार्शश्छेदने** च योज्यम्। तच्च **फलेऽर्धाङ्गुलं** भवति। "सर्पवक्त्रं वक्रमर्धाङ्गुलफलं घ्राणकर्णार्शोऽर्बुदच्छेदनार्थम्" इति **सङ्ग्रहे**। **गतेरित्यादि**। **एषणी** नाम शस्त्रं **गतेर्व्रणानामन्वेषणे** योज्या। कीदृक्, **श्लक्ष्णा** कोमलस्पर्शा तथा गण्डूपदमिव मुखं यस्याः सा **गण्डूपदमुखा**। अतीक्ष्णाग्रत्वं गण्डूपदमुखत्वेन दर्शितम्।

ननु पूर्वं शलाकायन्त्रे प्रोच्यमाने 'तेषामेषणकर्मणि उभे गण्डूपदमुखे' इति प्रोच्य सम्प्रति कथं प्रोक्तवानिति। अत्र पर्यनुयोगावकाश एव न वरीवर्ति। यतस्तयोरेषणकर्मणो यन्त्रयोः 'स्रोतोभ्यः शल्यहारिणी' इति विशेषणं प्रोक्तवान्। सम्प्रति पक्वशोफविदारणे गत्यन्वेषणसाधनभूतत्वात् शस्त्रभूतामेषणीं प्राह। "एषण्याः शस्त्रता यन्त्रता च विद्यत इति सूचनार्थमत्र वचनम्।" इति केचित्॥ ८॥

**भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ।**
**वेतसं व्यथने स्राव्ये शरार्यास्यं त्रिकूर्चके ॥ ९ ॥**

**अपरा** द्वितीया एषणी **भेदनार्थे सूचीमुखा** तीक्ष्णमुखी गतिमेषित्वा तदन्ते भेदनं करोति यतस्तस्मादेषण्येवैषा न सूचीत्यपरेति प्रोक्तम् । तथा मूले निविष्टं कृतं खं छिद्रं यस्याः सा **मूलनिविष्टखा** । धाराक्ता सूत्रप्रतिबद्धा च । **वेतस**मित्यन्तपदलोपाद्वेतसपत्रं नाम शस्त्रमित्यर्थः । वेतसपत्राकारं च षडङ्गुलं पूर्वोक्तफलं तच्च **व्यथने** योज्यम् । व्यथनं ताडनम् = (കുത്തുക) **स्राव्य** इत्यादि । **शरार्यास्यं** शरारीमुखं नाम शस्त्रम् । शरारी पक्षिविशेषः । शरारीमुखं **त्रिकूर्चके** शस्त्रे **स्राव्ये** योज्ये । स्राव्यम् = (കൊത്തുക) त्रयः कूर्चा यस्य तत् त्रिकूर्चकम् । कूर्चानामेकैकस्यान्तरालं व्रीहिमात्रम् । '**शरार्यास्या त्रिकूर्चके**' इति वा पाठः ॥ ९ ॥

**कुशाटावदने स्राव्ये द्व्यङ्गुलं स्यात्तयोः फलम् ।**
**तद्वदन्तर्मुखं तस्य फलमध्यर्धमङ्गुलम् ॥ १० ॥**

**अर्धचन्द्राननञ्चैतत् तथाध्यर्धाङ्गुलं फले ।**
**व्रीहिवक्त्रं प्रयोज्यञ्च तत्सिरोदरयोर्व्यधे ॥ ११ ॥**

**कुशाटावदने** नाम शस्त्रे **स्राव्ये** योज्ये । कुशमित्यन्तपदलोपात् कुशपत्रं नाम शस्त्रम् । 'कुशावदनमाटावदनं च' इति पाठ्यकारः । आटा पक्षिविशेषः । **तयोः** कुशपत्राटामुखयोः **फलं** द्व्यङ्गुलप्रमाणं **स्यात्** । अथवा कुशाटा नाम शस्त्रं **वदने स्राव्ये** योज्यम् । तयो शरारीकुशाटयोः फलं **द्व्यङ्गुलं स्यात्** । **अन्तर्मुखं** नाम शस्त्रं **तद्वत्** कुशपत्राटामुखवत् स्राव्ये प्रयुज्यत इत्यर्थः । **तस्यान्तर्मुखस्य फलमध्यर्धमङ्गुलं** स्यात् । **अर्धचन्द्राननं चैतत्** । अर्धचन्द्राकारत्वाद् अर्धचन्द्राननसंज्ञमन्तर्मुखमित्यर्थः । अथवान्तर्मुखस्याकृतिद्योतनार्थं वा अर्धचन्द्राननमित्येतत् । उक्तं च भालुकीये भोजे च—

"सप्ताङ्गुलं प्रमाणेन जिह्मधारमवाङ्नतम् ।
शस्त्रमन्तर्मुखं नाम्ना चन्द्रशृङ्गमिवोन्नतम् ।" इति ।

**तथाध्यर्धाङ्गुल**मिति व्रीहिवक्त्रस्य विशेषणम् । **व्रीहिवक्त्रं** नाम अध्यर्धाङ्गुलफलं स्यात् । **च**शब्दः समुच्चये भिन्नक्रमः । तच्च **सिराव्यधे उदरस्य** वेधने च योज्यम् ।

"शस्त्रं व्रीहिमुखं कार्यमङ्गुलानि षडायतम् ।
द्व्यङ्गुलं तस्य वृन्तं स्यात् फलं तु चतुरङ्गुलम् ॥"

इति भोजे ॥ १०–११ ॥

पृथुः कुठारी गोदन्तसदृशार्धाङ्गुलानना ।
तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिराम् ॥ १२ ॥

कुठारी नाम शस्त्रं कुठाराकारं पृथुः पृथुदण्डा विस्तीर्णसंस्थानदण्डेत्यर्थः । गोदन्तसदृशमर्धाङ्गुलप्रमाणमाननं यस्याः सैवम् । तया कुठार्योर्ध्वदण्डया ऊर्ध्वोत्क्षिप्तदण्डया सत्या अस्थ्नामुपरि स्थितां सिरां विध्येत् ॥ १२ ॥

ताम्री शलाका द्विमुखी मुखे कुरवकाकृतिः ।
लिङ्गनाशं तया विध्येत् कुर्यादङ्गुलिशस्त्रकम् ॥ १३ ॥

मुद्रिकानिर्गतमुखं फले त्वर्धाङ्गुलायतम् ।
योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ १४ ॥

ताम्री ताम्रमयी शलाका द्विमुखी उभयतोमुखा स्यात् । सा च मुखे कुरवकाकृतिः कुरबकमुकुल इव त्र्यश्रानना । कुरवकस्य मुकुलमानने त्र्यश्रं भवति । कुरवको रक्तसहचरः । तया शलाकया लिङ्गनाशं कफोत्थकाचसंज्ञं विध्येत् । अङ्गुलिशस्त्रकं कुर्यात् । कीदृशं, मुद्रिकयोर्मिकया निर्गतमुखम् । मुखं फलम् । फले तु तस्मिन् मुखेऽर्धाङ्गुलमायतं दीर्घम् । अङ्गुलिशस्त्रस्यार्धाङ्गुलधारा योगतः संस्थानेन वृद्धिपत्रेण तुल्यं मण्डलाग्रेण वा समम् । "योगतो मानतः" इति पाठ्यकारः । 'योगत आकृत्या' इत्यसद्गुरवः । "वृद्धिपत्रमण्डलाग्राध्यर्धधारान्यतमतुल्यार्धाङ्गुलायतधारम्" इति सङ्ग्रहे । आकृत्या वृद्धिपत्राद्यन्यतमसदृशफलादूर्ध्वं तत्र मुद्रा कार्या । तां चाङ्गुल्यां प्रवेश्य कार्यं क्रियते ॥ १३–१४ ॥

कियत्प्रमाणा मुद्रिका कार्येत्याह —

तत्प्रदेशिन्यग्रपर्वप्रमाणार्पितमुद्रिकम् ।
सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १५ ॥

तत्प्रदेशिन्यग्रेत्यादि । तस्य वैद्यस्य प्रदेशिनी तस्याग्रपर्व तस्य प्रमाणं तेनार्प्यते इति तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणी भिषक्तर्जन्यग्रपर्वप्रमाणार्हच्छिद्रा

मुद्रिका यस्मिन् (तत्) तत्प्रदेशिन्यग्रपर्वप्रमाणार्पितमुद्रिकम् । अर्पणमुद्रिकमिति वा पाठः । शस्त्रं परामृश्यत इति केचित् । तथा सूत्रबद्धं सूत्रेण बध्वा वैद्यस्य मणिबन्धने योज्यमित्यर्थः । गलस्रोतोरोगाणां छेदने भेदने च योज्यम् ॥ १५ ॥

ग्रहणे शुण्ठिकार्मादेर्बलिशं सुनताननम् ।
छेदेऽस्थ्नां करपत्रन्तु खरधारं दशाङ्गुलम् ॥ १६ ॥

विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम् ।
स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा ॥ १७ ॥

बलिशं नाम शस्त्रं शुण्ठिकार्मादेर्ग्रहणे योज्यम् । आदिशब्देनोपजिह्विकादेर्ग्रहणम् । कीदृशं, सुनताननं अङ्कुशवन्नतमाननं यस्य तदेवम् । करपत्रं नाम शस्त्रं खरधारं दशाङ्गुलं दैर्घ्येण द्व्यङ्गुलं विस्तारेण । सूक्ष्मा दन्ता यस्य तत् सूक्ष्मदन्तम् । खण्डधारं करपत्रस्य । खण्डत्वं खरधारत्वं च स्वभावः । तथा सुत्सरुबन्धनं शोभने त्सरुबन्धने यस्य तत् सुत्सरुबन्धनम् । त्सरुः मुष्टिः=(പിടി) बन्धनं ग्रहणस्थानम् । सुग्रहणे दारुणि निविष्टवारङ्गं शस्त्रम् । अभिधानकोशे — "यद्यपि त्सरुरसिमुष्टिः । मुष्टिमात्रस्येहोपलक्षणार्थत्वान्मुष्ट्यावप्युपपन्नमेव" । 'त्सरुर्मुष्टिग्रहणदेशः' इति सारकृत् । कर्तरी नाम शस्त्रं कर्तरिकेति प्रसिद्धम् । कर्तरीनिभा कर्तरीसदृशा कर्तरी = (കപ്പാമ്പാ) तत्सदृशी । अथवा कर्तरीनिभेति नापितहस्तादिषु स्थितकर्तरीसदृशीत्यर्थः । सा व्रणात् स्नाय्वादिच्छेदने योज्या । सूत्रम् = (ചരട്) कचम् = (മയിർ) ॥ १६-१७ ॥

वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् ।
सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने ॥ १८ ॥

नखशस्त्रं नखछेदनकं प्रसिद्धं वक्रर्जुधारं वक्रा च ऋजुश्च धारा यस्य तदेवम् । तस्य ह्येकस्मिन् मुखे धारा वक्रा अन्यस्मिन् ऋजुः । तथा नवाङ्गुलं न तु षडङ्गुलम् । तच्च सूक्ष्मशल्यस्य कण्टकादेरुद्धरणादौ नखच्छेदने च योज्यम् । प्रच्छानम् = (കൊത്തുക) लेखनम् = (ചിരക്ക) कुट्टनम् = (കുത്തുക) ॥ १८ ॥

**एकधारं चतुष्कोणं प्रवृद्धाकृति चैकतः ।**
**दन्तलेखनकं तेन शोधयेद्दन्तशर्कराः ॥ १९ ॥**

दन्तलेखनकं नाम शस्त्रमेकधारं तथा चतुष्कोणं चतुरश्रं चतुरश्रस्यैकस्यां दिशि धारा तथा एकत एकस्मिन् प्रदेशे प्रवृद्धा आकृतिर्यस्य तत् प्रवृद्धाकृतिः । प्रबद्धाकृतीति पाठान्तरम् । अथवा शरारीनिभेति वार्थः । तेन प्रवृद्धाकृति शस्त्रेण दन्तशर्कराः शोधयेत् ॥ १९ ॥

अधुना सूचीशस्त्रमाह —

**वृत्ता गूढा दृढाः पाशे तिस्रः सूच्योऽत्र सीवने ।**

वृत्ता इत्यादि । अत्रैषु शस्त्रेषु मध्ये सीवने सीवनविषये तिस्रः सूच्यः । किं भूताः, वृत्ता वर्तुलाः पाशे गूढाः यस्य पाशस्य पार्श्वयोर्मग्नं सूत्रं न दृश्यते तथा, दृढाः सारवन्तः । "गूढाः पाशे भेर्याकृति यत्र न्यस्तं सूत्रं न दृश्यते" इति सारकृत् । पाशो ग्रहणस्थानम् । "अतिस्थिरबन्धा इत्यर्थं सङ्कल्प्य गाढदृढाः" इत्यन्ये वदन्ति । "सूच्यस्तिस्रो वृत्ता निगूढदृढपाशाः" इति सङ्ग्रहे ।

आसां प्रत्येकं स्थानविशेषेणोपयोगविशेषमाह —

**मांसलानां प्रदेशानां त्र्यश्रा त्र्यङ्गुलमायता ॥ २० ॥**
**अल्पमांसास्थिसन्धिस्थव्रणानां द्व्यङ्गुलायता ।**
**व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्मसु ॥ २१ ॥**
**सा सार्धद्व्यङ्गुला**

बहुमांसानां शरीरप्रदेशानां त्र्यश्रा मुखे सूची स्यात् । त्र्यश्रेति । अग्रे त्र्यश्रत्वम् । वृत्तत्वं गूढपाशत्वं च प्रोक्तमेव सामान्यलक्षणेन । सङ्ग्रहेऽप्यवोचत् "त्र्यश्राग्रा" इति । त्र्यश्रेति चिन्त्यम् । तथा त्र्यङ्गुलमायता त्र्यङ्गुलदीर्घेत्यर्थः । अस्मद्गुरवस्त्वाहुः — "तिस्रः सूच्यः । अत्रासु सूचीषु मध्ये मांसलानां प्रदेशानां सीवने त्र्यश्राग्रा सूची स्यात" इति । अल्पमांसानां व्रणानां सन्ध्यस्थिसंश्रितानां च द्व्यङ्गुलमायता दीर्घा । वृत्तत्वं च तस्य सामान्योक्तम् । तृतीयामाह—व्रीहीत्यादि । व्रीहिमुखा चापवत् कुटिला स्यात् । धनुर्वक्राभ्यधिकं न प्रविशति । प्रविशत्येव द्वितीयेन व्रणोष्ठेनागाच्छति । दैर्घ्येण द्वे अङ्गुले सार्धे यस्याः सैवम् । सा च पक्वाशये आमाशये मर्मसु च व्रणानां सीवने योज्या ।

अधुना कूर्चमाह —

सर्ववृत्तास्ताश्चतुरङ्गुलाः ।
कूर्चो वृत्तैकपीठस्थाः सप्ताष्टौ वा सुबन्धनाः ॥ २२ ॥

स योज्यो नीलिकाव्यंगकेशशातनकुट्टने ।
अर्धाङ्गुलैर्मुखैर्वृत्तैरष्टाभिः कण्टकैः खजः ॥ २३ ॥

पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक् ।
व्यधने कर्णपालीनां यूथिकामुकुलानना ॥ २४ ॥

आराधाङ्गुलवृत्तास्या तत्प्रवेशा तदूर्ध्वतः ।
चतुरश्रा तया विध्येत् शोफं पक्कामसंशये ॥ २५ ॥

कर्णपालीं च बहलां तस्या एव च शस्यते ।
सूची त्रिभागसुषिरा त्र्यङ्गुला कर्णवेधनी ॥ २६ ॥

सर्वेत्यादि । ताः सूच्यः सर्वतो मूले अग्रे च वर्तुलाः दैर्घ्येण चतुरङ्गुलाः कूर्च इत्युच्यते । किम्भूताः, वृत्त एकस्मिन् पीठे संस्थिताः तथा सप्तसङ्ख्याः अष्टौ वा । तथा शोभनं बन्धनं यासां ताः सुबन्धनाः । अत एवेदं शस्त्रं सूचीकूर्च इत्युच्यते । तथा चार्शश्चिकित्सिते जगाद 'अर्शोभ्यो जलजा शस्त्रसूचीकूर्चैः' इत्यादि । स सूचीकूर्चो नीलिकादिषु कुट्टनविषये योज्यः । उपलक्षणार्थत्वाच्चात्र श्वित्रेन्द्रलुप्तादावपि योज्यः । त्रिकूर्चककूर्चयोरेकजातीयत्वाद् एकत्वमित्यन्ये । तदुक्तम् —

"वृत्तदण्डसमुद्भूतैः सूचीतीक्ष्णैस्त्रिभिर्मुखैः ।
त्रिकूर्चकं भवेच्छस्त्रं चतुर्भिः पञ्चभिस्तथा ॥
षड्भिः सप्तभिरष्टाभिः शिखरैः कूर्चता मता । इति ।

अष्टाभिः कण्टकैः खजो नाम शस्त्रमुच्यते । कीदृशैः, अर्धाङ्गुलप्रमाणं मुखं येषां तैः । तथा वर्तुलैः । तेन खजेन हस्ताभ्यां विलोड्यमानेन नासिकातोऽस्रं हरेत् । आरामाह — कर्णपालीनां व्यधननिमित्तं आरा नाम शस्त्रं स्यात् । कीदृशी, यूथिकामुकुलानना जातिपुष्पमुकुलाग्रा । अर्धाङ्गुलप्रमाणं वृत्तं च मुखं यस्याः सा अर्धाङ्गुलवृत्तास्या । तत्प्रवेशा स एवार्धाङ्गुलप्रमाणं प्रवेशो यस्याः

१. 'यूथिका नाम शस्त्रं मुकुलानना स्यात्' इत्यरुणदत्तः ।

सा तत्प्रवेशा अर्धाङ्गुलप्रवेशा । "अर्धाङ्गुलप्रवेशच्छिद्रा" इति हाटकः । तत्प्रवेशा "अर्धाङ्गुलपरिणाहेत्यर्थः" इति सारकृत् । उक्तं च भालुकीये —

"अर्धाङ्गुलपरीणाहामङ्गुलायतवेधनाम् ।
विद्यात् षडङ्गुलायामामाकृतिर्लोकतो भवेत् ॥" इति ।

तदूर्ध्वतः वृत्तार्धाङ्गुलादुपरिष्टाच्चतुरश्रा । "तदूर्ध्वतः द्वारस्योर्ध्वतः" इति पाठ्यकारः । 'ततोऽर्धेत' इति केषांचित् पाठः । तत्पक्षे अर्धाङ्गुलप्रमाणैव चतुरश्रा स्यादिति प्रोक्ते आराप्रमाणमङ्गुलमात्रमिति प्रोक्तं भवति । "आरा दैर्घ्याच्चतुरङ्गुला" इतीन्दुः । तया आरया शोफं व्रणानां विध्येत् । कदा, पक्वामसंशये किमयं शोफः पक्वः, उताऽऽम इति सन्देहे । बहलां च कर्णपालीं तया विध्येत् । बहलातिमांसला । तस्या एव बहलायाः कर्णपाल्या एव च व्यधनार्थे सूची शस्यते न केवलमारा । कीदृशी, त्रिभागसुषिरा त्रिभागप्रान्तभागे सुषिरो यस्याः सैवम् । दैर्घ्येण त्र्यङ्गुला नाम्ना कर्णवेधनी स्यात् । इति षड्विंशतिशस्त्राणि प्रोक्तानि । अत्रोद्देशादेव सिद्धे सङ्ख्याग्रहणं परमतनिराकरणार्थम् । सूचीकूर्चकर्तरीखजादेरनुक्त्या सङ्ख्याल्पत्वमिच्छति सुश्रुतः । मण्डलाग्रवृद्धिपत्रसूच्यादीनामवान्तरभेदात् सङ्ख्याबहुत्वमित्यन्ये । कर्तरीशरारीमुखयोरेकत्वमिच्छति कश्चित् । सूचीकूर्चयोरेकत्वमिच्छन्त्यन्ये । एषण्योर्द्वित्वमिच्छत्यपरः । आराकर्णवेधन्योरेकत्वमभिमतं कस्यचित् । त्रिकूर्चकूर्चयोरत्यन्तभिन्नयोरप्यैक्यमिच्छन्ति किं पुनराराकर्णवेधन्योरेककार्ययोः । तस्माद् येषां मण्डलाग्रादीनां कर्णवेधन्यन्तानां संज्ञा कृता तान्येतानि षड्विंशतिरिति ॥ २२-२६ ॥

**जलौकःक्षारदहनकाचोपलनखादयः ।**
**अलौहान्यनुशस्त्राणि तान्येवं च विकल्पयेत् ॥ २७ ॥**
**अपराननुयन्त्रादीन्[1]युपयोगश्च यौगिकम् ।**
**उत्पाट्यपाट्यसीव्यैष्यलेख्यप्रछानकुट्टनम् ॥ २८ ॥**
**छेद्यभेद्यव्यधोन्मन्थग्रहो दाहश्च तत्क्रियाः ।**

जलौकःप्रभृतयोऽलौहान्यनुशस्त्राणि । अशस्त्राण्येव शस्त्रकार्यं कुर्वन्तीत्यनुशस्त्राणि । शस्त्रकार्यं रक्तस्रावणादिकम् । अनुशस्त्राणीति त्वक्सारादीनां पारिभाषिकी संज्ञा । अथवा अनुशब्दः सामीप्यवाची । शस्त्रसमीपानि शस्त्रा-

1. 'अपराण्यपि' इति मुद्रिताष्टाङ्गहृदयपाठः.

न्तराणि शस्त्रसन्निकृष्टानि शस्त्रालाभे शस्त्रासम्भवे वा शस्त्रकर्म साधयन्तीति अनुशस्त्राणि । जलौकाः=(അട്ട.) दहनो अग्निः । काचः=([illegible]) आदिशब्देनायस्कान्तशेफालिकापत्रादीनां ग्रहणम् । अलौहानि न लोहकृतानि । अनेन लोहकृतान्यप्यनुशस्त्राणि सन्तीति गमयति । अलोहानीति वा पाठः । लोहवर्जितानीत्यर्थः ।

"जलौकाः स्फटिकः काचो नखोऽश्मां सार एव च ।
कुरुविन्दस्तथा क्षारमष्टमश्च हुताशनः ॥
कर्कशानि च पत्राणि तीक्ष्णाग्राश्चापि कण्टकाः ।
अनायसानि शस्त्राणि दशैतानि विनिर्दिशेत् ॥"

इति भोजे । एवञ्चोक्तेन न्यायेन तान्यानुशस्त्राणि विषयेषु स्वबुध्या कल्पयेत् । अपराननुयन्त्रादीनिति अन्यानप्यनुयन्त्रादीन् विकल्पयेत् । आदिशब्देनानुशस्त्राणां ग्रहणम् । उपयोगं च यौगिकं साधुतरं बुध्या कल्पयेत् निरूपयेत् । सङ्ग्रहे चोक्तम् — "स्वबुध्या च विकल्प्य विविधानि यन्त्रशस्त्राणि तत्कर्माणि चोपकल्पयेत् ।" हस्त एव चात्र प्रधानतमः, तदधीनत्वाद् यन्त्रशस्त्राणाम् ।
अपि च —

"हस्तः प्रधानं यन्त्राणां शस्त्राणामिति निश्चयः ।
हस्ताधीनं हि यन्त्राणां शस्त्राणां कर्म यत्नतः ॥
अनुशस्त्राणि शस्त्राणि यन्त्राण्यपि मनीषया ।
विविधं कल्पयेत् तानि कर्मण्यानि यथा तथा ॥" इति ।

उत्पाट्यादीनि तत्क्रियाः तेषां षड्विंशतिशस्त्राणां क्रियाः । अत्र सर्वत्र स्वार्थे तद्धितप्रत्ययः । नखशस्त्रादिना शोफस्यान्तर्नयनमुत्पाटनम् । "ऊर्ध्वाद् ग्रहणमुत्पाटनम्" इति केचित् । अथवा उत्पाट्यम्=(മേൽനോക്കി കീറുക.) पाट्यम् = (കീറുക.) साव्यम् = (ഊന്നുക.) एष्यम् = (ആരായ്ക.) उन्मन्थम् = (കടക.) तत्क्रियास्तेषां शस्त्राणामनुशस्त्राणां यन्त्राणां च क्रियाः इत्यन्ये ॥ २७,२८ ॥

शस्त्रदोषानाह—

कुण्ठखण्डतनुस्थूलह्रस्वदीर्घत्ववक्रताः ॥ २९ ॥
शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्तिताः ।

कुण्ठेत्यादि — स्पष्टम् ॥ २९ ॥

अधुना शस्त्राणां ग्रहणविधिं दर्शयति —

छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलान्तरे ॥ ३० ॥

तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात् सुसमाहितः ।
विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च ॥ ३१ ॥

तलप्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे ।
मूलेष्वाहरणार्थानि क्रियासौकर्यतोऽपरम् ॥ ३२ ॥

छेदेत्यादि । छेदभेदनलेख्यार्थं तर्जनीमध्यमाङ्गुष्ठैः शस्त्रं वृन्तफलान्तरे वृन्तफलयोर्मध्ये गृह्णीयात् । कीदृक्, सुसमाहितः तद्गतमनाः । वृन्तम् (ഞെട്ട്) विस्रावणानि विस्रावणकार्याणि आटावदनशरार्यास्यादीनि शस्त्राणि । वृन्ताग्रे वृन्तप्रान्ते नातिमूल इति यावत् । तर्जन्यङ्गुष्ठाभ्यां गृह्णीयात् । वृन्तस्याग्रं मध्ये निकटम् । तलेत्यादि । गृह्णीयादित्यनुवर्तते । तलशब्देन पाणितलमुच्यते । आदिलोपाख्यया तन्त्रयुक्त्या तलेन पाणितलेन प्रच्छन्नं प्रच्छादितं वृन्ताग्रं यस्य तत् तथोक्तं व्रीहिमुखं मुखे गृह्णीयात् । आहरणार्थानि बलिशादीनि वृन्तमूलेषु गृह्णीयात् । अपरं शेषं शस्त्रं क्रियासौकर्येण गृह्णीयात् । सुकरस्य भावः सौकर्यम् । यथा सुकरा पाटनादिका क्रिया तत्तथाददीतेत्यर्थः ॥ ३०–३२ ॥

शस्त्रकोशमाह —

स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः ।
क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ ३३ ॥

विन्यस्तपाशसुस्यूतः सान्तरोर्णास्थशस्त्रकः ।
शलाकापिहितास्यश्च शस्त्रकोशः सुसञ्चयः ॥ ३४ ॥

स्यादित्यादि । नवाङ्गुलविस्तारः शस्त्रकोशः स्यात् । तथा सुघनो निबिडः । द्वादशाङ्गुलो दैर्घ्येण । तथा क्षौमादिजः । क्षौमम् (നൽച്ചേല) पत्रम् (പച്ചിലപ്പട്ട്) ऊर्णा (മലിൽപ്പട്ട്) कौशेयम् (കോരപ്പട്ട്) दुकूलम् (ഉകിൽ) मृदुचर्म (മെത്തത്തോൽ) तथा विन्यस्तः कृतः पाशो यस्य स विन्यस्तपाशः विविधनिहितपाश इत्यर्थः । सुस्यूतः सूत्रादिभिः साधु प्रोतः । सान्तरोर्णास्थशस्त्रकः सान्तराणि सव्यवधानानि तथा ऊर्णास्थानि शस्त्राणि यस्मिन् स एवम् । अन्तरान्तरा रोमभिः

सह संसीव्य तस्मिन् रोमपुञ्जे शस्त्रस्थितिः कार्येत्यर्थः । तथा शलाकया पिहितं स्थगितमास्यं यस्य स एवम् । विन्यस्तपाशे मुखे हृढाकृष्टे परपरिहरणार्थं यन्त्रशलाकयास्यं विघट्टितव्यमित्यर्थः । शोभनः सञ्चयो यस्य स सुसञ्चयः । शस्त्रपूर्ण इति तानि तानि शस्त्राणि स्वे स्वे पुटे स्थापयित्वा शस्त्रैः सम्पूर्ण एव कार्यः । असम्पूर्णे शस्त्राणां घट्टनं शिथिलत्वादित्यर्थः । शस्त्रकोशः (കത്തിക്കൂട്) अधिगतशास्त्रो शस्त्रशिक्षां कुर्यात् । तथा चोक्तं सुश्रुते— "अधिगततन्त्रः शस्त्रशिक्षां कुर्यात् । यथा पुष्पफलालाबुकालिङ्गकादिषु छेदनस्य, पङ्कपूर्णदृतिप्रभृतिषु भेदनस्य, सरोम्णि चर्मणि लेखनस्य, मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्रावणस्य, सूक्ष्मघनवस्त्रान्तयोः मृदुचर्मान्तयोश्च सीवनस्य, मृतपशुदन्तेषु आहार्यस्य, वेणुशुष्कालाबुनालादिषु एषणस्य मृतपशुसिरासु उत्पलनालेषु च वेधनस्य, मृदुमांसखण्डेषु अग्निक्षारयोः, घटालाबूमुखेषु बस्तिपीडनस्य च योग्यां कुर्यात्" । योग्या शिक्षा । श्लोकश्चात्र—

"एवमादिषु मेधावी योग्यार्हेषु यथाविधि ।
द्रव्येषु योग्यां कुर्वाणो न प्रमुह्यति कर्मसु ॥".

इति ।

अनुशस्त्राण्युक्तानि । तेषु जलौकसः प्रधानम् । अतस्ता आह—

**जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ।**

जलौकसस्त्वित्यादि । सुखिनां सुखोचितानां नृपभीरुबालस्थविरसुकुमारनार्यादीनाम् । एते दुःखासहिष्णवः तेषां रक्तविस्रावणार्थं जलौकसो योजयेत् । उक्तं च तन्त्रान्तरे—

"नृपाणां सुकुमाराणां नारीणां बालवृद्धयोः ।
दुर्बलानां व्याधिजुषां रक्ते स्राव्ये जलौकसः ॥
योजयेद्रुधिरास्रावि स्यादुपायो मृदुः सुखः ।"

इति ॥

जलौकसो द्विविधाः सविषा निर्विषाश्च । तत्र सविषाणां सापायत्वात् ता एव तावत् कथयति — दुष्टाम्ब्वित्यादि । "जलौकसां प्रयोगे सविषाणां पूर्वकथनं पूर्वं तत्परित्यागः कार्यः इति सूचयितुम्" इति पाठ्यकारः । "दुष्टाम्ब्वित्यादिना सविषाणां सापायत्वात् परीक्ष्य तत्परित्यागः पूर्वं कार्य इति सूचयति" इति सारकृत् ।

दुष्टाम्बुमत्स्यभेकाहिशवकोथमलोत्भवाः ॥ ३५ ॥

दुष्टाम्बूद्भवा जलौकसः सविषा इति वर्जयेत् । तथा मत्स्यभेकसर्पादिशवकोथोद्भवाः । तथा तेषामेव मत्स्यादीनां ये मला मूत्रपुरीषादयः तदुद्भवाश्च सविषा इति वर्जयेत् ॥ ३५ ॥

सविषाणां लक्षणमाह —

रक्ताः श्वेताः भृशं कृष्णाः चपलास्स्थूलपिच्छलाः ।
इन्द्रायुधविचित्रोर्ध्वराजयो रोमशाश्च ताः ॥ ३६ ॥
सविषा वर्जयेत्, ताभिः कण्डूपाकज्वरभ्रमाः ।
विषपित्तास्रनुत्कार्यं तत्र,

रक्ता इत्यादि । यावल्लोमशाः याः ताः सविषाः यतस्ततो वर्जयेत् । ता न योजयेत्, ताभिर्हि योजिताभिः कण्ड्वादय स्युः । उपलक्षणं चेदम् । दाहशोफमूर्च्छादयोऽपि स्युः । तत्र तासु मोहाद् योजितासु विषादिजित्कार्यम् । हारुकोऽप्याह— "दुष्टाम्बुनि मत्स्यादीनां शवकोथे मले च या उद्भवन्ति रक्तत्वादियुक्ताः सविषा इति वर्जयेत्" । भृशशब्दस्य सर्वत्रान्वयः । इन्द्रायुधविचित्रोर्ध्वराजय इन्द्रायुधवदूर्ध्वराजी । विचित्रा इत्यनेन जलौकश्शब्देन प्रसिद्धा व्याचष्टे । तल्लक्षणमेवमुक्तं भोजे —

ऊर्ध्वराजीचिता या तु दृश्यते चेन्द्रधन्ववत् ।
यस्मिन् जले सा भवति प्रदीप्तमिव दृश्यते ॥

सैवोदके यं दशति हस्तिनं वाश्वं वा मृगम् ।
उपशाम्यति तत्रैव विषवेगसमीरितः ॥

तया दष्टमसाध्यं तु जानीयात् कुशलो भिषक् ।
इन्द्रायुधेति तां विद्यात् शृणु सामुद्रिकामपि ॥ " इति ।

रोमशा इति मुखे रोमशाः रोमवत्यः । मुखे इति विशेषः शास्त्रान्तरात् । उक्तं हि भोजे—

"अलगर्दमुखीं नाम तृतीयां तु निबोध मे ।
रोमशं च महच्चैव मुखं मत्स्यस्य वै यथा ॥
भवत्यस्या मुखं कृष्णं सविषां तां विनिर्दिशेत् ।" इति ॥ ३६ ॥

आसां लक्षणमाह—

शुद्धाम्बुसम्भवाः ॥ ३७ ॥

निर्विषाः शैवलश्यावा वृत्ताः नीलोर्ध्वराजयः ।

कषायपृष्ठास्तन्वङ्ग्यः किञ्चित् पीतोदराश्च याः ॥ ३८ ॥

शुद्धाम्ब्वित्यादि । जलौकस इति वर्तते । शुद्धाम्बुसम्भवाः शुद्धजलसम्भवाः सौगन्धिकोत्पलकमलविपुलसलिलशैवलजाः जलौकसो निर्विषाः स्युः । शैवलश्यावा शैवलमिव श्यावाः । तथा वृत्ताः तथा नीलोर्ध्वराजयः तथा कषायपृष्ठाः न्यग्रोधादिवल्कलसदृशं पृष्ठं यासां ताः एवम् । पाठ्यकारोऽपि—"कषायपृष्ठा रक्तपृष्ठाः" इत्याह । तथा तनुशरीराः किञ्चित्पीतवर्णजठराश्च निर्विषा वेद्याः । सर्वासां च परं प्रमाणमष्टादशाङ्गुलानि । तत्र चतुष्षडङ्गुला नृषु योजयेत् । गजवाजिष्वपराः । ता निर्विषा अपि जलौकसो रक्तमत्ता इति त्यजेत् । न केवलं सविषा इति प्रतिपादनार्थोऽपिशब्दः ॥ [३७,३८ ॥

रक्तमत्तत्वे हेतुद्वयमाह—

ता अप्यसम्यग्वमनात् प्रततञ्च निपातनात् ।

असम्यग् वमनात् पीतस्य दुष्टरक्तस्यासम्यग्वमनेन प्रततं च निपातनात् सततं रक्तपानाय योजनेन दुष्टरक्तवासितत्वेन रक्तमत्ता भवन्ति ।

ताश्च कथं लक्ष्या इत्याह—

सीदन्तीः सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ॥ ३९ ॥

अथेतराः निशाकल्कयुक्तेऽम्भसि च संप्लुताः ।

अवन्तिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥ ४० ॥

लगयेत् घृतमृत्स्तन्यरक्तशस्त्रपदाङ्गनैः ।

पिबन्तीरुन्नतस्कन्धाः छादयेदार्द्रवाससा ॥ ४१ ॥

सीदन्तीः सलिलं प्राप्येति । तास्तोयपूर्णकुम्भमासाद्य सीदन्तीर्न यथापूर्वं चेष्टमाना रक्तमत्ता इति ज्ञात्वा त्यजेत् । अथेत्यादि । अथैवं परीक्ष्यानन्तरं इतरा रक्तमत्तलक्षणविहीना निर्विषा लगयेत् । किंभूताः, निशाकल्कयुक्ते जले संप्लुताः क्षिप्ताः काञ्जिके वा अम्ले तक्रे वा क्षिप्ताः । एषु सम्प्लवनान्मुक्तपुरीषाः सतृष्णाश्च भवन्ति । निशायुक्तजलादिप्रक्षालनार्थं पुनर्जले सेकः । तस्मादाश्वासिताः सात्म्यभूते जले प्लवनात् सोत्साहाः सतीर्योजयेत् ।

१· 'परिप्लुताः' मुद्रिताष्टाङ्गहृदयपाठः.

जलगन्त्रीः कथं लगयेदित्याह । घृतादिनिपातनैस्ता योजयेत् । निपातन-शब्दः प्रत्येकं योज्यः । दंशदेशशुद्ध्यर्थं मृद्ग्रहणम् । आशुदशनार्थं घृतस्तन्यनिपातनम् । शस्त्रेणाल्परुधिरं मोक्षयित्वा वा ता योजयेत् । ताश्च पिबन्तीः सूक्ष्मवाससा छादयेत् । एवं हि मक्षिकाद्यनुपद्रवात् तासां सम्यग् योजना स्यात् । अथ किमेताः पिबन्त्युत नेति कथं ज्ञायत इति विशेषणद्वारेण हेतुमाह — उन्नतस्कन्धा इति उन्नतः स्कन्धो यासां ताः । एवमुन्नतस्कन्धत्वेन तासु पानं ज्ञात्वेत्यर्थः । 'सेचयेच्चाम्भसाऽल्पाल्पं आर्द्रवाससा' इति वा पाठः ॥

[ ॥ ३९—४१ ॥

ननु दुष्टरक्तशुद्धरक्तयोर्मिश्रत्वात् शुद्धरक्तमपि निह्रियते । ततः शुद्धरक्तस्याप्याकर्षणाज्जलूका दोषाय स्यादित्याह—

सम्पृक्ताद्दुष्टशुद्धास्राज्जलूका दुष्टशोणितम् ।
आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ॥ ४२१॥
दंशस्य तोदे कण्ड्वां वा मोक्षयेत्, वामयेच्च ताम् ।

सम्पृक्तादित्यादि । दुष्टशुद्धास्रान्मिश्रितादपि दुष्टं रक्तं जलूकाः पूर्वमादत्ते न तु शुद्धं देहधातुस्थितमिति दृष्टान्तेन दर्शयति । हंसो यथा क्षीरजलान्मिश्रितात् प्राग्दुग्धमादत्ते न जलं तथा जलूकाः प्रागशुद्धं रक्तमादत्त इति जलूकाजातिस्वभावः । हंसवज्जलौकसः प्राग् दुष्टमसृक् पिबन्तीत्यर्थः । प्रथममिति दुष्टशोणिताभावे पश्चात् शुद्धमपि पिबतीति न्याय्यमेतत् ।

"रक्तपा तु जलूकायां स्त्रियां भूम्नि जलौकसः ।"

इति वचनात् जलौका इत्यपपाठः । पाठ्यकारोऽपि— "प्रथममिति वचनात् पुनरन्यदपि गृह्णातीत्यर्थः" इत्याह । दंशस्य तोदे सति कण्ड्वां वा सत्यां शुद्धरक्तरक्षणार्थं अस्तियोगमग्राह्य । तामित्येकवचननिर्देशादेकैकां जलूकां मोक्षयेद् अपनयेत् । न तु सर्वाः सकृदेवेति गमयति । ता इति केषाञ्चित् पाठः । अथ पानलौल्याद् दंशममुञ्चन्त्याः क्षौद्रलवणचूर्णं हरिद्राचूर्णं वा मुखे दत्वा मोक्षयेत् । मोक्षितां च जलौकसं वामयेत् ॥ ४२ ॥

वमनविधानमाह—

पटुतैलाक्तवदनां श्लक्ष्णखण्डनरूषिताम् ॥ ४३ ॥
रक्षन् रक्तमदात् भूयः यस्मात् ता न पातयेत् ।
पूर्ववत् पटुता दार्ढ्यं सम्यग्वान्ते जलौकसाम् ॥ ४४ ॥

**क्लमोऽतियोगान्मृत्युर्वा दुर्वान्ते स्तब्धता मदः ॥ ४५ ॥**

**अन्यत्रान्यत्र ताः स्थाप्या घटे मृत्स्नाम्बुगार्भिणि ।**

वामयेदित्यादि । तण्डुलखण्डनं तण्डुलत्वक्चूर्णम् । श्लक्ष्णेन सूक्ष्मेण तण्डुलखण्डनेन रूषितामुपदिग्धगात्रामवकीर्णामित्यर्थः । तण्डुलशब्दस्यात्र लोपस्तन्त्रयुक्त्या । तथा सैन्धवयुक्तेन तैलेनाभ्यक्तमुखीं पुच्छादामुखमनुलोमं शनैः पीडयन् अपनीतां वामयेत् । जलूकामोक्षणादनन्तरं व्याधेश्चिकित्सामनुक्त्वा जलौकसां वमनविधानवचनं कालातिक्रमात् तासां व्याध्युत्पत्तिप्रदर्शनार्थम् । उक्तं च भालुकीये —

"अवान्तायाश्चिरं तिष्ठेत् याव(त्यर्थ?द्रक्तं) विमृद्यते ।
तस्याश्चेन्द्रमदो व्याधिरसाध्या सा जलायुका ॥"

इति । ताः कृतवमना जलौकसो रक्तमदाद् रक्षन् सप्ताहं न योजयेत् । जलौकसां सम्यग्रक्ते वान्ते सति पूर्ववदलगितानामिव पटुता दार्ढ्यं च भवति । अतियोगाद् वमनस्यातियोगात् क्लमो मृत्युर्वा स्यात् । दुर्वान्ते स्तब्धता मदश्च स्यात् । ताश्च जलौकसस्त्र्यहात् पञ्चाहात् सप्ताहाद् वा अन्यस्मिन्नन्यस्मिन् घटे स्थाप्याः । किम्भूते, मृत्स्नायुक्तेन जलेन गार्भिणि तद्युक्ते इत्यर्थः । प्रशस्ता मृत् मृत्स्ना । "सस्नौ प्रशंसायाम्" (५.४.४०) इति स्नप्रत्ययः । जलौकसां प्रशस्ता मृत् स्वजन्मभूमिस्था । उक्तं च भालुकीये—

"वापीपल्वलजातानां तटाकेषु सरस्सु च ।
तत एव च गृह्णीयाद् वैद्यो वारि सकर्दमम् ॥" इति ।

**लालादिकोथनाशार्थं सविषास्स्युस्तदन्वयात् ॥ ४६ ॥**

अनेकभाजनस्थापनेन कोऽर्थ इत्याह— लालादिकोथनाशार्थमिति । आदिशब्देन मूत्रपुरीषादिपरिग्रहः । लालादीनां जलौकःसम्बन्धिनां कोथः कुथितत्वं क्लिन्नता तन्नाशाय । "कोथो मृतजलौकसां शरीरम्" इति हाटकः । तदन्वयात् लालादियोगात् ताः सविषाः स्युः ।

**अशुद्धौ स्रावयेद्दंशात् हरिद्रागुडमाक्षिकैः ।**
**शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः ॥ ४७ ॥**

**दुष्टरक्तापगमनात् सद्यो रोगरुजां शमः ।**

अशुद्धं चलितं स्थानात् स्थितं रक्तं व्रणाशये ॥ ४८ ॥
व्यम्लीभवेत् पर्युषितं तस्मात्तत्स्रावयेत् पुनः ।
युञ्ज्यान्नालाबुघटिका रक्ते पित्तेन दूषिते ॥ ४९ ॥
तासामनलसंयोगाद्युञ्ज्याच्च कफवायुना ।
कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत् ॥ ५० ॥
स्कन्नत्वात्, वातपित्ताभ्यां दुष्टं शृङ्गेण निर्हरेत् ।
गात्रं बध्वोपरि दृढं रज्ज्वा पट्टेन वा समम् ॥ ५१ ॥
स्नायुसन्ध्यास्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ।
अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ॥ ५२ ॥
न गाढघनतिर्यग्भिर्न पदे पदमाचरन् ।
प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः ॥ ५३ ॥
हरेच्छृङ्गादिभिः सुप्तमसृग्व्यापि सिराव्यधैः ।
प्रच्छानं पिण्डिते वा स्यादवगाढे जलौकसः ॥ ५४ ॥
त्वक्स्थेऽलाबुघटीशृङ्गं, सिरैव व्यापकेऽसृजि ।

अशुद्धौ अशुद्धिलिङ्गानुमिते रक्ते व्रणे दृश्यमाने सति तत् स्रावयेद् दंशात् हरिद्रादिभिः। ततो रक्तस्रुत्यनन्तरं शतधौताज्यपिचवः शतधौतघृतसंपृक्ताः पिचवो योज्या इति शेषः। शतशब्दोऽनेकपर्यायः। बहुकृत्वो धौतमित्यर्थः। तथा शीतला लेपाश्च यष्टीचन्दनोशीरादिजा हिताः। योज्या इति वान्वयः। दंशस्थितचलितरक्तप्रसादनायेति भावः। दुष्टरक्तस्यापगमात् निस्सरणात् सद्यो द्रागेव रागरुजां शमः स्यात्। रागरुक्छम इत्युपलक्षणम्। श्वयथुदाहाद्युपशमोऽपि हि स्यादेव। तत्र घृतपरिषेकः कार्यः। धन्वन्तरीयाः पुनराहुः—"पीतसमनन्तरं घृतपरिषेकः कार्यः। व्रण्यत्वात् प्रसादनत्वाच्च।" श्लोकश्चात्र—"पीतमात्रं जलूकाभिः घृतेन परिषेचयेत्" इति। अशुद्धं निर्गतशिष्टं स्वस्थानाच्चलितं गमनोन्मुखं व्रणस्थाने स्थितं रक्तं व्यम्लीभवेत् पाकोन्मुखं भवेत् यतस्तस्माद् तत् रक्तं भूयः स्रावयेत्। व्यम्लीभूतं पित्तदूषितं स्वभावमधुरमम्लं व्रणावहम्। रक्ते पित्तेन दूषिते सति अलाबुघटिका न योजयेत्। तासामलाबूनां घटिकानां चाग्नेः संयोगात् पित्तरक्तापचेरिति भावः। तास्तु कफवायुना

दुष्टेऽसृजि युञ्ज्यात् । कफेन दुष्टं रक्तं शृङ्गेण नाकर्षयेत् । स्कन्नत्वात् स्त्यानत्वाद् हेतोः। शृङ्गस्याग्निसंयोगाभावेन कफविलयनसामर्थ्याभावात् प्रतिषेधः। वातपित्ताभ्यां दुष्टं रुधिरं शृङ्गेण निर्हरेत् । गात्रं प्रच्छानीयप्रदेशं रज्ज्वा पट्टेन वाससा वा दृढं समं बध्वा उपरि प्रच्छानीयप्रदेशस्य तथा स्नाय्वादि परिहरन् प्रच्छानं कुर्यात् । कथं, अधोदेशात् प्रविसृतैः प्रसृतैः पदैरुपरिगामिभिरूर्ध्व-प्रसारिभिः ऊर्ध्वगतपदाद्रक्तस्रवणैरधोभागो न दृश्यत इति । किं भूतैः पदैः, न गाढैः न घनैः न निरन्तरैः न च तिर्यग्भिर्न तिरश्चीनैः तथा न पदे पदमाचरन् पदस्योपरि पदमकुर्वन्नित्यर्थः । एकदेशे स्थितं रक्तं प्रच्छानेनाकर्षेत् । ग्रथितं बद्धमिवोन्नतं ग्रन्थ्यर्बुदगण्डशोफादिषु रक्तं जलजन्माभिर्जलौकोभिर्हरेत् । सुप्तं निश्चेतनं सत् प्रसुप्त्यादिविकारकारि शृङ्गादिभिर्हरेत् । हाटकोऽपि— "संहतं प्रसुप्तं वातदूषितमविकारकारि रक्तं शृङ्गादिभिर्हरेत्" इत्याह । व्यापि सकल-शरीरव्यापि सर्वशरीरस्थितं सिराव्यधैराकर्षेत् । गात्रप्रदेशे पिण्डिते ग्रन्थिजनके रक्ते प्रच्छानं वा स्यात् । अवगाढे रक्ते जलौकसः स्युः । त्वक्स्थे उत्ताने रक्तेऽलाबुघटीशृङ्गाणि स्युः । सर्वशरीरव्यापके रक्ते सिरैव स्यात् । सिरायां मतभेदो नास्तीत्येवशब्दार्थः ॥

वातादिधाम वा शृङ्गजलौकोऽलाबुभिः क्रमात् ॥ ५५ ॥

स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ।
सतोदकण्डूश्शोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ५६ ॥

वातादीत्यादि । अथवा वातादिस्थानस्थितं रक्तं यथाक्रमं शृङ्गादिभि-र्हरेत् । हाटकोऽपि — "वातधाम्न्यधःकाये शृङ्गेण, पित्तधाम्नि मध्यकाये जलूकाभिः, कफधाम्नि पूर्वकायेऽलाबुना क्रमान्निर्हरेत्"इत्याह ॥

स्रुतरक्तस्य नरस्य शीतलैः प्रलेपादिभिस्तोदकण्डूयुतः शोफो वातको-पात् स्यात् । तं तादृशं शोफमुष्णेन सर्पिषा सेचयेत् ॥ ५६ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां

षड्विंशोऽध्यायः ।

———

# अथ सप्तविंशोऽध्यायः ।

प्रसक्ते शोणितास्रावे सिराबेधोऽप्रणीयतः ।
अतस्तद्विधिसिध्यर्थमयमध्याय उच्यते ॥

भट्टणदत्तोऽप्याह—"अनन्तरातीतेऽध्याये शृङ्गादीन् लोहितावसेचनोपायानुक्त्वा 'प्रच्छानेनैकदेशस्थम्' इत्यादिवाक्येन तेषां विषयो दर्शितः । सिराव्यधस्य तु बहुवक्तव्यत्वात् पृथगध्यायो युक्तः" इति । हारकोऽप्याह — "रक्तावसेचनोपायेषु सिराव्यध उक्तः । तस्य बहुवक्तव्यत्वात् पृथगध्यायारम्भः प्रधानत्वाच्च । वचनं हि —

'रक्तावसेचनसाध्येष्वामयेषु सिराव्यधः प्रधानम् ।'

अमुना हि ते समूलाः शोषमुपयान्ति केदारसेतुभेदेन जलक्षयाच्छाल्यादय इव ।

"सिराव्यधश्चिकित्सार्धं सम्पूर्णं वा चिकित्सितम् ।
शल्यतन्त्रे स्मृतं यद्वद् वस्तिःकायचिकित्सिते ॥
यथा रक्तमधिष्ठानं विकाराणां विकारिणाम् ।
अन्यं नहि तथा दूष्यं कर्मेदं प्रथमं ततः ॥" इति ॥

**अथातः सिराव्यधविधिमध्यायं व्याख्यास्यामः ।**

**अथात** इत्यादि । सरत्याभी रक्तमिति सिराः तासां व्यधस्तद्विधिस्तमध्यायं व्याख्यास्यामः ।

रक्तं किमुच्यत इत्याह —

**मधुरं लवणं किञ्चिदशीतोष्णमसंहतम् ।
पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥**

**लोहितं प्रभवच्छुद्धं तनोस्तेनैव च स्थितिः ।
तत्पित्तश्लेष्मलैः प्रायः दूष्यते कुरुते ततः ॥ २ ॥**

**विसर्पविद्रधिप्लीहगुल्माग्निसदनज्वरान् ।
मुखनेत्रशिरोरोगमदतृड्लवणास्यताः ॥ ३ ॥**

**कुष्ठवातास्रपित्तास्रकट्वम्लोद्गीरणभ्रमान् ।**

**मधुरमि**त्यादि । अथवा न साध्यं शोणितं शुद्धमिति शुद्धस्य लक्षणमाह । शुद्धस्य विज्ञानादविशुद्धं च लक्ष्यते । लोहितं मधुरादिगुणयुक्तं तथा किञ्चिल्लवणम् । किञ्चिच्छब्द ईषदर्थे, ईषल्लवणम् । लवणशब्देनैव

किञ्चित्पदस्यान्वयः । तथा अशीतोष्णम् । नञीषदर्थे । ईषच्छीतमीषदुष्णं च । शीतोष्णगुणसाधारणमित्यर्थः । असंहतं द्रवरूपम् । इन्द्रगोपः कीटविशेषः । अविशशयोर्लोहितशब्देन रक्तवाचिना सम्बन्धः । पद्मादीनां द्वन्द्वः । पद्मेन्द्रगोपहेमाविशशलोहितामिव लोहितं रक्तवर्णं यद्रक्तं तच्छुद्धं स्यात् । पद्माद्यनेकदृष्टान्तोपादानं प्रकृत्यनुविधायिनोऽस्य शुद्धरक्तस्यानेकवर्णदर्शनात् । हृद्याकारोऽपि — "पद्मादिबहुपदार्थवर्णनं प्रकृत्यनुसारेण लौहित्यस्य विशेषसिध्यर्थम्" इत्याह । तच्च तनोः शरीरस्य प्रभव उत्पत्तिहेतुः । शोणितस्यार्तवाख्यस्य गर्भकारणत्वात् तेनैव च रक्तेन शरीरस्य स्थितिः । प्रबन्धाविच्छेदलक्षणा उत्पत्तिः स्थितिश्च तनोः शोणितादित्यर्थः । 'लोहितं प्रवदेत्' इति वा पाठः । तच्च शुद्धरक्तं बाहुल्येन पित्तश्लेष्मलैः दूष्यते । पित्तलैः क्षारोष्णतीक्ष्णादिभिः श्लेष्मलैः माषतिलादिभिः दूष्यते । प्रायोग्रहणात् कालस्वभावाद्धावनादिभिश्चेत्यर्थः । ततो दूषणात् कारणात् विसर्पादीन् आमान्तान् कुरुते ॥ १-३ ॥

रक्तजानां विसर्पादिव्यतिरिक्तानां रोगाणामवगमायाह —

शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ॥ ४ ॥

सम्यक् साध्या न सिध्यन्ति ते हि रक्तप्रकोपजाः ।
तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम् ॥ ५ ॥

शीतोष्णेत्यादि । वातादिशमकैः शीतोष्णादिभिः सम्यगुपक्रान्ताः सम्यक् चिकित्सिताः साध्या अपि साध्यलक्षणयुक्ता अपि रोगा ये न सिध्यन्ति शान्तिं न यान्ति ते च रोगा रक्तप्रकोपजाः रक्तप्रकोपोद्भूताः । न केवलं विसर्पादय इति चार्थः । आदिशब्देन स्तंभस्वेदादिपरिग्रहः । ननु शीतोष्णादीनां मध्ये गुरुलघ्वादयः किमिति नोक्ताः । उच्यते, तेषां षण्णामप्युपक्रमाणामेषु चतुर्ष्वन्तर्भावात् । किञ्च तेषां नैकविषयाभाववत्वाद् । गुरु श्लेष्मशमाय भवति; कदाचित् कोपाय । यथा मधु वाराहं मांसं तथा लघु चित्रकं शमाय, आजं दधि कोपाय । शीतादयस्तु नियतकार्या एवेति ग्रहणम् । तेषु विसर्पादिषु रोगेषूक्तेषु उद्रिक्तमुल्बणं रक्तं स्रावयितुं सिरां व्यधयेत् यथास्वम् । अरुणदत्तस्तु 'व्यधयेत्' इति पठति । अदन्तत्वाद् वृद्धेरभावः ॥ ५ ॥

न तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ६ ॥

गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम् ।
अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ७ ॥

स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ।
नायंत्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम् ॥ ८ ॥

नातिशीतोष्णवाताभ्रेष्वन्यत्राऽत्ययिकाद्गदात् ।

ऊनषोडशवर्षादीनां सिरां न व्यधयेत् । स्नेहपीते पीतस्नेह इत्यर्थः । आहिताग्न्यादित्वात् परनिपातः । तथा पञ्चसु वमनादिषु कर्मसु विहितेषु सत्सु सिरां न व्यधयेत् । तथा अयन्त्रितां सिरां न विध्येत् । न तिर्यग् विध्येत् । नानुत्थिताम् आहननादिनानुत्थितां न व्यधयेत् । नातिशीते नात्युष्णे नातिवाते नातिमेघोदये च सिरां विध्येत् । आत्ययिकाद् रोहिणीविषादिकाद् गदादन्यत्र । आत्ययिके तु रोगे शीतोष्णवृष्टीनां प्रतीकारं कृत्वा सिरां मोक्षयेदेव । अतिशीतादिष्वेषु सम्यग् विद्धा अपि सिरा न स्रवन्ति । अतिस्रवन्ति वा ॥ ६-८ ॥

प्रतिरोगं तुल्यव्यधप्रविभागो वक्ष्यते —

शिरोनेत्रविकारेषु ललाट्यां मोक्षयेत्सिराम् ॥ ९ ॥
अपाङ्ग्यामुपनास्यां वा कर्णरोगेषु कर्णजाम् ।
नासारोगेषु नासाग्रे स्थितां नासाललाटयोः ॥ १० ॥

पीनसे मुखरोगेषु जिह्वोष्ठहनुतालुगाः ।
जत्रूर्ध्वे ग्रन्थिषु ग्रीवाकर्णशङ्खशिरःश्रिताः ॥ ११ ॥

उरोऽपाङ्गललाटस्था उन्मादेऽपस्मृतौ पुनः ।
हनुसन्धौ समस्ते वा सिरां भ्रूमध्यगामिनीम् ॥ १२ ॥

शिरोनेत्रेत्यादि । शिरोनेत्रविकारेषु ललाट्यां सिरां मोक्षयेत् । ललाटे भवा ललाट्या 'शरीरावयवाद् यत्' इति यत् । एवमग्रेऽपि । ललाट्यां इति वा पाठः । अपाङ्ग्यामपाङ्गे भवां उपनास्यां नासासमीपभवां वा । कर्णरोगेषु कर्णजां कर्णसमीपभवां विध्येत् । नासारोगेषु नासाग्रे स्थितां विध्येत् ।

पीनसे प्रतिश्याये नासाललाटयोः स्थितां सिरां विध्येत् । मुखरोगेषु जिह्वादिगाः सिरा विध्येत् । जत्रूर्ध्वं ये ग्रन्थयस्तेषु ग्रीवाद्याश्रिताः सिरा विध्येत् । उन्मादे उरःस्था अपाङ्गस्था ललाटाश्रिताश्च विध्येत् । अपस्मारे तु हनुसन्धौ सिरां विध्येत् । समस्ते वेति — सर्वस्मिन् वा हनौ सिरां विध्येत् । सिरां भ्रूमध्यगामिनीमिति भ्रूमध्यस्थां वापस्मृतौ विध्येदिति । वाशब्दोऽत्रानुवर्त्य योज्यः । अथवा 'सर्वत्रोर्ध्वाङ्गव्याधौ भ्रूमध्यगामिनीम्' इति केचित् पठन्ति ॥ ९—१२ ॥

विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरे ।
तृतीयकेंऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके ॥ १३ ॥
प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुले स्थिताम् ।
शुक्रमेढ्रामये मेढ्रे ऊरुगाङ्गलगण्डयोः ॥ १४ ॥
गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुले ।
इन्द्रवस्तेरधोऽपच्यां द्व्यङ्गुले चतुरङ्गुले ॥ १५ ॥
ऊर्ध्वं गुल्फस्य सक्थ्यर्तौ तथा क्रोष्टुकशीर्षके ।
पाददाहे खुडे हर्षे विपाद्यां वातकण्टके ॥ १६ ॥
चिप्पे च द्व्यङ्गुले विध्येदुपरि क्षिप्रमर्मणः ।
गृध्रस्यामिव विश्वच्यां यथोक्तानामदर्शने ॥ १७ ॥
मर्महीने यथासन्ने देशेऽन्यां व्यधयेत्सिराम् ।

विद्रधौ पार्श्वशूले च पार्श्वस्थाः कक्षस्थाः स्तनान्तरस्थाश्च सिरा विध्येत् । "नात्र यथासङ्ख्यं पार्श्वकक्ष्यास्तनानामन्तरः" इति अस्मद्गुरवः । 'पार्श्वे कक्षस्तनयोरन्तरस्थाम्' इति सौश्रुते । 'तृतीयके ज्वरे अंसयोर्मध्ये अंससन्धौ स्थितां सिरां विध्येत्' इति अरुणदत्तः । 'अंसस्थाम्' इति हृद्याकारः । चतुर्थके ज्वरे स्कन्धस्याधोगतामन्यतरपार्श्वाश्रयां सिरां विध्येत् । प्रवाहिकायां श्रोणितः कट्याः समन्ताद् द्व्यङ्गुले स्थितां सिरां विध्येत् । शुक्ररोगे मेढ्ररोगे च मेढ्रे स्थितां सिरां विध्येत् । गलगण्डयोश्चोभयोरूरुस्थितां विध्येत् । गलस्य पार्श्वापेक्षया द्विवचनम् । गृध्रस्यां जानुनोऽधस्ताच्चतुरङ्गुले अतिक्रान्ते स्थितां सिरां विध्येत् । जानुन ऊर्ध्वं वा चतुरङ्गुले स्थिताम् । अपचीसंज्ञायां इन्द्रवस्तेरधो द्व्यङ्गुले स्थितां सिरां विध्येत् ।

इन्द्रवस्तिर्जङ्घान्तरे वक्ष्यमाणः। **सक्थ्यर्तौ** सक्थिपीडायां **गुल्फस्योर्ध्वे चतुरङ्गुले** अतिक्रान्ते विध्येत्। *क्रोष्टुकशीर्षको जानुमध्ये वातरोगः। पाददाहादिषु **क्षिप्रमर्मण** उपरिष्टाद् **द्व्यङ्गुले** सिरां विध्येत्। **खुड्डं** वातशोणितम्। 'उपरि क्षिप्रमर्मण' इति तत्र मर्मसद्भावादुपरीति सामीप्ये सप्तमी योज्या। यथा वटे गावः सुशेरते' इति केचित्। एतदस्मन्मनो नाराधयति। शास्त्रप्रोक्तकरणाद् दोषो न सम्भवति। यथा बस्तिभेदोऽश्मरीहेतुः सिद्धिं यातीति तथात्रापि द्व्यङ्गुले विद्धे दोषो नेति प्रत्यक्षमेतत्। **विश्वभ्यां गृध्रस्यामिव** सिरां विध्येत्। गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुल इतिवत्। विश्वभ्यां कूर्परस्याधस्तादूर्ध्वं वा चतुरङ्गुले सिरां विध्येदित्यर्थः। एतेन **बाहू** व्याख्यातौ। विशेषस्तु **प्लीहोदरे** वामबाहुमध्ये विध्येत्। **यकृदाख्ये** दक्षिणबाहुमध्ये विध्येत्। कासश्वासयोरपि बाहुसिरामादिशन्ति। **यथोक्तानां सिराणामदर्शने सति मर्मवर्जिते यथासन्ने देशे व्याधिवशादपरां सिरां विध्येत्।** **हाटकोऽप्याह**—"यथोक्तानां सिराणामदर्शने यस्मिन् व्याधौ या सिरोक्ता सा यदि न दृश्यते तदा अन्यव्याध्युक्तापि तन्निकटे व्यधनीया" इति ॥ १३—१७ ॥

**अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ॥ १८ ॥**
**कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजितः।**
**अग्नितापातपस्विन्नो जानूच्चासनसंस्थितः ॥ १९ ॥**
**मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः।**
**मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ॥ २० ॥**
**दन्तप्रपीडनोत्कासगंडाध्मानानि चाचरेत्।**
**पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नरः ॥ २१ ॥**
**कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम्।**
**एषोऽन्तर्मुखवर्जानां सिराणां यन्त्रणे-विधिः ॥ २२ ॥**

**अथेति** मङ्गले आनन्तर्ये वा। स्निग्धा तनुर्यस्य सः **स्निग्धतनुः**। तथा सज्जानि प्रगुणानि उपकरणानि पिचुप्लोतपत्रसूत्रवेणिकागारधूमलवणक्षौममषीव्यजनघृततैलशीतोदककटाहोष्णोदककटाहपीठशयनादीनि यस्य सः **सज्जसर्वोपकरणः**। तथा **बली** पुष्टः। तथा **कृतं स्वस्त्ययनं** बलिमङ्गलहोमादिकं

* क्रोष्टुकशीर्षके च विशेषेण गुल्फस्योर्ध्वं चतुरङ्गुले विध्येत्।

यस्य स कृतस्वस्त्ययनः । तथा व्याधिबलसात्म्याद्यपेक्षया स्निग्धरसयुक्तेनान्नेन प्रतिभोजितः । प्रतिभोजनमिति क्रियामुद्दिश्य भोजनम् । अथवा स्निग्धरसान्नप्रतीति पृथक्पदम् । "सुप्प्रतिना मात्रार्थे" (२-१-९) इत्यव्ययीभावसमासः । स्निग्धरसान्नं मात्रया भोजित इत्यर्थः । अग्नितापश्चातपश्च ताभ्यां स्विन्नः । तथा जानुतुल्यमुच्चमासनं तत्र संस्थितः । तथा मृदुना सूक्ष्मपट्टेनाचो गृहीतः केशान्तो यस्य स एवम् । तथा जानुनि स्थापितः कूर्परः येन स एवं तथा । आतुरो मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये अतिशयेन पीडयेत् । दक्षिणेन मुष्टिना दक्षिणां मन्यां वामेन वामां पीडयेत् । तथा दन्तप्रपीडनाद्याचरेत् । अन्यश्च नरः पुरुष एवमातुरं पृष्ठतः पृष्ठदेशे आतुरग्रीवायां वस्त्रमावेष्टयन् यन्त्रयेत् । कथं—आतुरग्रीवायां वस्त्रं परिक्षिप्य तथा अन्तर्मध्ये वामतर्जनीं न्यस्य आतुरकृकाटिकाया वस्त्रस्य च मध्ये आत्मीयां प्रदेशिनीमङ्गुलिं कृत्वा यन्त्रयेदित्यर्थः । अन्तर्मुखवर्जानां सिराणां यन्त्रणे एष विधिरेतद् विधानं प्रकार इत्यर्थः । अन्तर्मुखं जिह्वादन्तादिवर्ज्यानामित्यपपाठः । यन्त्रणप्रयोजनं सिराव्यक्तिः शोणितस्य सुखागमनं च । उक्तं च—"तत्र वेध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते निवेश्यासने सक्थ्नोरकुञ्चितयोर्निवेशितकोर्परसन्धिद्वयस्य उभयहस्तावन्तर्गूढाङ्गुष्ठौ कृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रशाटकेन ग्रीवामुष्टी परिक्षिप्यान्येन पश्चात् स्थितेन पुरुषेण वामहस्तप्रदेशिनीमन्तरीकृत्य दक्षिणहस्तेन शाटकद्वयान्तं ग्राहयित्वा ततो वैद्यो ब्रूयात् सिरोत्थापनार्थमस्रस्रावणार्थं च प्राणेन पीडयेति । कर्मपुरुषमातुरं च मुखे वातं पूरयित्वा स्थापयेति । एष उत्तमाङ्गगतानां मुखवर्जानां सिराणां वेधे यन्त्रविधिः" इत्यादि ॥ १८—२२ ॥

ततो मध्यमयाङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया ।
ताडयेदुत्थितां ज्ञात्वा स्पर्शाङ्गुष्ठप्रपीडनैः ॥ २३ ॥

कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया ।
फलोद्देशे सुनिष्कम्पं सिरां तद्वच्च मोक्षयेत् ॥ २४ ॥

ताडयन्पीडयेच्चैनां विध्येद्व्रीहिमुखेन तु ।
अङ्गुष्ठेनोन्नमय्याग्रे नासिकामुपनासिकाम् ॥ २५ ॥

ततो यन्त्रणादनन्तरं वैद्योऽङ्गुष्ठविमुक्तया अङ्गुष्ठाविष्टब्धया मध्यमाङ्गुल्या ताडयेत् । स्पर्शेन चाङ्गुष्ठपीडनैर्वोत्थितां ज्ञात्वा ऊर्ध्वदण्डया सिराया

मध्ये न्यस्य वामहस्तेन गृहीतया कुठार्या सिरां लक्षयेत् । हाटकोऽप्याह—"सम्यगुत्थितां सिरां स्पर्शमात्रात् किञ्चिदुत्थितामङ्गुष्ठोदरनिष्पीडनैर्गूढबहलत्वक्छन्नामुन्नमितां ज्ञात्वा वामहस्तेनोर्ध्वदण्डं गृहीतया कुठार्या मध्ये सिरां लक्षयेत्" इति । तद्वच्च मोक्षयेद् यथैव लक्षयेत् तथैवैनां लक्षितां सिरां मध्यमाङ्गुल्या ताडयेत् । अङ्गुष्ठोदरेण वा निष्पीडयेदिति अङ्गुष्ठेन । नासिकामग्रे उन्नमय्य उपनासिकां सिरां व्रीहिमुखेन विध्येत् । अरुणदत्तस्त्वाह—"तद्वच्च मोक्षयेत् यथैव लक्षयेत् तथैवेत्यर्थः" इति । ताडयन्नित्यादि । व्रीहिमुखेन पुनस्ताडयन् व्यथयन् तथाङ्गुष्ठादिना पीडयन् एनां कुठारिकाविषयां सिरां विध्येत् । ननु, कुठारिकाविषये कथं व्रीहिवक्त्रस्य प्रयोगः । यतः "अपवादविषयं परिहृत्योत्सर्गाः प्रवर्तन्ते" इति न्यायः । व्रीहिवक्त्रस्य सामान्येन प्रयोगोऽनुज्ञातः । तथा चाह—

'व्रीहिवक्त्रं प्रयोज्यं च तत्सिरोदरयोर्व्यधे' ॥ इति ॥

कुठार्याः पुनः विशेषोऽभिहितः । "तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिराम्" इति । तस्मादयुक्तमेतत् । अत्रोच्यते ज्ञापकम् । कुठारिकाविषये व्रीहिवक्त्रस्य प्रयोगो न्याय्य एव । यदयमाचार्यो वक्ष्यति—

"मांसले निक्षिपेद् देशे व्रीह्यास्यं व्रीहिमात्रकम्" ॥ इति ॥

अनेन हि वचनेन ग्रन्थकार इदं प्रत्यपादयत् । बहुमांसे शरीरावयवे व्रीहिमुखं व्रीहिमात्रं निक्षेप्यम् । अन्यत्र त्वाशयानुरोधेन व्रीहिवक्त्रस्य प्रयोगः कार्य इति । अनेनैवाभिप्रायेण शास्त्रकृता 'प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये । मात्रच् वक्तव्यः' इत्यनेन मात्रकमिति कृतम् । अन्यथा स्पष्टं कृत्वा 'व्रीहिप्रमाणं व्रीह्यास्यं मांसले निक्षिपेद् व्यधे' इति पाठं कुर्यात् । तस्माद् युक्तमुक्तं व्रीहिमुखं कुठारिकाविषयेऽपि प्रयोज्यम्' इति । अन्ये त्वेवं वदन्ति—"कुठार्या वेधप्रकारे प्रोच्यमाने लाघविकः सन् ग्रन्थकारो व्रीहिमुखवेधप्रकारमपि प्रोक्तवान् इति । अङ्गुष्ठेत्यादि । अग्रे नासिकां अग्रे नासिका । "सप्तमी—" (२-१-४०) इति योगविभागात् समासः । "अग्रविषयां नासिकामङ्गुष्ठेनोन्नमय्य ततो व्रीहिमुखेन उपनासिकां नासिकासन्नदेशस्थां सिरां विध्येत्" इत्यरुणदत्तोक्तिः ॥ २३—२५ ॥

अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ।
यन्त्रयेत्स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे ॥ २६ ॥
पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ।
कुक्षेरारभ्य मृदिते विध्येद्बद्धोर्ध्वपट्टके ॥ २७ ॥

अभ्युन्नतेत्यादि । आभिमुख्येनोन्नता उपरि तालुदेशं नीता तथा-विशेषेण दन्तैर्दष्टा अग्रे जिह्वा येनासौ अभ्युन्नतविदष्टाग्रजिह्वः । तस्याधः प्रकृतत्वाज्जिह्वाया एवाधस्तात् तदाश्रयां सिरां विध्येत् । तदित्यनेन जिह्वाधः परामृश्यते । जिह्वाध आश्रयो यस्याः सिरायास्ताम् । हाटकस्त्वाह— "जिह्वास्यदष्टाग्रस्य ऊर्ध्वमुत्क्षिप्य गलेरितस्याधस्तात् तदाश्रयां जिह्वाश्रयां सिरां व्रीहिमुखेन विध्येत्" इति । ग्रीवाश्रितानां सिराणां व्यधे स्तनयो-रूर्ध्वं यन्त्रयेत् वाससा वेष्टयेत् । पाषाणगर्भौ हस्तौ यस्य नरस्य तस्य पाषाणगर्भहस्तस्य हस्ततलयोः स्थितपाषाणस्येत्यर्थः । भुजे जानुस्थे जानु-पृष्ठस्थिते प्रसृते प्रसारिते सति । अत्र भुज इत्येकवचनमविवक्षितं, द्वावपि भुजौ गृह्येते । कुक्षेरारभ्य यावद्ग्रीवा तावन्मृदिते पीडिते तस्मिन् ग्रीवा-श्रितसिराव्यधार्हे अङ्गे । तथा बद्धः ऊर्ध्वं पट्टको यस्मिन् तस्मिन् विध्येत् । प्रकृतत्वात् सिरां विध्येदिति ॥ २६—२७ ॥

हस्तयोः सिराविधिं मूते—

विध्येद्धस्तसिरां बाहावनाकुञ्चितकूर्परे ।
बध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणम् ॥ २८ ॥
ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ।
विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् ॥ २९ ॥
प्रहृष्टे मेहने जङ्घासिरां जानुन्यकुञ्चिते ।
पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ॥ ३० ॥
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ।
द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः ॥ ३१ ॥
बध्वा विध्येत्सिरामित्थमनुक्तेष्वपि कल्पयेत् ।
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित् ॥ ३२ ॥

हस्तसिरां विध्येत् । कथं, बाहौ करे अनाकुञ्चितकूर्परे अनाकुञ्चितः प्रसारितः कूर्परो यस्य बाहोस्तस्मिन् । तथा सुखोपविष्टस्य सुखासीनस्य ।

तथा मुष्टिं बध्वा। किं भूतम्, अङ्गुष्ठगर्भिणं गूढाङ्गुष्ठमुष्टिं निबध्येत्यर्थः। तथा वेध्यप्रदेशाद् वेध्यस्थानाद् ऊर्ध्वमुपरि चतुरङ्गुले चतुरङ्गुलपरिमाणे स्थाने पट्टिकां प्लोताद्यन्यतमां बध्वा विध्येत्। मुष्टिशब्दस्योभयलिङ्गत्वाद् गर्भिणीमिति वा पाठः। चशब्दाद् बध्वेत्यनुवर्तते। ननु 'बद्धोर्ध्वपट्टके' इति प्रोक्तत्वात् पुनः पट्टिकाबन्धविधानं पुनरुक्तमिति चेन्न। पूर्वत्र सामान्येन विधानम्। अत्र हस्तसिरावेधे वस्त्रपट्टबन्धश्चतुरङ्गुलपरिमाणे कर्तव्य इति विशेषाभिधानान्न पुनरुक्तिः। बाहुभ्यामालम्बमानस्यावलम्ब्यं वस्तु भुजाभ्यामालम्बतः पार्श्वयोः सिरां विध्येत्। हाटकोऽपि—"बाहुभ्यां वृक्षशाखादिकमवलम्बमानस्य पार्श्वसिरां विध्येत्" इत्याह। मेहने मेढ्रे प्रहृष्टे स्तब्धे सति तदाश्रितां सिरां विध्येत्। जानुन्यकुञ्चिते स्पष्टे स्थिते सति जङ्घायां सिरां विध्येत्। "पादे त्वित्यादिना पादसिराव्यधविधिः" इत्यरुणदत्तः। सुखं कृत्वा भूम्यादिदेशे स्थिते पादे सति पादसिरां विध्येत्। हाटकोऽपि—"भूम्यामेकपादे सुस्थिते" इत्याह। तथा जानुसन्धेरधस्तादागुल्फं गुल्फं यावत्कराभ्यां गाढं कृत्वा निपीडिते सति तस्य चरणस्योपरि द्वितीये चरणे ईषत्कुञ्चिते कृत्वा आरूढे सति हस्तवदिति वेध्यस्थानादुपरि चतुरङ्गुले पट्टिकां बध्वा सिरां विध्येत्। 'जङ्घासिराम्'। इत्यादिना पादसिरामित्यन्ये। विश्वचीगृध्रस्योरपथ्यां चान्यथा दर्शनाद् जङ्घेत्यादिना पादसिरैव प्रोच्यत इति मन्यामहे। कुत्र दृष्टमिति चेत् एवमुक्तं तन्त्रान्तरे—"गृध्रसीविश्वच्योराकुञ्चितजानुकूर्परस्य, श्रोणिपृष्ठस्कन्धेषून्नामितपृष्ठस्यावाक्शिरस्कोपविष्टस्य, स्फूर्जितपृष्ठस्य विध्येत्। उदरोरसोः प्रसारितशिरस्कस्योन्नामितशिरस्कस्य स्फूर्जितदेहस्य बाहुभ्यामवलम्बमानस्य पार्श्वयोः अवनामितमेढ्रस्य मेढ्रमुन्नाम्य विदष्टजिह्वस्याधो जिह्वायाः अतिव्यात्ताननस्य ताळुनि दन्तमूले च" इत्यादि। अत्रारुणदत्तवचनमेव विपश्चिन्मनःप्रसादकरमिति केचित्। यतो जानुशब्देन जङ्घा न प्रोच्यते। तथैव पादावयवभूतया जङ्घयापि प्रपदादयो न प्रोच्यन्ते। तस्माज्जङ्घासिरेत्युक्ते गृध्रसीविश्वच्यादिषु वेध्याः सिराः प्रोच्यन्ते। पादे तु सुस्थित इत्यादिना श्लीपदादिषु पाददाहादिषु वेध्याः प्रोच्यन्त इति। नाङ्घ्रिचरणपादाः परस्परवाचकाश्चेति। यत्तूक्तं समानतन्त्रविरोध इति, तदपि प्रायशो न दूषकम्। यतोऽवनामितमेढ्रस्य मेढ्र इति शास्त्रान्तरे प्रोक्तम्। प्रहृष्टे मेहने इत्यत्र प्रोक्तम्। तस्माज्जानुन्यकुञ्चिते यथास्थिते सति सिराः प्रदर्श्यन्ते

तथा स्थिते सतीत्येतावदेवात्र सङ्कल्प्यम् । अत्रास्मद्गुरवस्त्वेवमब्रुवन् —'पाषाणगर्भहस्तस्य पुरुषस्य भुजे कुक्षेरारभ्य मृदिते बद्धोर्ध्वपट्टके सिरां विध्येत् । अत्र भुजशब्देन कूर्परमनुमीयते । कुक्षेरारभ्य मृदित इति प्रोक्तत्वात् । यतो वक्ष्यति सूत्रकारः प्लीहोदरे — "वामबाहौ तु मोक्तव्या कूर्पराभ्यन्तरे सिराम्" इति । विध्येद्धस्तसिरामित्यादिना प्रकोष्ठादिसिरायन्त्रणविधिरिति । जङ्घा-सिराभ्यामित्यादिना बध्वा विध्येत् सिरामित्यन्तेन जङ्घासिरायन्त्रणविधिः' इति । इत्थमनेन प्रकारेण यन्त्रलक्षणोद्देशेनानुक्तमपि यन्त्रं तदुद्देशमाहात्म्यात् क्रिया-सौकर्यार्थं तेषु तेषु अनुक्तेषु प्रपदादिषु प्रदेशेषु शरीरावयवेषु स्वबुध्या तत्तद् यन्त्रं यन्त्रणां यथायोगं कल्पयेत् उपायज्ञो वैद्यः । प्रदेशानुसारेण यन्त्र-येदित्यर्थः । कुत्रचिदूर्ध्वबन्धनं कुत्रचिदधोबन्धनं कुत्रचिदुचितस्थाने बन्धनं कुत्रचिच्चतुरङ्गुले कुत्रचिदुन्नमनं कुत्रचिद् विनमनं कुत्रचिदायमनं इत्यादि । आकुञ्चनप्रसारणादयोऽप्येवमेव परिकल्पनीयाः । सर्वथोभयत्र बन्धनं क्वचिदपि न दृष्टपूर्वं श्रुतपूर्वं च । यत्त्वरुणदत्तहृद्याकाराभ्यां प्रोक्तं, तद् बुधैश्चिन्त्यम् ॥ २८—३२ ॥

प्रदेशविशेषेण शस्त्रविशेषेणोपयोगं दर्शयति—

मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।
यवार्धमस्थ्नामुपरि सिरां विध्यन्कुठारिकाम् ॥ ३३ ॥

मांसल इत्यादि । मांसले शरीरावयवे व्रीहिमुखं शस्त्रं व्रीहिप्रमाणं निक्षिपेत् । अस्थ्नामुपरि यवार्धमात्रं कुठारिकां निक्षिपेत् । किं कुर्वन्, सिरां विध्यन् ।

'यवार्धमस्थ्नामुपरि सिरां विध्येत् कुठारया' ।

इति वा पाठः । यवार्धमात्रमस्थ्नामुपरि सिरां कुठारिकया विध्येत् । सर्वत्र चानुत्तानमनवगाढमृज्वसङ्कीर्णं मर्माद्यनुपघाति सर्वसिरामध्ये शस्त्रमाशु पातयेत् ॥

सम्यग् योगादिलक्षणमाह —

सम्यग्विद्धा स्रवेद्धारां यन्त्रे मुक्ते तु न स्रवेत् ।
अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनैः ॥ ३४ ॥

सशब्दमतिविद्धा तु स्रवेद् दुःखेन धार्यते ।
भीमूर्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृप्तयः ॥ ३५ ॥

क्षामत्ववेगितास्वेदा रक्तस्यास्रुतिहेतवः ।

सम्यग् विद्धेत्यादि । सम्यग् विद्धा सिरा धारां स्रवेत् । यन्त्रे मुक्ते सति न स्रवेत् । 'सम्यग्विद्धे स्रवेद्धाराम्' इति वा पाठः । 'सम्यग् विद्धे सति धारां स्रवेत्' इत्यरुणदत्तः । अल्पं विद्धा सती सिरा स्तोककालं वहति । अल्पं विद्धे सतीति वा । दुर्विद्धा असम्यग्विद्धा सिरा तैलयुक्तैश्चूर्णनैः चूर्णनिक्षेपैः स्रवेत् । 'दुर्विद्धा तैलचूर्णनैरल्पकालमल्पं वहति' इत्येके । दुर्वेधास्तु बहुधा जायन्ते । वैद्यदोषाच्छस्त्रदोषादातुरदोषाद् यन्त्रदोषात् कालदोषाच्च । तत्र प्रतीकार ऊह्यः । उक्तं च भालुकिना—

"अदेशे वा सिरा विद्धा रुग्णा वा मारुतेन या ।
शस्त्रेण वाणुना विद्धा विद्धा वाप्यप्रमाणतः ॥
मांसावृता वा सूक्ष्मा वा प्रच्छन्ना वापि मेदसा ।
अतिबद्धाप्यबद्धा वा सिरा रक्तं न मुञ्चति ॥
अदेशविद्धां विज्ञाय देशे विध्येत्सिरां भिषक् ।
विद्धां सूक्ष्मेण शस्त्रेण प्रमाणस्थेन वेधयेत् ॥
अप्रमाणेन या विद्धा तां प्रमाणेन वेधयेत् ।
मांसावृतायाः शस्त्रेण वेधान्मांसं विनिर्हरेत् ॥
सूक्ष्मां विद्धां तु विज्ञाय विध्येत् स्थूलतरां भिषक् ।
ज्ञात्वा तु मेदःप्रच्छन्नां लवणेनानुसारयेत् ॥
अतिविद्धां प्रशिथिलां कुर्यादेवमसृक् स्रवेत् ।
युक्त्या त्वबद्धां बध्नीयात् तथा स्रवति शोणितम् ॥"

इति । अतिविद्धा तु सिरा सशब्दं स्रवेत् । दुःखेन कृच्छ्रेण धार्यते । भीमूर्च्छादयो रक्तस्यास्रवणहेतवः रक्तस्तम्भनाः । मूर्च्छा मोहस्तमसीव प्रवेशः । यन्त्रशैथिल्यमगाढं कृत्वा यन्त्रणम् । तथा कुण्ठशस्त्रम् । तथा अतितृप्तिरतिसौहित्यमतिमात्राशितत्वमित्यर्थः । क्षामत्वं दुर्बलत्वम् । वेगिता सञ्जातवेगत्वम् । 'मूत्रितोच्चारितत्वं वेगित्वम्' इति हाटकः । अस्वेदः स्वेदायोगः । सम्यग् विद्धेऽप्येते रुधिरस्यास्रुतिहेतवः । ततो रक्तस्रुतावेते परिहार्याः ॥

पूर्वोक्तं तैलचूर्णमाह—

असम्यगस्रे स्रवति वेल्लव्योपनिशानतैः ॥ ३६ ॥

सागारधूमलवणतैलैर्दिह्यात्सिरामुखम् ।
सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ ३७ ॥

असम्यगस्र इत्यादि । असम्यगस्रे स्रवति विडङ्गादिभिः सिरावदनं दिह्यात् प्रलेपयेत् अवचूर्णयेत् । एवं साधु वहति । सम्यक् प्रवृत्तेऽपि रक्ते कफानिलोपशमनरक्ताविच्छेदनार्थं सिरामुखं कोष्णाभ्यां तैललवणाभ्यां दिह्यात् । उष्णलवणतैलबिन्दुभिः सिरामुखं सिञ्चेदित्यर्थः ॥ ३७ ॥

अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ।
सम्यक्स्रुत्य स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ ३८ ॥

यन्त्रं विमुच्य मूर्छायां वीजिते व्यजनैः पुनः ।
स्रावयेन्मूर्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ ३९ ॥

अग्र इत्यादि । दुष्टादुष्टरक्तादेकलोलीभूतादग्रे प्रथमं दुष्टास्रं स्रवति कुसुम्भादिव पीतिका यथा रागपीतिकामिश्रीभूतात् कुसुम्भादग्रे पीतिका स्रवति तद्वदिति ।

अग्रग्रहणात् पश्चाददुष्टमपि रक्तं स्रवतीत्याशङ्क्याह—

सम्यक् यथावत् प्रस्रुत्य स्वयं यत्नेन विना तिष्ठेत् न स्रवेत् । शुद्धं तदिति ज्ञात्वा नाहरेत् न स्रावयेत् , जीवितहेतुत्वात् । सम्यग् रक्ते स्रवति मूर्छायां सत्यां यन्त्रं विमुच्य व्यजनैर्वीजिते समाश्वस्ते नरे सति पुनरस्रं स्रावयेत् । पुनरपि मूर्छत्यातुरे अशुद्धमपि रक्तं तस्मिन्नहनि न स्रावयेत् । तर्हि कदा स्रावयेदित्याह । अपरेद्युरन्यस्मिन् दिने त्र्यहेऽपि वा तृतीयेऽह्नि वा स्रावयेत् ॥ ३८, ३९ ॥

वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ।
पित्तात्पीतासितं विस्रमस्कन्द्यौष्ण्यात्सचन्द्रकम् ॥ ४० ॥

कफात्स्निग्धमसृक्पांडु तंतुमत्पिच्छिलं घनम् ।
संसृष्टलिङ्गं संसर्गात् त्रिदोषं मलिनाविलम् ॥ ४१ ॥

वातादित्यादि । वाताद् रक्तं श्यावादिलक्षणं स्यात् । अस्कन्दि अस्त्यानम् । उष्णत्वात् सचन्द्रकं च । चन्द्रकं बर्हाभम् । कफात् स्निग्धादि

लक्षणं रक्तं स्यात् । संसर्गाद् दोषाणां संसृष्टलक्षणं स्यात् । त्रिदोषं रक्तं मलिनं कलुषम् । तथा आविलमत्यन्तघनम् । एतच्च दोषत्रयसंसर्गलक्षणादधिकं लक्षणं मन्तव्यम् । न स्वेतावदेव त्रिदोषलक्षणम् ॥ ४०-४१ ॥

यावच्छुद्धरक्तदर्शनं तावत्स्राव्यं न वेत्याह —

अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात्स्रावयेत्परम् ।
अतिस्रुतौ हि मृत्युः स्याद् दारुणा वा चलामयाः ॥ ४२ ॥
तत्राऽभ्यङ्गरसक्षीररक्तपानानि भेषजम् ।
स्रुते रक्ते शनैर्यन्त्रमपनीयं हिमाम्बुना ॥ ४३ ॥
प्रक्षाल्य तैलप्लोतात्क्तं बन्धनीयं सिरामुखम् ।
अशुद्धं स्रावयेद् भूयः सायमह्न्यपरेऽपि वा ॥ ४४ ॥
स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम् ।

अशुद्धमित्यादि । अशुद्धमस्रं बलवतोऽपि किं पुनरबलिनः प्रस्थात् परमधिकं न स्रावयेत् । कस्मादित्याह—अतिस्रावे हि रक्तस्य मृत्युः स्यात् । दारुणाः कृच्छ्रा वातरोगा अपतानकादयः स्युः । तत्र रक्तातिस्रुतावभ्यङ्गादीनि भेषजम् । प्रस्थात् परमिति सार्धत्रयोदशपलं प्रस्थं बोध्यम् । रुधिरे प्रस्थशब्दो न षोडशपलवचनः । उक्तं च तन्त्रान्तरे—

"वमने च विरेके च तथा शोणितमोक्षणे ।
सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" ॥ इति ॥

स्रुते रक्ते सति यन्त्रं शनैर्न सहसा अपनीय विमुच्य सिरामुखं शीतोदकेन प्रक्षाल्य तैलप्लोतं तैलयुक्तं चेलखण्डनं तेनाक्तं पश्चात् बन्धनीयं बध्नीयात् । प्लोतम्(ഉണ്ണിമറി) अशुद्धं तु रक्तं वातादिदुष्टरुधिरलक्षणैर्दुष्टं ज्ञात्वा भूयः पुनः स्रावयेत् । कदा, सायमपराह्णे तस्मिन्नेव दिने अथवा अपरेऽह्नि वा द्वितीयेऽहनि । अथवा स्नेहेनोपस्कृतो भावितो देहो यस्य तस्य । भृशं दूषितमतिशयेन दुष्टं पक्षादूर्ध्वं पुनः स्रावयेत् ॥ ४२-४४ ॥

एवं दुष्टं रक्तं यथायोगं सायमह्न्यपरे वा पक्षादूर्ध्वं वा प्रस्थपरिमाणमेव स्रावयेत् न ततोऽधिकमिति रक्तस्रुतौ क्रमः इत्युक्तवान् रक्षणार्थं रक्तं स्तौति ॥

किञ्चिद्धिशेषे दुष्टास्रे नैव रोगोऽतिवर्तते ॥ ४५ ॥
सशेषमप्यतो धार्यं नास्यातिस्रुतिमाचरेत् ।

किञ्चिदित्यादि । अरुणदत्तोऽपि— "किञ्चिच्छेषं दुष्टं रक्तं स्थापयेदुत सर्वं स्रावयेदिति संशयापनोदायेदमाह" इत्याह । हि यस्मात् किञ्चिच्छेषे दुष्टरक्ते नैव रोगो दुष्टरक्तोद्भवो व्याधिरतिवर्तते क्रियापथमतिक्रम्य मार्गान्तरमसौ नायाति अतो दुष्टमपि रक्तं सशेषं धार्यम् । नास्य रक्तस्यातिस्रुतिमाचरेत् प्राणायतनत्वात् । सौश्रुतेऽप्यध्यगीष्ट—

"सशेषं दुष्टरुधिरमपि कुर्याद् विचक्षणः ।
न चातिप्रस्रुतिं कुर्याच्छेषं संशमनैर्जयेत् " ॥ इति ॥

अथ किञ्चिच्छेषं रक्तमुपेक्षणीयं उत प्रतिक्रिया तत्र काचित् कार्येत्याह—

हरेच्छृङ्गादिभिः शेषं प्रसादमथवा नयेत् ॥ ४६ ॥
शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः ।
दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ॥ ४७ ॥
रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत्क्रियाम् ।

हरेदित्यादि । स्रुतशेषं दुष्टरक्तं किञ्चित्कालेऽतीते शृङ्गालाबुघटिकादिभिः हरेत् न तु सिरया । अथवा शीतोपचारेण पित्तासृक्क्रियया शुद्ध्या च । "(शुद्ध्या)वमनविरेचनरूपया" 'वमनादिरूपया' इत्यरुणदत्तः । विशोषणेन लङ्घनरूपेण तद् दुष्टं रुधिरं प्रसादं नयेत् । कलुषतामपसृज्य तस्य प्रसन्नत्वमुपपादयेत् । किञ्चिद्दुष्टे रक्ते एवं कार्यम् । भृशदुष्टे स्निग्धे रक्ते मासमात्रं स्नेहादिभिरुपचर्य पुनश्च विध्येत् । पूर्वमेव बहु वा स्राव्यमाशुद्धरक्तदर्शनात् । आगमो हि—

"बलवत्यातुरे व्याधौ च दुष्टे च रक्ते महति चाशये बहु स्राव्यम् । एकस्मिन् वा विपरीते नावसेकेनापि रक्तं शुध्येत् । ततो विरमेत् । शुद्धरक्तदर्शनादूर्ध्वमवसेचनं महादोषः" इति । यदि पुनरस्य व्याधेरनुपशान्तिः स्यात् तमन्येनोपक्रमेण वाताद्यनुरोधेनोपक्रमेत् । कस्मात्, रक्तजस्यापि रोगस्य दोषपारतन्त्र्यात् । किञ्च रक्तस्यापि दोषपारतन्त्र्यात् यदा दोषाः स्वप्रमाणस्था रक्तं दूषयन्ति तदा तत्प्रतिद्वन्द्विभिः शीतोष्णादिभिर्दोषान् विकारांश्च निवर्त-

येत् । यदा पुनः रक्तमाश्रित्य दुष्टिं विकारं च कुर्वन्ति तदा रक्तस्रवणम् । यथा-स्थिमांसच्छेदः । ननु दुष्टरक्तस्य स्रवणं क्रियते तदानिलकोपो भावी । उच्यते । अतिमात्रोद्रिक्तं रक्तमन्तरेणावसेकं न शक्यमुच्छेत्तुम् । ततो न आत्वाबाधानिवृत्तिः । तदवसेकात् कुपितः पवनोऽन्येनोपक्रमेण शक्यः परिहर्तुमिति । न तु केवलं स्नुतशेषं दुष्टरुधिरं शीतोपचारादिभिः प्रसादयेत् । यावदनुद्रिक्तमप्रवृद्धमपि दुष्टं रुधिरमेवमनेनैव शीतोपचारादिना प्रसादयेत् । न तु तत्सिराव्यधादिना निर्हरेत् । अनुद्रिक्तरक्तनिर्हरणस्य सापायत्वात् । रक्ते त्वतिष्ठति स्थितिमलभमाने त्वरितमेव स्तम्भनीं वक्ष्यमाणां क्रियामाचरेत् कुर्यात् । रक्तस्य प्राणायतनत्वात् ॥

तदेव स्तम्भनमाह—

लोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ॥ ४८ ॥
मृत्कपालांजनक्षौममषीक्षीरित्वगङ्कुरैः ।
विचूर्णयेद्व्रणमुखं पद्मकादि हिमं पिबेत् ॥ ४९ ॥
तामेव वा सिरां विध्येद्व्यधात्तस्मादनन्तरम् ।
सिरामुखं च त्वरितं दहेत्तप्तशलाकया ॥ ५० ॥

लोध्रेत्यादि । लोध्रादिभिः सिराव्रणमुखमवचूर्णयेत् । पद्मकादि हिमं शीतकषायं पिबेत् । हाटकोऽपि —"पद्मकादिभिर्मथितकषायं पिबेत्" इत्याह । तामेव प्राग् विद्धां सिरां तस्मात् प्राग्व्यधादनन्तरमव्यवहितं विध्येत् । अथवा सिराद्वारं क्षिप्रं कृत्वा अग्निना तप्तया शलाकया दहेत । अग्निना दहनं सिरासङ्कोचेन रक्तस्थापनाय ॥ ४८-५० ॥

रक्तस्रावणादनन्तरं यद् विधेयं तदाह—

उन्मार्गगा यंत्रनिपीडनेन
स्वस्थानमायांति पुनर्न यावत् ।
दोषाः प्रदुष्टा रुधिरं प्रपन्ना-
स्तावद्धिताहारविहारभाक् स्यात् ॥ ५१ ॥

उन्मार्गगा इत्यादि । स्वमार्गादन्यमार्गगमनं उन्मार्गगमनं यन्त्रनिपीडनेनोन्मार्गगाः स्वमार्गमुल्लङ्घ्य मार्गान्तराश्रयणेनोत्पथं प्रतिपन्नाः दोषाः प्रदुष्टास्तथाविधा रक्तं प्रपन्नाः प्राप्ताः पुनर्यावत् स्वस्थानं नायान्ति स्वाश्रयं

न प्रतिपद्यन्ते तावद्धिताहारविहारभाक् स्याद् इति सम्बन्धः । हिताहारविहारी भजते इति 'भजो ण्विः'(३-२-६२) इति ण्विः ॥ ५१ ॥

हिताहारं वक्ति—

नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृ-
गग्निर्विशेषादिति रक्षणीयः ॥ ५२ ॥

रक्तेऽपनीते स्राविते ऽन्नपानं नात्युष्णशीतं हितम् । अत्युष्णं ह्यन्नपानं रक्तं प्रदूषयेत् । अतिशीतं त्वन्नपानमग्निं सादयेत् । तथा लघु स्वभावतो मात्रया संस्कारादिना वा । हाटकस्त्वाह—"रक्तेऽपनीतेऽत्युष्णमन्नमतिशीतं च पानं न हितम् । कुत इयमाशङ्का । उच्यते, आगमात् 'उष्णमश्नीयात्' इति ।

'यदाहारगुणैः पानं विपरीतम् ।'

इति च । अतोऽस्य विधेः प्राप्तस्य प्रकर्षवत्त्वमपवर्तयति । तथा हि—अत्युष्णत्वाद्धाहारस्य स्वस्थानाच्चलितं रक्तं दुष्टिं यायात् । किञ्च ऊष्मवतश्च धातोरसृजः क्षयादग्निमान्द्यमवश्यम्भावि । तस्मादग्निरक्षणार्थं नातिशीतं पानं लघुदीपनीयं चान्नमुपयोजयेत् । अर्थः रक्तस्य वह्निसंज्ञस्य पित्तस्य च रक्षणार्थमुष्णमशनं शीतं च पानमिष्यते । तथा लघुदीपनं चेति" इति । कुत एवंविधमन्नपानं हितमित्याह । तदेत्यादि । यस्मादस्मिन् काले शरीरमनवस्थितं चलितवृत्ति रक्तं यस्य तदेवंभूतं भवति । तच्चासृक् शरीरस्याधारः रक्तस्य च पित्तं पित्तस्य च वह्निः । तथा च वक्ष्यति "पित्तं वह्निः" इति । तस्माद् विशेषान्महता यत्नेन अग्निः नात्युष्णशीतादिनाहारेण रक्षितव्यः । पण्डितस्त्वाह—"तदा शरीरमनवस्थितासृक् अग्निर्विशेषादनवस्थितः तस्माद् रक्षितव्यः पुरुषः" इति ॥ ५२ ॥

कृतसिराव्यधस्य पुरुषस्योन्मार्गगामिनां दोषाणां स्वस्थानप्रतिपत्तौ कालो नावगम्यते न च निर्हृतदुष्टरक्तः पुरुषो लक्षणं विना ज्ञायत इति द्वयस्यापि परिज्ञानार्थमाह—

प्रसन्नवर्णेन्द्रियमिन्द्रियार्था-
निच्छन्तमव्याहतपक्तृवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं
विशुद्धरक्तं पुरुषं वदन्ति ॥ ५३ ॥

प्रसन्नेत्यादि । प्रसन्नानि वर्णश्च इन्द्रियाणि च यस्य तं प्रसन्नवर्णेन्द्रियम् । तथा इन्द्रियार्थान् शब्दादीन् स्वभावाभिप्रेतान् इच्छन्तमभिलषन्तम् । तथा अव्याहतः पक्तुर्वेगः सामर्थ्यं यस्य तम् । तथा सुखान्वितमारोग्योक्तप्रकृतिमापन्नम् । तथा पुष्टिबलाभ्यामुपपन्नं एवंविधं पुरुषं विशुद्धरक्तं वदन्त्याचार्याः । शरीरस्य विशुद्धरक्तस्य लक्षणमुक्तं 'मधुरं लवणम्' इत्यादिना विशुद्धलक्षणमभिहितमिति ॥ ५२ ॥

इति श्रीदासपण्डितविरचितायां हृदयबोधिकायां
सप्तविंशोऽध्यायः ॥

---

## अथ अष्टाविंशोऽध्यायः ।

---

### अथातः शल्याहरणविधिमध्यायं व्याख्यास्यामः ।

पूर्वाध्याये शल्यवर्मस्व रक्तस्य सकलशरीरव्यापिनोऽपि सिराव्यधाख्यो निर्हरणोपाय उक्तः । इदानीं प्रादेशिकस्य लोहादेः शल्यस्य लक्षणं निर्हरणोपायं च प्रदर्शयितुमध्यायारम्भः । इन्द्याकारोऽप्याह—

"दुष्टे रक्ते हि तच्छल्यं तस्योक्तो हरणे विधिः ।
शल्यस्य शरकुन्तादेर्निर्हृतिर्वर्ण्यतेऽधुना ॥"

इति । "दुष्टरक्तस्य शल्यत्वात् तदनन्तरं शल्याहरणविधिमाह" इति पाठ्यकारः । शल्यं हिंसात्मकम् । उक्तं च—

"यत्किञ्चिदाबाधकरं तच्छल्यमिति कथ्यते ।"

इति । 'शल हिंसायाम्' इति धातोः निष्पन्नं रूपं शल्यमिति । तस्माल्लोहमयेष्वेव शल्यव्यवहारोऽत्र प्राचुर्येण निर्दिष्टः । विहिंसनार्थोत्पन्नत्वाल्लोहस्य । एवमनुश्रूयते हि—"दानवानां हिंसनार्थं ब्रह्मणा सृष्टं लोहम्" इति ॥

### वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पञ्चधा गतिः ।

वक्रेत्यादि । सुश्रुते चोक्तं—"शल आशुगमने" इति धातुस्तस्य शल्यमिति रूपं भवति । सर्वशरीराबाधकरमिहोपदिश्यते शल्यमिति । तद् द्विविधं शारीरमागन्तु चेति । शारीरा नखदन्तरोमाणि । धातवो मला दोषाश्च । आगन्तु शल्येष्विहाधिकारः लोहवेणुवृक्षशृङ्गास्थिमयेषु लोहेष्वपि दूरानुप्रवेशाच्छर एवाधिकृतः । स द्विविधः कर्णवान् श्लक्ष्णश्च । विविधवृक्षपत्रमुखाः"

इत्यादि । "वक्रादिभेदभिन्नानां शल्यानां पञ्च प्रकारा गतिर्गमनम् । कदाचिच्छल्यानि वक्रं कृत्वा तिर्यग्वा ऊर्ध्वं वा अधो वा गच्छन्ति । कदाचिदृजु कृत्वा । एवमुभयथा तिर्यगूर्ध्वाधोभेदेन गमनाच्छल्यानां पञ्चधा गतिः" इत्यरुणदत्तोक्तिः । इत्याकारोऽप्येनमेवार्थं हृदि कृत्य सङ्ग्रहाविरोधेन व्याख्यां कर्तुकामः पद्येन प्रोवाच—

"तिर्यगूर्ध्वमधश्चेति शल्यानां त्रिविधा गतिः ।
प्रत्येकमृजुवक्रत्वाद् द्वैविध्यमपि युज्यते ॥
अतः शल्यगतेः पञ्चविधत्वमुपपद्यते ।"

इति । एवं प्रोक्ते षोढा गतिर्भवतीति मन्यमानास्त्वन्ये वक्रादिभेदेन पञ्चधा गतिं ब्रुवते । विशिष्टस्यावयवैः कुटिलीभवनं कुटिला गतिः । ऋजु कृत्वा यत् प्रवेशनं ऋज्वी गतिः । अङ्गे पार्श्वगमनं तिर्यग्गतिः । उत्तमाङ्गाभिमुखं ऊर्ध्वा गतिः । पादाभिमुखा गतिरधोगतिरिति । पाठ्यकारस्त्वाह— "अत्र सङ्ख्याग्रहणं परमतानिरासार्थम् । पतमानानां शल्यानां पञ्चधा गतिमप्याचक्षते तिर्यगूर्ध्वाधःशल्यानां गतिः पञ्चधा वक्रर्जुभेदेन सह' इति । हाटकोऽपि "वक्रादिभेदेन शल्यानां पञ्चप्रकारा गतिः" इत्याह । वचनं हि— "सर्वशल्यानां तु शरीरगतानां पञ्चविधो गतिविशेषो भवति । तद्यथा— ऊर्ध्वमधस्तिर्यग्वक्रमृजुरिति । ते तु वेगक्षयात् प्रतिघाता त्वगादिषु व्रणवस्तुष्वेवावतिष्ठन्ते । धमनिस्रोतोऽस्थिपेशीविवरप्रभृतिषु शरीरावयवेषु वा' इति । त्रिविधैव गतिः शल्यानां तिर्यगूर्ध्वाधोभेदेन । एवं शरीरे त्रिधा गच्छतां शल्यानां वक्रमात्मानं कृत्वा ऋजु वा कृत्वा गमनं सम्भवतीति उक्तं पञ्चधेति । अस्माकं तु सर्वथापि व्याख्यायमाने सदोषता प्रतीयत इति मौनमेव शरणमित्यस्मद्गुरवः ।

सशल्यं कथं वेद्यमित्याह—

श्यामं शोफरुजावन्तं स्रवन्तं शोणितं बहुः ॥ १ ॥
अभ्युद्गतं बुद्बुदवत् पिटकोपचितं व्रणम् ।
मृदुमांसं विजानीयादन्तःशल्यं समासतः ॥ २ ॥

श्याममित्यादि । एवंविधं व्रणं अन्तःशल्यं समासतः संक्षेपेण जानीयात् । श्यामं श्यामवर्णं तथा शोफरुजावन्तं तथा बहुशोणितं

१. 'मुहुः' इति मुद्रिताष्टाङ्गहृदयपाठः.

स्रवन्तं तथा अभ्युद्गतमाभिमुख्येनोद्गतोष्ठम् । हाटकस्तु—'अभ्युन्नतम्' इति पठन्ति अभ्युद्गतोष्ठमिति वदन् । तथा बुद्बुदेन तुल्यं वर्तत इति बुद्बुदवत् तथा पिटकैरुपचितं व्याप्तं तथा कोमलमांसं च ॥ २ ॥

इति सामान्येनोत्थितस्य शल्यस्य लक्षणमभिधाय त्वगादिगतस्य शल्यस्य लक्षणान्याह—

विशेषात्त्वग्गते शल्ये विवर्णः कठिनायतः ।
शोफो भवति मांसस्थे चोषः शोफो विवर्धते ॥ ३ ॥

पीडनाक्षमता पाकः शल्यमार्गो न रोहति ।
पेश्यन्तरगते मांसप्राप्तवच्छ्वयथुं विना ॥ ४ ॥

आक्षेपः स्नायुजालस्य संरम्भस्तम्भवेदनाः ।
स्नायुगे दुर्हरं चैतत् सिराध्मानं सिराश्रिते ॥ ५ ॥

स्वकर्मगुणहानिः स्यात्स्रोतसां स्रोतसि स्थिते ।
धमनीस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत् ॥ ६ ॥

निर्याति शब्दवान् स्याच्च हृल्लासः साङ्गवेदनः ।
सङ्घर्षो बलवानास्थिसन्धिप्राप्तेऽस्थिपूर्णता ॥ ७ ॥

नैकरूपा रुजोऽस्थिस्थे शोफस्तद्वच्च सन्धिगे ।
चेष्टानिवृत्तिश्च भवेदाटोपः कोष्ठसंश्रिते ॥ ८ ॥

आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने ।
विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥ ९ ॥

विशेषादित्यादि । पूर्वोक्तं सामान्यलक्षणमन्तःशल्यस्य सर्वत्र विद्यते । विशेषेण पुनस्त्वग्गते शल्ये शोफो भवति । कीदृशः, विवर्णः कठिनो दीर्घश्च । मांसगते शल्ये ओषश्च स्यात् । सर्वाङ्गीणस्तीव्रोऽरतिमान् दाह ओष उच्यते इत्याहुः । हाटकस्त्वाह—"मांसगते शल्ये चोषः स्यात् । सर्वाङ्गीणस्तीव्रोऽरतिमान् दाहश्चोषः" । "चोषोऽसह्यमानसंरम्भेण चूषणप्रतीतिः" इति पाठ्यकारः । तथा शोफो विवर्धते । तथा पीडनस्याक्षमत्वं पाकश्च । शल्यमार्गो न रोहति रोहं न याति । येन शल्यं प्रविष्टं तस्यानुपसंरोहस्तथावस्थानम् । पेशीमध्यगते शल्ये मांसगततुल्यं लक्षणं श्वयथुं वर्जयित्वा । मांसावयवविशेषो दीर्घतन्त्वाकृतिः पेशीत्युच्यते । पेशी (...)

अस्थिपेश्योरन्तरं प्रायश: पेश्यन्तरम् । स्नायुगते शल्ये स्नायुजालस्याक्षेपाद्याः स्युः । स्नायु (ഞെരമ്പു്) । आक्षेप आकर्षणम् । 'संरम्भः क्षोभः' इत्यरुणदत्तः । 'आवेगः' इति हाटकः । 'असह्यवेदना' इति पाठ्यकारः । 'शोफः' इति केचित् । स्तम्भः स्तब्धता (മിന്നപ്പോലെയുള്ളിക്ക) वेदना शूलम् । स्नावग इति वा पाठः । स्नाव उभयस्नायुसंश्लेषो रज्वाकारः (വീണ ഞരമ്പു്) एतच्च स्नावगतं शल्यं दुःखेन निर्हर्तुं शक्यते । सिराश्रिते शल्ये सिराणामाध्मानमानाहः स्यात् । स्रोतोगते शल्ये स्रोतसां नाडीनां स्वकर्मगुणयोर्हानिः स्यात् । यानि रक्तादिवहनादीनि कर्माणि गुणाश्च ये शरीरे वक्ष्यमाणाः तेषां हानिः अथवा यथा कण्ठस्रोतासि स्थिते शल्ये पानाभ्यवहारनिरोधो जायते। गुणोऽपि यस्तस्य पुष्ट्यादिलक्षणः सोऽप्यस्य हीयते । मूत्रस्रोतोगते शल्ये मूत्रस्याप्रवर्तनमिति तत्कर्महानिः । गुणोऽपि योऽनिर्वेदनत्वादिलक्षणः सोऽप्यस्य हीयते । इत्येवमन्येषां स्वकर्मगुणहानिर्व्याख्येया । पद्यं च—

"यथा कण्ठगते शल्ये पानादीनां निरोधनम् ।
तेन देहस्य पुष्ट्यादिर्गुणो नैवोपजायते ॥

मूत्रस्रोतोगते शल्ये न च मूत्रस्य निर्गमः ।
तदभावाच्च न सुखं लाघवादिश्च नो भवेत् ॥

एवं कर्मगुणौ चिन्त्यौ स्रोतसां स्रोतसि स्थिते ॥"

इति । अथवा स्वकर्मणां गुणहानिः स्वकर्मगुणहानिः । गुण इति संपदपेक्ष इति वामदेवः । हृद्याकारोऽप्येनमेवार्थं प्राह— "स्रोतसि वाय्वादौ शल्यवति स्वकर्मगुणहानिः । स्वीयं कर्म स्वकर्म तस्य कर्मणो गुणः संपत्तिः तस्य कर्मगुणस्य हानिर्नाशः । यथापुरं स्वकर्माणि कर्तुं स्रोतांसि न शक्नुवन्तीत्यर्थः" इति । पाठ्यकारोऽपि "स्रोतांसि रसवहा नाड्यः (കുഴൽ)" इत्याह । धमनीस्थे शल्ये वायुर्लोहितं सफेनं प्रेरयेत् । तथा सशब्दो मरुन्निर्याति । हृल्लासश्चाङ्गपीडायुक्तः स्यात् । धमन्योऽतिस्थूलाः (വെളുത്ത ഞരമ്പു്) हृल्लासम् (ഓക്കാന കലിക്ക) । अस्थिसन्धिप्राप्ते शल्ये बलवानस्थिसङ्घर्षः क्षोभः स्यात् । अस्थिपूर्णता च । सङ्घर्षः (കിരുകിരുക്ക) अस्थिस्थे शल्ये नैकरूपा नानाविधा रुजा भग्नरुङ्मृदितपीडितापनुन्नप्रायाः स्युः शोफश्च । तद्वच्च सन्धिगे शरीरसन्धिगते शल्ये अस्थिस्थेन शल्येन तुल्यं लक्षणं भवति । तथा

अस्थिवच्छेष्टाया व्यापारस्य प्रसारणादेर्निवृत्तिरुपरमश्च भवति । पूर्वमस्थिगतस्य शल्यस्य लक्षणमुक्तम् । अधुना तूक्तं शरीरसन्धिगतलक्षणम् । अन्यो हि शरीरसन्धिः । तथा च राजयक्ष्मानिदाने वक्ष्यति— "शरीरसन्धीनाविश्य" इति । कोष्ठसंश्रिते उदरगते शल्ये आटोपः क्षोभः स्यात् । आटोपः (ഉദ ഉദരം) । तथा आनाहो जठराध्मानम् (വയറുവീർക്കുക) । तथा व्रणमुखे अन्नशकृन्मूत्रदर्शनं स्यात् । स्थानविशेषेण यथासम्भवं व्रणमुखे मूत्रादिदर्शनं भवतीत्यर्थः । व्रणाननम् (പുണ്ണുവായ്) । मर्मगतं शल्यं मर्मविद्धोपलक्षणैर्विद्यात् । मर्मविद्धस्य च लक्षणं सङ्ग्रहे कथितम् । यथा—

"देहप्रसुप्तिर्गुरुता संमोहः शीतकामता ।
स्वेदो मूर्च्छा वमिः श्वासो मर्मविद्धस्य लक्षणम् ॥"

इति ॥ ३–९ ॥

यथास्वं च परिस्रावैस्त्वगादिषु विभावयेत् ।
रुह्यते शुद्धदेहानामनुलोमस्थितं तु तत् ॥ १० ॥

यथास्वमित्यादि । न केवलं सामान्यलक्षणेन श्यामादिना तथा विशेषलक्षणेन त्वगादिस्थलक्षणेन त्वगादिगतं शल्यं लक्षयेत् । यावद्यथास्वं परिस्रावैश्च तथारूपैस्त्वगादीनामनुरूपरूपैर्विभावयेत् लक्षयेत् । त्वक्परिस्रावेण त्वक्शल्यं मांसपरिस्रावेण मांसशल्यमित्यादि । सूक्ष्मगतिषु शल्येषु एतान्येव लक्षणान्यविस्पष्टानि भवन्ति । तत् प्राक् निर्दिष्टं शल्यं वमनविरेचनादिभिः शुद्धदेहानां शुद्धशरीराणां पुंसां रुह्यते रोहं याति । रुह्यत इति कर्मकर्तरि इति केचित् । तदयुक्तम् । यतः कर्मस्थभावकानां कर्मक्रियाणां च कर्ता कर्मवद् भवति । न कर्तृस्थभावकानां न च कर्तृस्थक्रियाणामित्युक्तम् । रुहिश्च कर्तृस्थक्रियः । तस्माद् रोहतीति रुट्, रुडिवाचरति इति क्यन्तोऽयम् । 'रुह्यत इति रुट्' इति पाठ्ये । रूढाभासोऽयं तादात्विकबाधाभावात् । न तु सम्यग् रूढः । तथा च वक्ष्यति दोषकोपेत्यादि । तस्माद् अस्य रूढाभासत्वादेवैव व्युत्पत्तिर्युक्ता ॥ १० ॥

दोषकोपाभिघातादिक्षोभाद्भूयोऽपि बाधते ।

दोषेत्यादि । तच्छल्यमसम्यग्रूढत्वात् भूयोऽपि बाधते प्रागबाधमानमपि पुनरापीडां जनयति । पूर्वं कृतबाधत्वाद् भूयोग्रहणं कुतो हेतोरित्याह—

दोषकोपश्चाभिघातश्च तावादी येषां त एवं तैः क्षोभः संरम्भः तस्माच्चलितं यायते। अभिघातम् (തകർക്ക)। आदिग्रहणाद् भावनलङ्घनादीनां ग्रहणम् ॥

त्वगादि नष्टे शल्ये मिथ्यारूढत्वाददृश्यतां प्राप्ते सति शल्यपरिज्ञानार्थमिदमाह।

हाटकोऽपि—

''त्वगादि नष्टे लक्षणमुक्तं, प्रदेशविशेषतस्तु न ज्ञायते। तद्विज्ञानार्थं त्वङ्नष्ट इत्यादि' इत्याह।

त्वङ्नष्टं यत्र तत्र स्युरभ्यङ्गस्नेहमर्दनैः ॥ ११ ॥

रागरुग्दाहसंरम्भा यत्र चाऽऽज्यं विलीयते।
आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत् ॥ १२ ॥

मांसप्रणष्टं संशुध्या कर्शनाच्छ्लथतां गतम्।
क्षोभाद्रागादिभिः शल्यं लक्षयेत्तद्वदेव च ॥ १३ ॥

पेश्यस्थिसन्धिकोष्ठेषु नष्टं, अस्थि तु लक्षयेत्।
अस्थ्नामभ्यञ्जनस्वेदबन्धपीडनमर्दनैः ॥ १४ ॥

प्रसारणाकुञ्चनतः सन्धिनष्टं तथास्थिवत्।
नष्टे स्नायुसिरास्रोतोधमनीष्वसमे पथि ॥ १५ ॥

अश्वयुक्तं रथं खण्डचक्रमारोप्य रोगिणम्।
शीघ्रं नयेत्ततस्तस्य संरम्भाच्छल्यमादिशेत् ॥ १६ ॥

मर्मनष्टं पृथङ्नोक्तं तेषां मांसादिसंश्रयात्।

त्वगित्यादि। तत्र तेषु त्वगादिनष्टेषु शल्येषु मध्ये त्वङ्नष्टं गूढं शल्यं यत्र प्रदेशे स्यात् तत्र स्थानेऽभ्यङ्गादिभिः रागादयः स्युः। रागो लौहित्यम् (ചുവപ്പ്)। रुक् शूलम् (നോവ്)। संरम्भः क्षोभः। दाहः (ചുട്)। यत्र वा घृतं स्त्यानं योजितं विलीयते तत् स्थानं शल्यवत् सशल्यं वदेत्। अथवा लेपश्चन्दनादिना दत्तो यत्राश्वेव शुष्यति तत्स्थानं त्वग्देशं शल्यवज्जानीयात्। 'त्वङ्नष्टे यत्र तत्र स्युः' इति वा पाठः। मांसप्रणष्टमदृश्यतां प्राप्तं, संशुद्ध्या वमनविरेचनादिक्रिया यत् कर्शनं कृतं तस्माच्छ्लथतां शिथिलत्वं गतं, क्षोभादनेकप्रकाराद् वेदनारूपात् तथा रागादिभिः रागरुग्दाहसंरम्भैः शल्यं लक्षयेत्। क्षोभाद्धेतोरुद्भूते रागादिभिरिति वा। तद्वदित्यादि। पेश्यादिषु

नष्टं शल्यं तद्वदेव तेन मांसप्रनष्टेन तुल्यं वर्तते । यथा शुष्या कर्शनाच्छूल-थतां गतं क्षोभाद् रागादिभिर्लक्षयेदिति । अस्थि तु नष्टं शल्यं अस्थ्नामभ्य-ञ्जनादिभिर्लक्षयेत् । सन्धिनष्टं शल्यं स्नेहस्वेदोपपन्नान् तान् सन्धीन् प्रसा-रणाकुञ्चनतः रागादिभिस्तथास्थिनष्टशल्यवच्च लक्षयेत् । स्नाय्वादिषु नष्टे शल्ये, असमे पथि विषमे मार्गे रथमारोप्य रोगिणं शल्यवन्तं शीघ्रं नयेत् । आश्वेव स्थानात् स्थानान्तरं प्रापयेत् । किं भूतं रथं, खण्डं चक्रं यस्य तं खण्डचक्रम् । ततस्तस्य प्रदेशस्य संरम्भाद् रथसंभूताच्छल्यमादिशेत् लक्षयेत् । संरम्भ इत्युपलक्षणम् । रुग्रागदाहैरिति च बोद्धव्यम् । अथवा ततस्तस्य रथस्य संरम्भात् स्थानाच्चलिते रागादिप्रादुर्भावेन शल्यं लक्षयेत् । यथा संरम्भात् स्वयमेव शल्यं निर्याति । मर्मनष्टं शल्यं पृथङ्नाभिहितम् , कुतः तेषां मर्मणां मांसादिसंश्रयान्मांसादिरेव प्राङ्निर्दिष्टो यस्तत्संश्रयात् । न तु मांसादिभ्यः पृथङ् मर्माणि भवन्तीत्यर्थः ॥

एवं विशेषेण नष्टशल्यस्य लक्षणमुक्त्वा सामान्येन नष्टशल्यदेशं लक्षयितु माह—

**सामान्येन सशल्यं तु क्षोभिण्या क्रियया सरुक् ॥ १७ ॥**

**सामान्येनेत्यादि । सामान्येन** सामान्यलक्षणेन **क्षोभिण्या क्रियया** संरम्भोत्पादकेन कर्मणा हस्तिस्कन्धाश्वारोहणद्रुतयानलङ्घनप्राणायामादिना यत् **सरुक्** स्थानं तत् **सशल्यं** जानीयात् । अनेन कर्मणा स्थानाच्चलिते किञ्चि-न्निर्गते शल्ये रुग् भवतीति तस्य लक्षणत्वम् ॥ १७ ॥

**वृत्तं पृथु चतुष्कोणं त्रिपुटं च समासतः ।**
**अदृश्यशल्यसंस्थानं व्रणाकृत्या विभावयेत् ॥ १८ ॥**

**वृत्तमित्यादि । समासतः** संक्षेपेण वृत्तादिभेदेन चतुर्विधेनादृश्यस्या-नुपलभ्यमानस्य शल्यस्य **संस्थानमाकृतिं व्रणाकृत्या** व्रणसंस्थानेन **विभा-वयेत्** अनुमिमीत । 'विद्यादि'त्यरुणदत्तः । **वृत्तं** वर्तुलम्(വട്ടം) **पृथु** पार्श्वा-परपार्श्वाभ्यां यत् परिच्छिद्यते विस्तीर्णमिति प्रायशोऽर्थः । हाटकोऽपि "पृथु विशालम्, द्व्यश्रमित्यर्थः" इत्याह = (പരന്നിടംപെട്ടിരിക്കും)। **चतुष्कोणं** चतुरश्रम् = (നാൽക്കോണിച്ചിരിക്കും)। **त्रिपुटं** त्र्यश्रम् = (ത്രികോണി-ച്ചിരിക്കും)। एवं **समासतः** संक्षेपेण **अदृश्यशल्यसंस्थानं व्रणाकृत्या** एतद् व्रणसदृशं शल्यमत्र देहप्रदेशे लग्नमिति जानीयात् ॥ १८ ॥

अधुनैषामाकर्षणोपायमाह—

**तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ।**
**अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ॥ १९ ॥**

तेषामित्यादि । तेषामदृश्यानां शल्यानामाकर्षणोपायौ **प्रतिलोमानुलोमकौ** । प्रतिलोमः शरीरस्यान्तःप्रवेशविपर्ययः । अनुलोमः शरीरस्यान्तःप्रवेशानुगः । प्रतिलोमानुलोमयोर्निर्हरणविषयमाह — **अर्वाचीनेत्यादि** । तयोः प्रतिलोमानुलोमयोः विपर्ययस्तद्विपर्ययः । तस्मात् **तद्विपर्ययादर्वाचीनपराचीने** शल्ये **निर्हरेत्** । अथवा तद्विपर्ययात् तेन विपर्ययेण तेन प्रतिलोमानुलोमेन क्रमेणेत्यर्थः । विपर्ययः क्रमवाची । प्रतिलोममर्वाचीनमानयेत् अनुलोमं पराचीनमानयेद् इत्यर्थः । **हृद्याकारो**ऽप्येनमेवार्थमतिस्पष्टं कृत्वोक्तवान् । "शरीरे प्रविष्टस्य शल्यस्यादृष्टस्य दृष्टस्य वा पाश्चात्येन मार्गेणाहरणं प्रतिलोमः । मुखाभिमुखमनुलोमः । तयोर्विषयमाह— 'अर्वाचीनपराचीने' इति । अर्वाचीनमनतिप्रविष्टं प्रतिलोमं हरेत् । पराचीनमतिप्रविष्टं अनुलोमं हरेत्" इति । **हाटको**ऽप्याह— "तेषामदृश्यानां शल्यानामाकर्षणोपायौ द्वौ प्रतिलोमानुलोमकौ । प्रतिलोमः शरीरान्तःप्रवेशविपर्ययः । अनुलोमः शरीरान्तःप्रवेशानुगः । प्रतिलोमानुलोमयोर्निर्हरणोपाययोर्विषयमाह — अर्वाचीनेत्यादि तद्विपर्ययादर्वाचीनपराचीनयोर्विपर्ययात् अर्वाचीनमूर्ध्वगतिशल्यं प्रतिलोममानयेत् । पराचीनमधोगतिशल्यं अनुलोममानयेत्" इति । **पाठ्यकारस्त्वाह** — 'तेषां शल्यानामाहरणोपायौ द्वौ । प्रतिलोमोऽनुलोमश्च । येन पथा प्रविष्टं तेनैवाहरणं प्रतिलोमः । निर्घात्य शस्त्रेण विशस्य वा ऽन्यपथाहरणमनुलोमः । एवं सामान्यमुक्त्वा पुनरर्वाचीनेत्यादिना विशेषमाह — अर्वाचीनमधोगतं ऊर्ध्वं नयेत् आहरेत् । पराचीनमूर्ध्वगतमधोमार्गेणैवाहरेदित्यर्थः । अर्वाचीनमनुलोमं समीपस्थितं प्रतिलोममाहरेत् । पराचीनं प्रतिलोमं दूरतः स्थितमुत्तुण्डितमनुलोममाहरेत् । अर्वाचीनपराचीनौ प्रतिलोमानुलोमपर्यायौ । प्रतिलोमानुलोमे शल्ये विपर्ययान्निर्हरेदिति पिण्डितार्थः" । अन्ये पुनरन्यथा वदन्ति— "तेषामित्यादिना वक्रर्जुभेदसंयुक्तानामाहरणमुक्त्वा, पुनरर्वाचीनेत्यादिना ऊर्ध्वाधोभेदसंयुक्तानां चोक्त्वा, सुखाहार्यमित्यादिना तिर्यग्गतस्याप्युक्तवान्" इति । तदयुक्तम् । समानतन्त्रविरोधात् । एवमुक्तं **सौश्रुते** — 'सर्वशल्यानां तु शरीर-

गतानां द्वावेवाहरणहेतू भवतः प्रतिलोमोऽनुलोमश्च । तत्र प्रतिलोममर्वाचीनमानयेत् अनुलोमं पराचीनम्' इति । अस्य व्याख्यानमेवमूचिवान् वामदेवः । "आहरणहेतू आहरणमार्गावित्यर्थः । तत्र प्रतिलोममिति — तत्र तयोः प्रतिलोमानुलोमहर्तव्ययोः प्रतिलोमं प्रतिलोमाहरणीयं शल्यमर्वाचीनमानयेत् । एवमर्वाचीनानयनं प्रतिलोमोपायः । अनुलोमाहरणीयं शल्यं पराचीनमानयेत् । एवं पराचीनमानयनं अनुलोमोपायः" इति । उक्तं च भालुकिना— "द्वावेव तु शल्यानयनमार्गौ भवतः । तद्यथा— अनुलोमः प्रतिलोमश्च । तत्र प्रतिलोमोऽर्वाचीनमाहरणम् । अनुलोमः पराचीनम्" इति । इन्दुनाप्ययमर्थः प्रत्यपादि । "प्रतिलोमं यद्यतः प्रविष्टं तेनैवानीयते । अनुलोमं यद्यतः प्रविष्टं ततः प्रवेश्य द्वितीयेन ह्रियते । तत्र अर्वाचीनं यच्छल्यं तत् प्रतिलोममानयेत् । अर्वाचीनं पूर्वोक्तं ऊर्ध्वगतिः । तद्यतः एवं प्रविष्टं तेनैवाहरेत् । यच्छल्यं पराचीनं तदनुलोममानयेत् । यत्राभिमुखं तत्रैवानयेदित्यर्थः" । पराचीनमधोगतीति उपलब्धौ प्रतिलोमानुलोमोपायौ । किं ताभ्यामाहरणीयं शल्यमित्यत्र ब्रवीति । ॥ १९ ॥

न च सर्वमेव शल्यमाहरणीयमित्याह—

**सुखाहार्यं यतः छित्त्वा ततस्तिर्यग्गतं हरेत् ।**
**शल्यं न निर्घात्यमुरःकक्षावंक्षणपार्श्वगम् ॥ २० ॥**
**प्रतिलोममनुत्तुण्डं छेद्यं पृथुमुख च यत् ।**

सुखाहार्यं यतश्छित्त्वेति । तिर्यग्गतं शल्यं यतो यस्माद् देहदेशात् सुखाहार्यं भवति सुखेनाहर्तुं शक्यते तस्माद् देहदेशान्मांसादीन् छित्त्वा विलुप्य उद्धरेत् । प्रतिलोमोपायेन अनुलोमोपायेन वा इत्यर्थः । छित्त्वेत्यस्य यद्यपि कर्म किञ्चिन्न निर्दिष्टं तथापि त्वङ्मांसादीनां योग्यत्वात् तेषामेव कर्मत्वं बोध्यम् । मांसादीन् छित्त्वेत्यर्थः । शल्यमित्यादि । उरःप्रभृतिषु स्थितं शल्यं न निर्घात्यं न निर्घातनीयम् । वंक्षणम् = (കുഴലസ്ഥാനം) । पार्श्वम् = (വിലാവ്) । तथा प्रतिलोमं प्रतिलोमप्रविष्टं नानुलोमगतं तथा अनुत्तुण्डं बाह्ये बुद्बुदवन्नोन्नतं अदृश्यमानमुखमित्यर्थः । हृद्याकारोऽपि — "अनुत्तुण्डितमदृश्यमानवाग्रं च त्वगादिष्ववरुद्धम्" इत्याह । उत्तुण्डम् = (നീളലുള്ള) । तथा पृथुमुखं च विस्तीर्णाननं शल्यं न निर्घातनीयम् । सारकृत्त्वेवमाह — 'शल्यं न निर्घात्य'मित्यादिना प्रवेशतः प्रतिलोमाहर्तव्यं शल्यं ब्रवीति । निर्घातनं मुद्गरादिभिः प्रचालनम् । प्रतिलोमं प्रवि-

लोमाहर्तव्यं शल्यम् । अनुत्तुण्डं गम्भीरापगतमदृश्यमानमुखम् । तद्विद्धविशेषादेव प्रतिलोमम् । भूयश्च्छेदानुबन्धभयादुत्तुण्डमविच्छेदनीयमुखं प्रतिलोमं छेदायोग्ये स्थाने छेदसाधनमुखमित्यर्थः । अच्छेदनीयप्रदेशे उत्तुण्डितमित्यर्थः पृथुमुखं च । यदिति भल्लार्धचन्द्रादि । अथवा छेदयोग्ये स्थानेऽपि भल्लादि प्रतिलोममाहरेदिति वा । एवं प्रतिलोममित्यादिना विद्धतः प्रदेशतः शल्याकृतिश्च प्रतिलोमाहर्तव्यं शल्यमुक्तं भवति । एतद् विपरीतमनुलोममित्यनुक्तेऽपि सिध्यति । उक्तं हि भालुकिना— "तत्र छेदनीयमुखमनुत्तुण्डितांश्च नित्यमनिर्घात्यान्याचक्ष्महे । भूयश्छेदानुबन्धदोषात् सर्व एव तु शल्या जत्रुकक्षपर्शुकावक्षोन्तरेषु अनिर्घात्या महापराधत्वात् । निर्घात्यमेभ्यो विपरीतमुत्तुण्डितं कर्णवन्तमपि निर्घात्यमाचक्ष्महे । तत्र निर्घातकर्णिकां पुरस्तान्निधाय मुखं वारङ्गतुण्डेषु प्रतिपीडयेत् । नाड्या प्रतिपीड्य परतस्ततः पाणिना निर्घातयेत् । अष्ठीलाश्ममुद्गराभिघातैर्वा"इति । उक्तं च भोजेन—

"अनुत्तुण्डानि शल्यानि छेदनीयमुखानि च ।
अनिर्घात्यानि जानीयात् भूयः च्छेदानुबन्धतः ॥
वक्षःकुक्ष्यन्तरगतं पार्श्वयोः कक्षयोरपि ।
सर्वमेव त्वनिर्घात्यं भवेच्छल्यमिति स्थितिः" ॥

इति । भोजेन प्रोक्ते ग्रन्थे प्रतिलोममित्यनुक्तं यतस्तस्माद् प्रतिलोममनुत्तुण्डमित्यत्रानुत्तुण्डादिगुणं शल्यं प्रतिलोमं हरेदिति वार्थः । 'छेद्यं पृथुमुखं च यत्' इत्यत्रापि पृथुमुखत्वाच्छेद्यमिति वार्थः ॥ २० ॥

**नैवाहरेद्विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥ २१ ॥**

**नैवेत्यादि । हृद्याकारोऽपि**— "नैवाहरेदित्यादिना प्रति(लोमानुलोमाभ्याम)प्यनाहार्यं शल्यं ब्रूते" इत्याह । विशल्यघ्नं यदाहृतं सत् शून्यं स्रोतः कृत्वा मारयति तन्नाहरेत् । विशल्यं हन्तीति **विशल्यघ्नम्** । तावत्स जीवति यावत्सशल्यः । शल्यापाये तु म्रियते तन्नाहरेदेव । शल्यस्य तस्योद्धृतस्य प्राणघातकत्वात् । एतत्स्वरूपं च मर्मविभागे स्पष्टं कृत्वा वक्ष्यते । तथा **नष्टमदृश्यतां प्राप्तं** च यन्निरुपद्रवमुपद्रवरहितं तन्निमित्तरोगरहितं तत् नाहरेत् प्रत्यवायभयात् । वाशब्दः समुच्चये । उक्तं च **भोजेन** —

"......... श्च सर्वशो नोद्धरेद् भिषक् ।
मर्मस्वेतेषु विद्धस्तु निश्शल्यो म्रियतेऽचिरात् ॥

पाकरुक्छोफसंस्रावैः स्थानेऽन्यत्रापि वर्जितम्।
प्रणष्टमथ शल्यं स्यादुपेक्ष्यमनुपद्रवम्॥"

इति॥ २१॥

अथाहरेत्करग्राह्यं करेणैवेतरत्पुनः।
दृश्यं सिंहाहिमकरवार्मिकर्कटकाननैः॥ २२॥
अदृश्यं व्रणसंस्थानाद् गृहीतुं शक्यते यतः।
कङ्कभृङ्गाह्वकुररशरारीवायसाननैः॥ २३॥
संदंशाभ्यां त्वगादिस्थं तालाभ्यां सुषिरं हरेत्।
सुषिरस्थं तु नलकैः शेषं शेषैर्यथायथम्॥ २४॥

अथेत्यादि। करग्राह्यं हस्तग्राह्यं शल्यं करेणैवाहरेत् नापरेण कङ्कमुखादिना। इतरद् अकरग्राह्यं हस्तग्रहणाशक्यं तु दृश्यं सिंहमुखादिभिर्यन्त्रैराहरेत्। अदृश्यं पुनः शल्यं व्रणसंस्थानादाकलय्य कङ्कमुखादिभिर्ग्रहीतुं शक्यते यतस्ततस्तैर्हरेत्। यत्तदोर्नित्याभिसंबन्धत्वात् तदो लाभः। अथवा यत इति तृतीयार्थे तसिल्। येन यन्त्रेण गृहीतुं शक्यते तेनाहरेदिति। त्वगादिस्थं शल्यं संदंशाभ्यां निर्हरेत्। आदिग्रहणान्मांसादीनां ग्रहणम्। सुषिरं यच्छल्यं त्वगादिस्थं तालयन्त्राभ्यां हरेत्। न संदंशाभ्याम्। "ऊषसुषि —" (५-२-१०७) इत्यादिना रप्रत्ययः। सुषिरयुतं सुषिरस्थं स्रोतःस्थितं पुनः शल्यं नलकैर्नालीयन्त्रैराकर्षेत्। शेषं शल्यं शेषैर्यन्त्रैर्यथायोग्यमाहरेत्॥ २२–२४॥

यन्त्रेणाप्यशक्यस्य ग्रहणमाह —

शस्त्रेण वा विशस्यादौ ततो निर्लोहितं व्रणम्।
कृत्वा घृतेन संस्वेद्य बध्वाचारिकमादिशेत्॥ २५॥
सिरास्नावविलग्नं तु चालयित्वा शलाकया।

शस्त्रेणेत्यादि। शस्त्रेण वा पूर्वं विशस्य मांसादीन् छित्त्वा शल्यमानीय तदनन्तरमपनीतरक्तं व्रणं विधाय उष्णसर्पिषा स्वेदयित्वा वस्त्रपट्टादिना ससर्पिर्मधु बद्ध्वा आचारिकं स्नेहविध्युक्तम् 'उष्णोदकोपचारी स्यात्' इत्यादिकमादिशेत् कथयेत्। सिरास्नावविलग्नं पुनः शल्यं शलाकया चालयित्वा शिथिलीकृत्याहरेत्॥ २५॥

१. "१ नायु" मुद्रिताष्टाङ्गहृदयपाठः।

एवं हस्तेनाहर्तुमशक्यानां शल्यानामुद्धरणविधानमुक्त्वेदानीं हस्तयन्त्राभ्यामशक्यानामाहरणविधिं वक्तुमारभते।

हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना ॥ २६ ॥
ततः स्थानान्तरं प्राप्तमाहरेत्तद्यथायथम्।
यथामार्गं दुराकर्षमन्यतोऽप्येवमाहरेत् ॥ २७ ॥
अस्थिदष्टं नरं पद्भ्यां पीडयित्वा विनिर्हरेत्।
इत्यशक्ये सुबलिभिः सुगृहीतस्य किङ्करैः ॥ २८ ॥
तथाप्यशक्ये वारङ्गं वक्रीकृत्य धनुर्ज्यया।
सुबद्धं वक्त्रकटके बध्नीयात्सुसमाहितः ॥ २९ ॥
सुसंयतस्य पञ्चाङ्ग्या वाजिनः कशयाथ तम्।
ताडयेदिति मूर्धानं वेगेनोन्नमयन् यथा ॥ ३० ॥
उद्धरेच्छल्यमेवं वा शाखायां कल्पयेत्तरोः।
बध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत् ॥ ३१ ॥

हृदये संस्थितमित्यादि। हृदये यदाश्रितं शल्यं तच्छीतजलेन त्रासितस्य स्थानान्तरगतं ज्ञात्वा यथायथं यथास्वं विशिष्टयन्त्रैः शल्यं निर्हरेत्। शल्यमिति ग्रासशल्यादिकं प्रायशः। सौश्रुतदर्शनादेवं द्योत्यते। कथमिति। 'हृदयमभिप्रवर्तमाने शल्ये शीतजलादिभिः उद्वेजितस्योद्विग्नहृदयस्य प्रहारं दापयेत, यथाहारमार्गो नावरुध्यते' इति। अत्रैवं व्याख्यानमवोचद् वामदेवः— "हृदयमिति-ग्रासशल्यादिके हृदयमभिवर्तमाने सति शीतजलादिभिरुद्वेजितस्य सत उद्विग्नहृदयस्य प्रहारं दापयेत्। यथा येन प्रकारेण आहारमार्गे आहारगतिर्नावरुध्येत तथा प्रहारं दापयेत्। 'हृदये आहारमार्गे' इति वचनात् अवगम्यते ग्रासशल्यमेवात्राधिकृतमिति। उद्वेजनेन विवृतस्रोतसः तत्कालमेव प्रहाराच्छल्यस्याधःपतनं भवतीत्यभिप्रायः। अथवागन्तुशल्यानामसह्यरुजाकराणां सर्वत्र स्थितानामुद्धरणोपायार्थमस्यारम्भः। हृदयमिति मनस्तदधिष्ठानत्वात् मनः प्रपीड्य वर्तमाने शल्ये शल्योद्धरणे अशक्तो भवत्यातुरः। तत्रायमुद्धरणोपायः। शीतजलादिभिरुद्वेजितस्य प्रहारं शल्यनिष्पातनं दापयेत्। यथाहारमार्गः आहरणमाहारः शल्यस्याहरणमार्गो नावरुध्यते यथा शीघ्रं सुखमागच्छति। शल्यमनुलोमं प्रतिलोमं वा तथा निर्घातं प्रतिनिर्घातं वा दापयेत्"। भोजेनाप्युक्तम्—

"शल्ये तु संबाधगते गम्भीरे हृदयाश्रिते।
शल्यानिर्हरणार्थाय विधिं कुर्यादिमं भिषक्॥
शीतलेन जलेनैनमबुद्धमवसेचयेत्।
उद्विग्ने हृदये तस्य शल्यस्योद्धरणं हितम्॥
अप्रियाण्यपि शंसेत्त शस्त्रेणोद्वेजयेदपि।
उद्विग्ने हृदये तस्य शल्यस्योद्धरणं हितम्॥
प्रियां भार्यां स्त्रियं चान्यां सर्वालङ्कारभूषिताम्।
दर्शयेत् तस्य विद्धस्य संहृष्टः स्मयते तथा॥
हृदयेन स्मयानस्य शल्यं निर्घातयेद् भिषक्" ॥ इति ॥

**यथेत्यादि**। **अन्यतोऽपि** हृदयादन्यत्रापि देशे स्थितं शल्यं **दुराकर्षं** दुःखेनाक्रष्टुं शक्यते स्वमार्गेण यत्तत् **एवमेवाहरेत्**। यथा हृदयस्थं शल्यं स्थानान्तरं प्राप्तं निर्हार्यं तथा यथामार्गं मार्गानतिक्रमेणान्यदेशस्थमपि शल्यमाकर्षणीयम्। **अस्थिदष्टं** शल्यमस्थिद्वयमध्यगतं अस्थ्नापि दष्टमिव दष्टम् अस्थिविवरप्रविष्टमित्यर्थः। सप्तम्यन्तं वा। तस्मिन्नस्थिदष्टे शल्ये सति **नरं** बलवन्तं **पद्भ्यां पीडयित्वा** आक्रम्य यन्त्रेण तच्छल्यं निर्हरेत्। अस्थिनष्टम् इति वा पाठः। **इत्यशक्ये** अनेनापि प्रकारेणाक्रष्टुमशक्ये शल्ये **किङ्करैर्भृत्यैर्महाबलैः सुगृहीतस्य** सुष्ठ्ववष्टब्धस्य नरस्य शल्यं कङ्कमुखादिना भिषगाहरेत्। **तथाप्यशक्ये** एवमप्याहर्तुमशक्ये शल्यस्य **वारङ्गं** प्रान्तं शिखाकारं वक्रीकृत्य कुटिलतामापाद्य ततो **धनुर्ज्यया** स्नावादिमय्या **सुबद्धं** कृत्वानन्तरं **वाजिनोऽश्वस्य वक्त्रकटकं बध्नीयाद्** वैद्यः। वक्त्रकटकं=(കടിവാളം)। किंभूतः, **सुसमाहितः** तद्गतमनाः। किंभूतस्य वाजिनः, **पञ्चाङ्ग्या सुसंयतस्य** सुष्ठु बद्धस्य पञ्चानामङ्गानां चतुर्णां पादानां मुखसहितानां समाहारः पञ्चाङ्गी बन्धविशेषः=(൧൦എതാണികെട്ട്)। उक्तं च—

"मुखे खुरचतुष्के च पञ्चाङ्गीसंज्ञया मतः"

इति। तया पञ्चाङ्ग्या बद्धस्यानन्तरं तं वाजिनं **कशया** एवं ताडयेत् **यथा** स वाजी **मूर्धानमुन्नमयन्** उत्क्षिपन् **वेगेन** बलेनाक्रान्त्या **शल्यमुद्धरेत्**। कशा चर्मयष्टिः। अथवा **एवमनेन प्रकारेण** वारङ्गं वक्रतां नीत्वा **धनुर्ज्यया सुबद्धं** संपाद्य सुसमाहितो भिषक् **वृक्षस्य शाखायां** कल्पयेत्। वृक्षशाखामा-

नमय्य धनुर्ज्ययैव तस्यां तद्वद् बध्नीयात् शाखामवनम्य तस्यामश्ववक्त्रवद् धनुर्ज्यां बध्नीयादित्यर्थः। अत्र च या शाखा किङ्करहस्तैर्मुक्तमात्रैवोर्ध्व-मुन्नमन्ती शल्यमुद्धरति तादृशी कल्पनीया। दुर्बलं तनु वारङ्गं यस्य शल्यस्य तद् दुर्बलवारङ्गं शल्यं कुशाभिः कुशाभिधानैर्वंशादिकबालिकाभिर्भङ्गप्रतिषेधे वक्ष्यमाणैर्बध्वा शल्यमाहरेत्। कुशाशब्दो न तृणवाची "अस्त्री कुशम्" इत्यमरसिंहः॥ २६–३१॥

**श्वयथुग्रस्तवारङ्गं शोफमुत्पीड्य युक्तितः।**
**मुद्गराहतया नाड्या निर्घात्योत्तुण्डितं हरेत्॥ ३२॥**
**तैरेव च नयेन्मार्गममार्गोत्तुण्डितं तु यत्।**
**मृदित्वा कर्णिनां कर्णं नाड्यास्येन निगृह्य वा॥ ३३॥**
**अयस्कान्तेन निष्कर्णं विवृतास्यमृजुस्थितम्।**
**पक्वाशयगतं शल्यं विरेकेण विनिर्हरेत्॥ ३४॥**

श्वयथुना ग्रस्तमाच्छादितं वारङ्गं यस्य शल्यस्य तत् श्वयथुग्रस्तवारङ्गं शल्यमाहरेत्। कथं, **युक्तितो** युक्त्या यथा युज्यते तथा **शोफमुत्पीड्य** ऊर्ध्वं पीडयित्वा **उत्तुण्डितं** बुद्बुदवदुन्मुखीभूतं शल्यं **मुद्गरेणाहतया नाड्या निर्घात्य** चालयित्वा आहरेत्। मुद्गरग्रहणमुपलक्षणं पाषाणादीनाम्। पाषाणादिभिरप्याहतया नाड्योत्तुण्डीकृतं हरेदिति बोध्यम्। **तैरेव** मुद्गराश्मादिभिराघातैरमार्गोत्तुण्डितं अमार्गे उत्तुण्डितं शल्यं **मार्गं नयेत्** प्रापयेत्। **हाटको**ऽप्याह—"तैरेव मुद्गरादिभिः आहत्यामार्गोत्तुण्डितं यतो निर्हर्तुं मर्मत्वान्न युज्यते तत उत्तुण्डितं मार्गमानयेत्" इति। कर्णः कर्णौ कर्णा वा विद्यन्ते येषां ते **कर्णिनो** भल्लादयः। तेषां **कर्णं मृदित्वा** तस्य कर्णशल्यं निर्हरेत्। कर्णिनमिति वा पाठः। "कर्णवन्तं शरशल्यं कर्णं मृदित्वा निर्हरेत्" इति **हाटकः**। अथवा **नाड्यास्येन** नाडीमुखेन पञ्चमुखच्छिद्रेत्यादिना **निगृह्य** निर्हरेत्। **अयस्कान्तेन** मणिविशेषेण **निष्कर्णं** कर्णरहितं तथा **विवृतास्यं** स्पष्ट-मुखम् **ऋजुस्थितं** शल्यं हरेत्। अयस्कान्तस्य लोहाकर्षणं प्रभावः। **पक्वाशयगतं शल्यं विरेकेण** विशेषतो निर्हरेत्॥ ३२–३४॥

**दुष्टवातविषस्तन्यरक्ततोयादि चूषणैः।**
**कण्ठस्रोतोगते शल्ये सूत्रं कण्ठे प्रवेशयेत्॥ ३५॥**

विसेनात्ते ततः शल्ये बिसं सूत्रं समं हरेत्।
नाड्याग्नितापितां क्षिप्त्वा शलाकामप्स्थिरीकृताम् ॥ ३६ ॥
आनयेज्जातुषं कण्ठाज्जतुदिग्धामजातुषम्।
केशोण्डुकेन पीतेन द्रवैः कण्टकमाक्षिपेत् ॥ ३७ ॥
सहसा सूत्रबद्धेन वमतस्तेन चेतरत्।
अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत् ॥ ३८ ॥
अप्पानस्कन्धघाताभ्यां ग्रासशल्यं प्रवेशयेत्।
सूक्ष्माक्षिव्रणशल्यानि क्षौमवालजलैर्हरेत् ॥ ३९ ॥

दुष्टेत्यादि। दुष्टवातादीनि चूषणैर्हरेत्। चूषणैरिति बहुवचननिर्देशाच्छृङ्गादिभिरिति बोद्धव्यम् ॥ कण्ठेत्यादि। कण्ठस्रोतस्थे शल्ये सूत्रं कार्पासादिजं बिसेन सक्तं कण्ठे प्रवेशयेत्। बिससंलग्नं सूत्रं कृत्वा शल्यनिर्हाराय प्रवेशयेदित्यर्थः। आत्ते गृहीते शल्ये बिससंलग्ने अनन्तरं शल्यं बिसं सूत्रं समं तुल्यकालमाहरेत्। नाड्येत्यादि। जातुषे शल्ये कण्ठस्रोतःप्रविष्टे अग्निना तापितां शलाकां कण्ठदाहपरिहारार्थं नाड्या नाडीयन्त्रेण कण्ठे क्षिप्त्वा प्रक्षिप्य अद्भिः निर्वापणेन स्थिरीकृतां कृत्वा नाड्यैव जातुषं शल्यं कण्ठादानयेत् आकर्षेत्। जतु लाक्षा तस्मात् जातुषमिति "त्रपुजतुनोः षुक्"(४-३-१३८) इत्यण् षुगागमश्च। अजातुषं वेण्वादिमयं शल्यं कण्ठस्रोतःस्थितं जतुदिग्धां शलाकामग्नितापितां नाड्या क्षिप्त्वा पूर्ववच्छल्यमाहरेत्। जतुदिग्धामित्युपलक्षणार्थम्। सिक्थकादिदिग्धामपि। यथा शलाकया हर्तुं युज्यते तथा कृत्वेति बोध्यम्। केशोण्डुकेत्यादि। कण्टकं मत्स्यादिमांसगर्धेन भुक्तं कण्ठस्रोतसि स्थितं द्रवैः पानीयादिभिः सह पीतेन केशोण्डुकेनाक्षिपेत्। केशानां समूहः केशोण्डुकः तेन केशोण्डुकेन। सूत्रबद्धेन दीर्घसूत्रग्रथितेन। वमतो वमनमाचरतः कण्टकमेकदेशसूत्रसक्तं सहसैवाक्षिपेत्। एवं च वमनद्रव्यसंस्कृतैः द्रवैः केशोण्डुकं पातव्यमित्यवतिष्ठते। केशोण्डुकं दृढसूत्रबद्धं पाययित्वा वामयेत्। वमतश्छर्दिवतः केशोण्डुकं कण्ठे सजति ततो गृहीतशल्यं ज्ञात्वा झटित्याकर्षेदित्यर्थः। तेन चेतरत् तेन च कण्टकेन किञ्चिदग्रे छिन्नेन इतरत् केशोण्डुकं प्रमादपीतं कण्ठस्रोतसि स्थितमाहरेत्। क्षतकण्ठश्च त्रिफलां मधुसर्पिःसितोपेतामनुकण्ठं विलिह्यात्। वचनं हि 'कण्टकादिभिः

क्षते कण्ठे त्रिफलाचूर्णं मधुघृतादिभ्यां लिह्यात्" इति। सुश्रुते चोक्तम् — "अस्थिशल्यमन्यद् वा तिर्यग् स्थितमवेक्ष्य केशोण्डुकं दृढसूत्रबद्धं द्रवभक्तोपहितं पाययेत् आकण्ठात्पूर्णकोष्ठं वामयेत्। वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्। मृदुना वा दन्तधावनकूर्चकेनाहरेत्। प्रणुदेद् वाऽन्तः" इति। अशक्यमित्यादि। मुखनासागतं शल्यं मुखनासाभ्यामाहर्तुं यन्न शक्यते तत् परतो नुदेत्। प्रकृतत्वान्मुखात् परतो नासायाश्च परतः। तस्माद् येन केनचिदुपायेन कोष्ठं नयेदित्यर्थो गम्यते। कुक्षौ प्रवेशयेदित्यर्थः। अप्पानेत्यादि। ग्रासः शल्यमिव ग्रासशल्यं शल्यभूतं ग्रासं कण्ठसक्तमन्तःकोष्ठं प्रवेशयेत्। कथं, अपां पानं अप्पानम्। स्कन्धस्य मुष्ट्या हननं स्कन्धघातः ताभ्याम्। अक्षिणी च व्रणश्च तत्र शल्यानि सूक्ष्माणि च तान्यक्षिव्रणशल्यानि चेति सूक्ष्माक्षिव्रणशल्यानि तानि योग्यतावशात् क्षौमादिभिर्हरेत्॥ ३६–३९॥

नदीतटाकादिपतितस्याकस्मादवशं यज्जलं घ्राणास्यादिभिरन्तरे प्रविशेत् तच्च जलं शल्यवदन्तःस्थितं निर्हार्यमिति तदुपायमाह —

**अपां पूर्णं विधुनुयादवाक्शिरसमायतम्।**
**वामयेच्चामुखं भस्मराशौ वा निखनेन्नरम्॥ ४०॥**
**कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी।**
**क्षिपेदधोमुखं कर्णं हन्याद्वा चूषयेत वा॥ ४१॥**
**कीटे स्रोतोगते कर्णं पूरयेल्लवणांबुना।**
**शुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः॥ ४२॥**

अपामित्यादि। अपां पूर्णं नरं विधुनुयात्। किम्भूतम्, अवाक्शिरसं अवाक् अधोगतं शिरो यस्य तम् तथा आयतं दीर्घं कृत्वा विधुनुयात्। तथा तं नरं वामयेच्च वैद्यः। अथवा आमुखं मुखं यावद्भस्मराशौ निखनेत् वा न्यस्येत्। कुलालचक्राद्यारोपणेनोदकनिःसारश्च कार्यः। अन्यथा क्षुन्मार्गगामिरद्भिराध्मानपीनसकासश्वासेन्द्रियोपघातज्वरादयः श्लेष्मविकारा मृत्युर्वा भवति। आध्मानादिषु यथात्मीयां चिकित्सां कुर्यात्। कर्णेऽम्बुना पूर्णे सति तैलवारिणी क्षिपेत्। किं कृत्वा, हस्तेन मथित्वा विलोड्य तथा कर्णमधोमुखं हन्याद्वा। अथवा चूषयेत कर्णं शृङ्गादिभिः।

१. 'वामयेद्वा' इति मुद्रिताष्टाङ्गहृदयपाठः

कीटे पिपीलिकाशतपादादौ स्रोतोगते स्रोतःप्रविष्टे स्रोतसि स्थिते सति तोद-गौरववेदनाभिरनुमिते कर्णं लवणाम्बुना पूरयेत् शुक्तेन वा। किम्भूतेन सुखोष्णेन। मृते पुनः कीटे तस्मिन् क्लेदहरो विधिः कार्यः ॥४०-४२॥

शल्यानुद्दिश्याह—

जातुषं हेमरूप्यादिधातुजं च चिरस्थितम्।
ऊष्मणा प्रायशः शल्यं देहजेन विलीयते। ४३॥

मृद्वेणुदारुश्रृङ्गास्थिदन्तबालोपलानि च।
शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि वा॥ ४४॥

विषाणवेण्वयस्तालदारुशल्यं चिरादपि।
प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी॥ ४५॥

शल्ये मांसावगाढे च स देशो न विदह्यते।
ततस्तं मर्दनस्वेदशुद्धिकर्षणबृंहणैः॥ ४६॥

तीक्ष्णोपनाहपानान्नघनशस्त्रपदांकनैः।
पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः॥ ४७॥

जातुषादिशल्यं देहजेनोष्मणा चिरास्थितं प्रायशो विलीयते। मृदादिशल्यं देहजेनोष्मणा न विलीयते। उपलशब्दस्य नपुंसकत्वं चिन्त्यम्। विषाणादिशल्यं प्रायो देहजेनोष्मणा न विलीयते। अपि तु निर्भुज्यते पृथग् भवति। चिरादपि न पच्यते। कुत इत्याह— यस्माद् तद्विषाणादि-शल्यं शीघ्रमेव पलासृजी पचति। अतो मांसरक्तपाकाद्देहोष्मणा निर्भुज्यते हाटकस्तु — 'निर्भुज्यते कुटिलीभवति' इत्याह। 'भुजो कौटिल्ये' इति धातुः। मांसावगाढे मांसान्तर्निगूढे शल्ये सति यदि स देशो न विद-ह्यते न पच्यते यत्र उत्तिष्ठति शल्यं ततस्तं शल्यदेशं कदाचिन्मर्दनेन स्वे-देन वा कदाचिच्छुद्ध्या वमनादिकया कदाचित् कर्शनेन कदाचिद् बृंहणेन कदाचित् तीक्ष्णोपनाहेन कदाचित् तीक्ष्णपानेन कदाचित् तीक्ष्णान्नेन। तीक्ष्णशब्दस्य हि प्रत्येकं सम्बन्धः। कदाचिद् घनशस्त्रपदाङ्कनैश्च शस्त्रस्य पदानि शस्त्रपदानि घनानि शस्त्रपदानि घनशस्त्रपदानि तेषामङ्कानि

लक्षणानि तैः । अविरलप्रच्छानलक्षणैरित्यर्थः । तैर्मर्दनादिभिः पूर्वं शल्यं पाचयित्वा ततः प्रचलत्वात् पाटनादिभिर्हरेत् ॥ ४१—४७ ॥

उपसंहरन्नाह—

शल्यप्रदेशयन्त्राणामवेक्ष्य बहुरूपताम् ।
तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथा हरेत् ॥ ४८ ॥

शल्येत्यादि । शल्यानां धातुविषाणवेण्वादिजानां प्रदेशानां त्वङ्मांसादीनां यन्त्राणां च स्वस्तिकादीनां बहुरूपतां नानाकारतां ज्ञात्वा तैस्तैरुपायैरुक्तानुक्तैर्विज्ञानसाधनकारणैः शल्यं जानीयात् । मतिमान् भिषक् तथा आकर्षेच्च ।

(काय एव परं शल्यं) निजदोषमलाविलः ।
शल्ये शल्यं शराद्यं तु विशेषात् तेन चिन्त्यते ॥ इति ॥

शल्येषु सकर्णशल्योद्धरणं दुष्करम् । सुश्रुते चोक्तम्—

"कर्णवन्ति तु शल्यानि दुःखान्याहरणे विदुः ।
आददीत भिषक् प्राज्ञस्तानि युक्तिसमाहितः" ॥ इति ॥

संग्रहे चोक्तम्—

"व्रणे प्रसन्ने प्रान्तेषु नातिस्पर्शासहिष्णुता ।
अल्पे शोफे च तापे च निःशल्यमिति निर्दिशेत्" ॥ इति ॥

इति हृदयबोधिकायामष्टाविंशोऽध्यायः ॥

---

# अथ एकोनत्रिंशोऽध्यायः ।

## अथातः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः ।

पूर्वेऽध्याये "शस्त्रेण वा विशस्यादौ" इत्युक्तम् । अतस्तस्यैव शस्त्रकर्मणो विधानं वक्तुं युक्तमित्यध्याय आरभ्यते । शस्त्रस्य कर्म शस्त्रकर्म शस्त्रावचारणक्रिया तस्य विधिरिति कर्तव्यता शस्त्रकर्मविधिः । शेषं पूर्ववत् । तद्द्विविधं व्याधौ । निज आगन्तौ च । साध्यलक्षणयुक्ते भेषजाविषयत्वमतिक्रान्ते शस्त्रकर्म प्रशस्यते । ननु अयं शस्त्रकर्म विधिः ततः शस्त्रकर्मग्रन्थ एवादौ निर्देष्टुं युक्तः —

"प्राक्च्छस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ।"

इत्यादि । न तु "व्रणः सञ्जायते प्रायः" इत्यादि । अत्रोच्यते । शस्त्रकर्मविधेः पूर्वं विषयो निर्देष्टुं युक्तः । यः शस्त्रकर्मविधेरुपाय इत्यस्यैव पूर्वमुपन्यासो युक्त इत्याह —

**व्रणः सञ्जायते प्रायः पाकाच्छ्वयथुपूर्वकात् ।**
**तमेवोपचरेत्तस्माद्रक्षन् पाकं प्रयत्नतः ॥ १ ॥**

**सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः ।**

व्रण इत्यादि । पाठ्यकारोऽपि — "पक्वशोफे शस्त्रकर्म मुख्यत्वेन विधीयते । तस्मात् प्राग्वर्तमानस्य शोफस्यैव चिकित्सामाह" इत्याह ।

स च शस्त्रकर्मविषय आमयो व्रणः प्रायेण पाकात् सञ्जायते । किम्भूतात् , श्वयथुपूर्वकात् । श्वयथुः पूर्वो यस्य पाकस्य स एवं तस्मात् श्वयथुपूर्वकात् । वृणोति भिनत्ति देहमिति व्रणः । श्वयथुपाकमन्तरेणापि शस्त्राभिघाताद् व्रणो जायत इति प्रायोग्रहणम् । यतः श्वयथुपूर्वकात् पाकात् व्रणः सञ्जायते अतस्तमेव श्वयथुमुपचरेत् उपक्रमेत् । किं कुर्वन् , पाकं प्रयत्नेन रक्षन् । कथं, सुशीतलेपादिभिः सुशीताभ्यां स्पर्शतो वीर्यतश्च लेपसेकाभ्यां तथा असृङ्मोक्षणेन तथा संशोधनेन वमनविरेकाभ्याम् । आदिग्रहणात् कषायपानघृतपानादीनां ग्रहणम् । "रक्षन् पाकात् प्रयत्नतः" इति वा पाठः ॥

तस्य च शोफस्यामपच्यमानपक्वाख्यास्तिस्रोऽवस्थाः सम्भवन्तीत्याह —

शोफोऽल्पोऽल्पोष्णरुक्सामः सवर्णः कठिनः स्थिरः ॥ २ ॥
पच्यमानो विवर्णस्तु रागी वस्तिरिवाततः ।
स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः ॥ ३ ॥
संरम्भारुचिदाहोषातृड्ज्वरोन्निद्रतान्वितः[1] ।
स्त्यानं विलीनयत्याज्यं व्रणवत्स्पर्शनासहः ॥ ४ ॥
पक्वेऽल्पवेदना[2] म्लानिः पाण्डुता वलिसम्भवः ।
नामोऽन्तेषून्नतिर्मध्ये कण्डूशोफादिमार्दवम् ॥ ५ ॥
स्पृष्टे पूयस्य सञ्चारो भवेद्वस्ताविवाम्भसः ।

शोफ इत्यादि । आमो यः शोफः सः प्रमाणतोऽल्पः । तथा अल्पोष्मा । तथा अल्परुगल्पशूलः । तथा सवर्णस्त्वक्सवर्णः = (നിറ മാറാത്തിരിക്ക) तथा कठिनो न मृदुः पक्ववत् । तथा स्थिरोऽचलः न पक्ववच्चलः । स आम इति प्राप्ते साम इति । "सोऽचि लोपे चेत् पादपूरणम्" (६-१-१३४) इति सुलोपः । आमावस्थामापन्नस्य विदाह इति प्रागेवामलक्षणवचनम् । स शोफः पच्यमानो विवर्णः न त्वक्समानवर्णः। तथा रागी लोहितवर्णः । तथा वस्तिरिवाततः वातपूर्णदृतिवत् स्तब्धः= (പരന്നിരിക്ക) छागादीनां मूत्राधारो वस्तिः । तथा स्फुटतीव । सनिस्तोदः सह निस्तोदेन वर्तते नियतप्रबन्धप्रवृत्तिरुक् निस्तोदः । साङ्गमर्दविजृम्भिकः अङ्गमर्दविजृम्भिकासहितः । अङ्गानां मर्दः क्षोभः । विजृम्भिका=(കോട്ടുവിട്ക) । संरम्भादिभिरन्वितः । अन्वितशब्दस्य प्रत्येकं संरम्भादिभिः सम्बन्धः । संरम्भो वाग्विषयातीतानां स्वसंवेद्यानां एकानेकरूपाणां पीडनविघट्टनभेदनच्छेदनदंशनादीनां रुजानां प्रादुर्भावः । सर्वाङ्गीणस्तीव्रः सन्तापो दाहः । अरतिमान् दाह ऊषा =(അഴൽച്ച) । उन्निद्रता अनिद्रता । एते पच्यमानस्य लक्षणं भवन्ति । सौश्रुते चोक्तं — 'सूचीभिरिव तुद्यते । दश्यत इव पिपीलिकाभिः । छिद्यत इव शस्त्रेण । ताड्यत इव दण्डेन । पीड्यत इव पाणिना । घट्यत इव चाङ्गुल्या । दह्यत इव क्षाराग्निभ्याम् । ऊषाचोषपरिदाहाश्च भवन्ति । वृश्चिकाविद्ध इव स्थानासनशयनेषु न शान्तिमुपैति । आध्मात इव वस्तिरिवाततः

1. 'विष्यन्द', 2. 'वेगता' इति मुद्रिताष्टाङ्गहृदयपाठः ।

शोफो भवति। त्वग्लौहित्यं शोफाभिवृद्धिः ज्वरः पिपासा भक्तेष्वरुचिश्च पच्यमानलिङ्गम्" इति। तथा पच्यमानो घृतं स्त्यानमुपयुक्तं विलीनयति। तथा स्पर्शनं न सहते व्रण इव। पक्वे सत्यल्पा वेदना भवति। न तु संरम्भः। तथा म्लानिः म्लानत्वम्। पाण्डुता पाण्डुत्वम्। वलीनां चोद्भवः = (व्र.ह) अन्तेषु पर्यन्तेषु नामो निम्नत्वम्। नामोऽन्तेषु इत्युक्त्यैव मध्ये उन्नतिर्लब्धैव। पुनरुन्नतिग्रहणं त्वतिशयार्थम्। तेनोत्तुण्डितत्वं गम्यते। तथा कण्डूः शोफादिमृदुत्वं स्यात्। तथा स्पृष्टे पूयस्य सञ्चारो भवति बस्तेरन्तः स्थितस्य यथाम्भसः॥ २—५॥

कथं पाकः सम्भवतीत्याह —

शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात्॥ ६॥
रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः।
पाकेऽतिवृत्ते सुषिरस्तनुत्वग्दोषभक्षितः॥ ७॥
वलीभिराचितः श्यावः शीर्यमाणतनूरुहः।

शूलमित्यादि। आनिलं विना शूलो न सम्भवति। पित्तं विना दाहो न स्यात्। कफोदयाद् विना शोफो न स्यात्। रागो रक्ताद् विना न स्यात्। शोफः कफादिति वक्तव्ये उदयग्रहणं विशेषद्योतनार्थम्। विशेषश्चाधिक्यम्। तेन कफाधिकैः सर्वैर्दोषैः शोणितसहितैश्चश्वयथुपाकः स्यात् इति स्यात्। धान्वन्तरीयाः पुनराहुः —

"नर्ते रुजा वातमृते च पित्तं पाकः कफं नास्ति विहाय पूयः।
तस्मात्तु सर्वे परिपाककाले पच्यन्त एव त्रिभिरेव दोषैः॥"

रुजां कुर्वन् पित्तमुदीरयति। उदीरितं पित्तं कफं पचति। एवं त्रिभिरेव पच्यते। धातुपाकश्चोक्तः —

"कालान्तरेणाभ्युदितं च पित्तं कृत्वा वशे वातकफौ प्रसह्य।
पचत्यथो शोणितमेष पाको मतः परेषां विदुषां द्वितीयः॥"

इति। पाके च अतिवृत्तेऽतिक्रान्ते सुषिरोऽन्तस्तुच्छः शोफदेशः सम्पद्यते। तथा तनुस्त्वग् यस्मिन् स तनुत्वग् भवति। तथा दोषभक्षितः। दोषशब्देनेह पूय उच्यते। तेन भक्षितत्वात् सुषिरत्वं तनुत्वक्त्वं चास्य। तथा वलीभिराचितो व्याप्तः। तथा शीर्यमाणतनूरुहः पतद्रोमा॥ ६—८॥

इदानीं कफजे लिङ्गज्ञानकष्टत्वमुपदिशति —

**कफजेषु च शोफेषु गम्भीरं पाकमेत्यसृक् ॥ ८ ॥**

**पक्वलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ।**

**त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ॥ ९ ॥**

**रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ।**

कफजेष्वित्यादि । यद्यपि त्रिभिरेव दोषैः शोणितान्वितैः पाको जायते । तथापि कफजेष्वित्युक्तेः अधिकतरकफजेष्विति गम्यते । **हृद्याकारोऽपि** — "कफजेष्विति व्यवहारोऽधिकद्योतनाय" इत्याह । बहुवचननिर्देशो देहदेश-बहुत्वात् । येषु देशेष्वसौ शोफो जायते तेषु **कफजेषु** उत्कृष्टकफजेषु सशोफस्य कफसम्भवात् । **गम्भीरमवगाढमन्तर्निगूढत्वाद्दुर्लक्ष्यं पाकमसृगेति** । अत एव **पक्वलिङ्गं** पक्वलक्षणम**स्पष्टं** दुर्लक्ष्यं स्यात् । तथात्र शीतगुणयोगात् शीत-श्चासौ शोफश्च तस्य भावः **शीतशोफता** । तथा त्वक्समानवर्णत्वम् , तथा **रुजः** स्तोकत्वम् , **अश्मवद्** घनस्पर्शता च स्यात् । हस्तादिना स्पृष्टः पाषाणतुल्यस्पर्श उपलक्ष्यते । तं तथाभूतं श्वयथुपाकं **रक्तपाकमित्येवं प्राज्ञो** धीमान् **ब्रूयात्** । न तु शोफं पक्वमिति कथयेत् । कथं, **मुक्तसंशयः** । शोणितं पक्वमत्र न तु शोफं पक्वमिति वदेदित्यर्थः । सद्वैद्यस्य मुक्तसंशयत्वम् । तथा च **सुश्रुतोक्तिः** — "कफजेषु तु खलु रोगेषु गम्भीरानुगतत्वात् केषु-चिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमप्यपक्वमिति मन्यमानो भिषङ् मोहमुपैति । यत्र हि त्वक्सवर्णता शीतशोफताऽश्मवद् घनता तत्र च न मोहमुपेयात् । भवति चात्र —

"आमं विदह्यमानं च सम्यक् पक्वं च यो भिषक् ।
जानीयात् स भवेद् वैद्यः शेषास्तस्करवृत्तयः ॥"

इति ॥ केचित्तु पक्वेषु केषुचित् कफजेषु विशेषलिङ्गोपदेश इत्याहुः । सौश्रुते केषुचिदित्युक्तत्वात् । ननु च शोफानां कफजत्वं तिसृष्ववस्थासु कस्यां ज्ञायते इति । आमावस्थायामुपलभ्यते प्रायशः । नेतरयोरवस्थयोः । कस्मात् । पच्य-मानावस्थायां सर्वलिङ्गोत्पत्तेः । पक्वावस्थायां लक्षणानभिव्यक्तेश्च । अपि च आमावस्थायामेव तल्लक्षणोपलब्धिः प्रयोजनवती । प्रतिदोषं तदुपशमोपलब्धेः । **प्राज्ञो मुक्तसंशय** इति । शीतशोफतादिनैव लिङ्गत्वमुपपाद्य लिङ्गिनः पाक-स्यावबोधकुशलः प्राज्ञ इत्यर्थः ।

अल्पसत्वेऽबले बाले पाके चात्यर्थमुद्धते ॥ १० ॥

दारणं मर्मसन्ध्यादिस्थिते चान्यत्र पाटनम् ।
आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः ॥ ११ ॥

रुजोऽतिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ।
तिष्ठन्नन्तः पुनः पूयः सिरास्नाय्वसृगामिषम् ॥ १२ ॥

विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः ।
यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥ १३ ॥

श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ।
प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ १४ ॥

पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाक्षमः ।
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ १५ ॥

अल्पेत्यादि । अथैनं रक्तपाकाख्यं शोफं सम्यक् पक्वं भित्त्वा अल्पसत्त्वादिषु जाते शोफे पाकाद्वा अत्यर्थमुद्धतेऽतिक्रान्ते दारणं कार्यम् । शोफे दारणं व्रणप्रतिषेधोक्तैर्दारणद्रव्यैः—

"गुग्गुल्वतसिगोदन्तस्वर्णक्षीरिकपोतविट् ।
क्षारौषधानि क्षारश्च पक्वशोफविदारणम् ॥"

इत्युक्तैः । न केवलमल्पसत्त्व इत्यादिके श्वयथौ दारणं कार्यम् । यावत् चशब्दान्मर्मसन्ध्यादिस्थिते च श्वयथौ दारणं कार्यं न पाटनं शस्त्रेण । पाठ्यकारस्तु— "दारणं कुर्यात् (മുറിച്ചുകളക) इत्याह । अन्यत्रेति । अन्यत्र दारणविषयादन्यत्र स्थाने शस्त्रेण पाटनं कार्यम् । पाटनं दीर्घच्छेदः । अबलो दुर्बलः । सर्वत्र आमस्य शोफस्य शस्त्रेण छेदे सति सिरास्नायुव्यापदो भवन्ति । तथा असृजोऽतिस्रावः स्यात् । तथा रुजाया अतिवृद्धिः अथवा दरणं, विसर्पो वा क्षतोद्भवः स्यात् । पक्वे पाके अतिक्रान्ते अन्तरे तु पूयस्तिष्ठन्नासीनः सन् सिरादीनि दहति । कथमिव तृणोलपमिवानलः तृणोलपं (പുല്ല്) । अज्ञानान्मोहादामं छिनत्ति यः योऽपि पक्वमुपेक्षते न पाटयति तौ नरौ श्वपचतुल्यावातुरव्यापादनं कुरुतो विधत्त इत्याह— अनिश्चितकारिणावसमीक्ष्यविधायिनौ आतुरव्यापादनात् श्वपचतुल्यौ । न वैद्यौ । श्वपचश्चण्डालः । शस्त्रकर्मणः प्राक्

**पूर्वमातुरमिष्टमन्नं भोजयेत्** । व्रणेऽपथ्यमपि तद्बलाधानार्थं योजयेदित्यर्थः । तथा **यो वेदनाक्षमः** शस्त्रव्यथासहिष्णुः तमातुरं मद्योचितं **तीक्ष्णं** तीव्रमदं **मद्यं पाययेत्** । एवं सति यत् स्यात् तदाह — **न मूर्च्छेत्यन्नसंयोगादन्नो**-पयोगान्न मुह्यति । तीक्ष्णमद्यपानान्मत्तः सन् शस्त्रमङ्गे न्यस्तं न बुध्यते न चेतयते । तं कृतान्नतया क्रम्यत इत्यर्थः ॥ १५ ॥

**अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ।**
**अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ १६ ॥**
**सम्मुखो यन्त्रयित्वाशु न्यसेन्मर्मादि वर्जयन् ।**
**अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ॥ १७ ॥**
**सकृदेवाहरेत्तच्च पाके तु सुमहत्यपि ।**
**पाटयेत् त्र्यङ्गुलं[1] सम्यग्द्व्यङ्गुलत्र्यङ्गुलान्तरम् ॥ १८ ॥**

अन्यत्रेत्यादि । **मूढगर्भादिभिर्य** आतुरस्तं वर्जयित्वा इष्टभोजनं मद्यपानं च कारयितव्यम् । अश्मशब्देनाश्मरी गम्यते । **अथेत्यादि** । **अथशब्दो** मङ्गलवाची । अथशब्देन मङ्गलवाचिना **सङ्ग्रहोक्तमर्थं** सुमुहूर्त-विप्रार्चनदेवतानमस्कारादिकं सूचयति । भिषजा उपक्रम्यस्य आयुश्च परीक्ष्य-मिति बोद्धव्यम् । तथा चोक्तं **सुश्रुते** — "आतुरमुपक्रम्यता वैद्येनायुरादित एव परीक्ष्यम् । सत्यायुषि अग्निवयोदेहबलसात्म्यसत्त्वप्रकृतिभेषजदेशकालांश्च परीक्षेत । तत्र महापाणिपादपृष्ठ स्निग्धस्तनाग्रदशनललाटं दीर्घाङ्गुलिपर्वो-च्छ्वासनेत्रबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वमेढ्रग्रीवं गम्भीरसत्त्वस्वरमित्येव-मादिलक्षणोपेतं पुरुषं जानीयाद् दीर्घायुः खल्वयम्" इति । तमेकान्तेनोपक्रमेत । **श्लोकश्चात्र** —

"गूढसन्धिसिरास्नावः संहताङ्गः स्थिरेन्द्रियः ।
उत्तरोत्तरसद्गात्रो यः स दीर्घायुरुच्यते ॥"

इति । सत्त्ववतः क्रिया कर्तव्येति चोक्तं यथा—"सत्त्ववतः क्रिया" । सत्त्वं सत्त्वगुणोत्कर्षः ।

"सत्त्ववान् सहते सर्वं सुखं दुःखं च मानवः ।
राजसः स्तभ्यमानस्तु सहते नैव तामसः ॥" इति ॥

अस्मिन्नप्युक्तम् —

"आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ।" इति ॥

---

1. द्व्यङ्गुलमिति मुद्रिताष्टाङ्गहृदयपाठः ।

वक्ष्यति च —

"अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते।
सत्त्ववान् स्तभ्यमानस्तु राजसो नैव तामसः॥" इति॥

तथा **आहृतं** ढौकितम्**उपकरणं** तत्कालयोग्यं पट्टशस्त्राग्निजाम्बवोष्ठपिचुप्रोतस्नेहमधुकल्कादिकं यस्यातुरस्य तम्**आतुरम्**। शस्त्रावचारणात् पूर्वमुपकरणानि कल्प्यानि। सुश्रुते चोक्तं— यथा 'छेद्यं, भेद्यं, लेख्यं, वेध्यं, आहार्यं, विस्राव्यं, एष्यं सीव्यं" इत्यष्टविधं शस्त्रकर्म। एषामन्यतमं चिकीर्षता वैद्येन पूर्वमेवोपकल्पयितव्यानि भवन्ति यन्त्रशस्त्रक्षाराग्निशलाकापिचुसूत्रमधुघृततैलतर्पणकषायलेपादयः परिचारकाश्च" इति। "आहृतोपकरणं सम्भृतोपकरणम्" इति हाटकः। उपकरणानि सिराव्यथप्रोक्तानि' इति पाठ्यकारः। **प्राङ्मुखं** पूर्वाभिमुखं परिकर्मिभिर्ग्राहयित्वेत्यर्थः। **संमुख**मासने उपविष्टं चेति बोद्धव्यम्। एवंविधमातुरं **वैद्यः संमुखो**ऽभिमुखः प्रत्यङ्मुखो **यन्त्रयित्वा** अचलनार्थं क्रियासौकर्यार्थं च **शस्त्रमाशु** अविलम्बितं **न्यसेत्** निक्षिपेत्। **मर्मादि वर्जयन्** मर्मसिरासन्ध्यादि परिहरन्। **भोजेन** चोक्तम् —

"प्रत्यङ्मुखो भवेद् वैद्यः प्राङ्मुखश्चातुरो भवेत्।
चत्वारः पुरुषा द्वौ वा परिगृह्णीयुरातुरम्॥"

इति॥ तथा **अनुलोमं** रोगशय्यानुकूलं कृत्वा; न प्रातिलोम्येन। अनुलोमं = (മുടിക്ക് ചെമ്മേ കീറുക) इति **पाठ्यकारः**। किम्भूतं शस्त्रं, **सुनिशितं** अतितीक्ष्णं **आपूयदर्शनान्न्यसेत्**। तच्च शस्त्रं **सकृदेवाहरेत्** छिन्द्यात्। न बहून् वारान्। **अरुणदत्त**स्त्वाह—'तच्च शस्त्रमापूयदर्शनादाहरेत्। नत्वाधिकं तत्रैव स्थाप्यम्। तच्च सकृदेव न बहून् वारान् न्यसेत्' इति। **सारकृ**दप्याह—'आपूयदर्शनात् सकृदेव न्यसेत्। आहरेत् तच्चेति पूयदर्शनानन्तरं तत्र न स्थाप्यमित्यर्थः। तत्र न पाटनं कुर्यादिति पिण्डितार्थः" इति।

उक्तं च **भोजेन** —

"तावत् प्रणिदधेच्छस्त्रं यावत् पूकोऽत्र दृश्यते।
निषिच्यमाने पूके तु पदं कुर्याद् विचक्षणः॥"

इति। पूकः पूयः। "अथेत्यादिविधानं सर्वेषामेव शस्त्रकर्मणां समानम्।" न्यसेत् सुनिशितं शस्त्रमापूयदर्शनादिति भेदने विशेषः। **इतरेषां** पुनर्विशेषांस्तत्र

तत्रोपदेक्ष्यति । इतरेषां शस्त्रकर्मणां विधानमनुक्त्वा भेदनविधेर्वचनं व्रणमूलस्य पक्वशोफस्य प्रतीकारार्थत्वात् भेदनस्य । **पाके तु सुमहत्यपि त्र्यङ्गुलं पाटयेत्** । त्र्यङ्गुलपरिमाणं व्रणं सम्यक् कुर्यात् नाधिकम् । अनेन परं शस्त्रपदप्रमाणं वर्ण्यते । अपिशब्दादेकेन पदेन दुःशोधनीयेषु नालीव्रणादिषु पदबहुत्वमपीष्टमिति द्योतयति । तत्र पदबहुत्वे विधानं कथयति — **द्व्यङ्गुलत्र्यङ्गुलान्तरमिति** । यत्र पाकस्यातिमहत्वापेक्षया बहूनि पदानि क्रियन्ते तत्राङ्गुलद्वयमथवाङ्गुलत्रयमन्तरीकृत्य पुनरन्यत् पूर्वप्रमाणं व्रणं कुर्यात् । न त्वासन्नम् । एवं व्रणकरणं स्रावादिरक्षणार्थम् । उक्तं च भोजेन —

"त्र्यङ्गुलं तु व्रणं कुर्याद् द्व्यङ्गुलं तु व्रणान्तरम् ।
पाकस्य वा प्रमाणेन पदं कुर्याद् विचक्षणः ॥

इति ॥ १८ ॥

भेदानन्तरं गतिज्ञानार्थमाह —

**एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ।**
**अङ्गुलीनालवालैर्वा यथादेशं यथाशयम् ॥ १९ ॥**

**एषित्वेत्यादि । एषिण्या सम्यगेषित्वा परितः** समन्तात् **सुनिरूपितं** पर्यालोचितम् । न केवलमेषिण्या यावदङ्गुल्यादिना । नातिविवृते पाके एषिण्या, अतिविवृते अङ्गुल्या नालेन वा पद्मोत्पलादिजेन, अतिसंवृते बालेन वराहादिसम्बन्धिना अन्वेष्य यथादेशं यथाशयं व्रणं कुर्यात् । यथादोषमिति वा पाठः । नालं तृणकाण्डमिति पाठ्यकारः ॥ १९ ॥

यथादेशं यथाशयमिति प्रोक्तम् । अतस्तच्च प्रदेशं दर्शयितुमाह—

**यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ।**
**तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ॥ २० ॥**
**आयतं च विशालं च तथा दोषो न तिष्ठति ।**
**शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथुः ॥ २१ ॥**
**असम्मोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ।**

**यत इत्यादि । यतो** यस्मिन् प्रदेशे **गतां** दूरायतां **गतिं** जानीयात् । तस्मिन् प्रदेशे व्रणं कुर्यात् । गतिः (७०१६१७३६०) । यत्र यत्र श्वयथुप्रदेशे

१. यथा इति मुद्रिताष्टाङ्गहृदयपाठः ।

उत्सङ्गं उन्नतिं विद्यात् । तत्र तत्र प्रदेशे व्रणं कुर्यात् । उत्सङ्गः उन्नतिः । शुष्कस्य पूयस्य संश्लेष इति केचित् । **पाठ्यकारोऽपि**—उत्सङ्गः (वा०ब्र ४।७७) इत्याह । किंभूतं व्रणं, **सुविभक्तं** पार्श्वापरपार्श्वाभ्याम्, अथवा दर्शनीयं अकरालमित्यर्थः । **अरुणदत्तोऽपि**— "सुष्ठु विभक्तं पार्श्वापरपार्श्वादि विभागो यस्य तं तथाविधम्" इत्याह । तथा **निराशयं** न विद्यते आशयः पूयादेर्दोषस्य स्थानं यस्य तं तथाभूतं निराशयं कुर्यात् । **हाटकोऽपि** "निराशयं निर्गतपूयस्थानमित्यर्थः" इत्याह । आशयम् (वाश्लाका०२०) तथायतं दीर्घं तथा **विशालं** विस्तीर्णं च **कुर्यात्** । **तथा** एवं कृते सति **दोषः** पूयाख्यो **न तिष्ठति** न स्थानं लभते । उक्तं च **सुश्रुते** — "भुक्तवन्तमातुरमुपवेश्य यन्त्रयित्वा मर्मसिरास्नावसन्ध्यस्थिधमनीः परिहरन् रोमशय्यानुकूलं शस्त्रं निदध्यात् अपूकदर्शनादिति । सकृदेवाहरेच्छस्त्रमाशु च महत्स्वपि च पाकेषु * त्र्यङ्गुलं शस्त्रपदमुक्तम् । तत्रायतत्वं विशालत्वं सुविभक्तत्वं व्रणगुणाः" इति । **शौर्येत्यादि** । **शस्त्रकर्मणि** वैद्यस्य शौर्यादिकं शस्यते । **शौर्यं** पाटनादौ वीर्यम् । सामर्थ्यमिति **हाटकः** । अध्यवसायान्तगामी शूरः । तस्य भावः शौर्यमिति वा । **आशुक्रिया** चतुरहस्तता । **तीक्ष्णं शस्त्रं** निशितशस्त्रवत्ता । **अस्वेदवेपथुः** न विद्यमानौ स्वेदवेपथू यस्य स एवम् । स्वेदाभावः कम्पाभावश्चेत्यर्थः । **हाटकोऽपि** — 'अस्वेदवेपथुः स्वेदराहित्यं हस्तादिकम्पाभावश्च' इत्याह । अस्वेदवेपथू इति वा पाठः । **असम्मोह**स्तत्कालोचितकार्यकरणे सम्यक् प्रवृत्तिः । ननु शौर्यं वैद्यस्य शस्यत इत्युक्त्यैव स्वेदकम्पाभावः प्रत्यपादि । तथा च स्वेदवेपथू भीरोरेव सम्भवतः । न तु शूरस्येत्यनर्थकमस्वेदवेपथुरिति । अत्राचक्ष्महे — सत्यमेतौ भीरुगुणौ । किन्तु उष्णकालवशात् प्रकृतिवशाद् वा यस्य स्वेदवेपथू भवतः तत्परिहारार्थमेतदुक्तम् । सस्वेदस्य हि वैद्यस्य शस्त्रकर्म कर्तुमुद्यतस्य शस्त्रग्रहणमेव न तथा सम्पद्यते । तद्वत् सकम्पस्यापि । तस्मात् तत्परिहारो युक्तः । 'शस्त्रकर्मण्यातुरस्य वैद्यस्य च शौर्यादिकं शस्यते' इति केचित् । अथवा अवेपथ्वन्तान्यातुरे वैद्ये च । कर्मण्यसम्मोहः शौर्यादिकं सर्वं वैद्यस्यैवेतीन्दुः ।

अनुलोमशस्त्रपदस्येदानीमपवादः —

**तिर्यक् छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ॥ २२ ॥**

**कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवङ्क्षणे ।**

---

* घङ्गुलं त्र्यङ्गुलान्तरं वेति मुद्रितसुश्रुते ।

अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ॥ २३ ॥

तिर्यगित्यादि । ललाटादिदेशे तेषां संस्थानात् तिर्यक् छिन्द्यात् भिन्द्यादित्यर्थः । उक्तं च —

"आमच्छेदे सिराच्छेदे स्नायुकन्धरयोरपि ।
तथा तिर्यक् प्रकारे तु छेदशब्दः प्रपठ्यते ॥"

इति । ललाटादिदेशे तिर्यक्छेदः कार्यः रोमशय्यानपेक्षम् । दन्तवेष्टकं दन्तपीठिका दन्ताधार उच्यते । अन्यत्र प्रदेशे तिर्यक् छेदनात् सिराणां स्नायूनां वा व्यापत्तिः स्यात् ॥ २३ ॥

शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् ।
आश्वास्य परितोऽङ्गुल्या परिपीड्य व्रणं ततः ॥ २४ ॥
क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ।
गुग्गुल्वगुरुसिद्धार्थहिङ्गुसर्जरसान्वितैः ॥ २५ ॥
धूपयेत् पटुषड्ग्रन्थानिम्बपत्रैर्घृतद्रुतैः ।
तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ २६ ॥
दिग्धां वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च ताम् ।
घृताक्तैः सक्तुभिश्चोर्ध्वं घनां कबलिकां ततः ॥ २७ ॥
निधाय युक्त्या बध्नीयात् पट्टेन सुसमाहितः ।
पार्श्वे सव्येऽपसव्ये वा नाधस्तान्नैव चोपरि ॥ २८ ॥

शस्त्रे अवचारिते न्यस्ते सति वाग्भिस्तत्कालोचिताभिर्मधुराभिः स्वस्थो जातोऽसीत्येवंविधाभिराश्वास्य तथा शीताम्भोभिः परिषेकादिभिरातुरमाश्वास्यानन्तरं व्रणं परितः समन्तादङ्गुल्या प्रपीड्य पूयादिदोषनिर्हरणाय ततः अनन्तरं कषायेण यष्ट्यादिसिद्धेन क्षालयित्वा ततः प्लोतेन कार्पासादिजेन वस्त्रखण्डेन जलमपनीय हृत्वा अनन्तरं व्रणं गुल्गुल्वादिभिर्निम्बपत्रान्तैर्धूपयेत् । किम्भूतैः, घृतद्रुतैः द्रुतग्रहणाद् बहुघृतैरिति द्योतयति । सङ्ग्रहे चोक्तम्— "गुग्गुल्वादिभिरेव चाशयं धूपयेद्" इति । षड्ग्रन्था (വയമ്പ്) ततोऽनन्तरं वर्तिं कार्पासादिमयीं दद्यात् व्रणस्यान्तः प्रवेशयेत् । वर्तिः (അകത്തിരി) । किंभूतां, दिग्धामुपलिप्तां कैः तिलकल्कादिभिः । एषां हि सर्वव्रणहरत्वम् । तस्मात् सर्वैरेव तिलकल्कादिभिर्युगपद्दिग्धाम् । न केवलं

तिलकल्कादिभिः यथास्वं भेषजेन च यद्यस्य दोषस्य स्वं भेषजं तेन दिग्धाम् । हाटकोऽपि — 'तिलकल्कादीभिर्दोषानुरूपभेषजेन च दिग्धाम्' इत्याह । इन्दुकारोऽपि — 'यथास्वं भेषजेन वातादिहरौषधेन' इत्याह । अरुणदत्तस्त्वाह — तिलकल्काज्यमधुभिर्वातादिषु यथाक्रमं दिग्धां वातव्रणे तिलकल्कदिग्धां पित्तव्रणे घृतदिग्धां कफव्रणे मधुदिग्धां यथास्वं भेषजेन वा दिग्धाम्' इति । तैरेव च तिलकल्कादिभिस्तां वर्तिं व्रणान्तःप्रविष्टां शिष्टामाच्छादयेत् स्थगयेत् । ऊर्ध्वं तत उपरिष्टाद् घृताक्तैः सक्तुभिर्नातिभृष्टैः यवसक्तुभिराच्छादयेत् । ततो वर्तिच्छादनानन्तरं कवलिकां बहुवस्त्रखण्डपुटनिर्वर्तितां निधाय संस्थाप्य पट्टेन विशिष्टवस्त्रखण्डेन प्रकृतत्वाद् व्रणं युक्त्या दोषकालानुगुणया बध्नीयात् । युक्तिश्च सङ्ग्रहोक्ता —

'वातश्लेष्मोद्भवांस्तत्र द्विस्त्रिर्वा वेष्टयेद् व्रणान् ।
सकृदेव परिक्षिप्य रक्तपित्ताभिघातजान् ॥'

शस्त्रक्षतरुजायां तु यष्टीमधुकसिद्धेन सर्पिषोष्णेन सेचयेत्' इति । कथं बध्नीयात्, सुसमाहितः न हेलया । सव्ये वामपार्श्वे अपसव्ये दक्षिणपार्श्वे वा अधस्तान्न बध्नीयात् । नैव चोर्ध्वं बध्नीयात् ॥ २४–२८ ॥

**शुचिसूक्ष्मदृढाः पट्टाः कवल्यः सविकेशिकाः ।**
**धूपिता मृदवः श्लक्ष्णा निर्वलीका व्रणे हिताः ॥ २९ ॥**

**कुर्वीतानन्तरं तस्य रक्षां रक्षोनिषिद्धये ।**
**बलिं चोपहरेत्तेभ्यः सदा मूर्ध्नावधारयेत् ॥ ३० ॥**

तथा शुचयः सूक्ष्मसूत्राः दृढाः पट्टा हिताः । तथा कवलिकाः सविकेशिकाः विकेशिकाश्च व्रणे हिताः । कवलिका (പറത്തകഴി) । विकेशिका (തകഴി) । वर्तिरित्यस्मद्गुरवः । किंभूताः, धूपिताः तथा मृदवः तथा श्लक्ष्णाः तथा वलीरहिताः । अनन्तरं रोगिणः कृतशस्त्रकर्मणो व्रणे रक्षां कुर्यात् । किमर्थं, रक्षोनिषिद्धये पिशिताशनराक्षसादिनिषेधाय । रक्षा तेभ्यश्च रक्षोभ्यो बलिमुपहरेत् दद्यात् । सर्वकालं च ओषधीर्मूर्ध्ना धारयेत् ॥ २९–३० ॥

ता एवाह लक्ष्मीमित्यादिना —

लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।
वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ ३१ ॥

ततः स्नेहदिनेहोक्तं तस्याचारं समादिशेत् ।
दिवास्वप्नो व्रणे कण्डूरागरुक्शोफपूयकृत् ॥ ३२ ॥

स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलितस्रुते ।
शुक्रे व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥ ३३ ॥

लक्ष्मीः पद्मचारिणी । गुहा पृश्निपर्णी (ഓരില വള്ളി)। अतिगुहा सालपर्णी – (മൂവില)। 'कश्मीरजे सोमसमे' इति केचित् । जटिला मांसी । ब्रह्मचारिणी ब्रह्मयष्टिका (തിണ്ടാംമാഴ്കി)। वचा उग्रगन्धा । छत्रा शतपुष्पा (ചതകുപ്പ)। इति पाठ्यकारः । अतिछत्रा विषाणिका (ആട്ടുകൊട്ടപാല)। "छत्राधिच्छत्रिके विद्याद् रक्षोघ्ने कन्दसम्भवे' इति सौश्रुते । सिद्धार्थकं श्वेतसर्षपम् । ततोऽनन्तरं व्रणिन आचारमादिशेत् । कतमं स्नेहदिनेहोक्तं स्नेहस्य दिनं पानोपलक्षितमहः तत्रेष्टा चेष्टा तस्यामुक्तं स्नेहपानविध्युक्तम् । "उष्णोदकोपचारी स्याद्" इत्यादिकम् । दिवेति । दिवास्वप्नो व्रणे कण्ड्वादिकृत् । तस्माद् व्रणिना अहःस्वप्नो न सेव्यः । स्त्रीणां स्मृतिसंस्पर्शदर्शनैः पूर्वं स्वस्थानाच्चलितं पश्चात् स्रुतं तस्मिंश्चलितस्रुते शुक्रे सति असंसर्गेऽपि तासामसम्बन्धेऽपि मैथुनमन्तरेणापीत्यर्थः । व्यवायजान् दोषान् मैथुनोत्थान दोषानवाप्नुयात् । तस्मात् स्त्रीस्मरणस्पर्शनदर्शनानि वर्ज्यानीत्यर्थः । स्त्रीणां त्विति तुशब्दोऽवधारणे । स्त्रीणां स्मृत्यादिभिरेव दोषो भवत्यसंसर्गेऽपि इति सूचयितुम् । उक्तं च —

"व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वप्नात् ते च मृत्युश्च मैथुनात् ॥

इति ॥ ३१-३३ ॥

भोजनं तु यथासात्म्यं यवगोधूमषष्टिकाः ।
मसूरमुद्गतुवरीजीवन्तीसुनिषण्णकाः ॥ ३४ ॥
बालमूलकवार्ताकतण्डुलीयकवास्तुकम् ।
कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ३५ ॥
सैन्धवं दाडिमं धात्री घृतं तप्तहिमं जलम् ।
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥ ३६ ॥
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ।
अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ ३७ ॥
अजीर्णादनिलादीनां विभ्रमो बलवान् भवेत् ।
ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ ३८ ॥
नवधान्यं तिलान्माषान्मद्यं मांसं त्वजाङ्गलम् ।
क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३९ ॥
यच्चान्यदपि विष्टम्भि विदाहि गुरु शीतलम् ।
वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ ४० ॥
मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद् व्रणम् ।
वालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ॥ ४१ ॥
न तुदेन्न च कण्डूयेच्चेष्टमानश्च पालयेत् ।

भोजनं यथासात्म्यं यवादि यद्यस्य सात्म्यम् । तथा जीवन्त्यादिशाकं च । तथा सैन्धवादिकम् । पुराणशालिभक्तं स्निग्धं सस्नेहं तथाल्पं जाङ्गलैर्मांसैः सह भुञ्जानः उष्णोदकोत्तरमुष्णोदकानुपानं यथा भवति । व्रणी शीघ्रं व्रणमपोहति । मात्रया काले भुक्तं पथ्यं सुखेन जरां याति । तस्मात् पथ्यं मात्रया काले भोक्तव्यम् । अजीर्णं तु न कथञ्चन कार्यम् । यतोऽजीर्णादनिलादीनां वातादीनां बलवान् विभ्रमः क्षोभो भवेत् । ततस्तस्मात् क्षोभाच्छोफादीन् प्राप्नुयात् । नवधान्यादींस्त्यजेत् । यतोऽयं नवधान्यादिवर्गो व्रणिनः सर्वान् दोषान् करोति ।

मद्यं तीक्ष्णादिगुणयुक्तमाशु व्रणं व्यापादयेत् अतिशयेन करोति नान्यन्मद्यम् । तथा च तन्त्रान्तरे —

---

१. 'अजीर्णे त्व' मुद्रिताष्टाङ्गहृदयपाठः.

"सस्नेहं मधुरमाद्यं नातितीक्ष्णमकर्कशम् ।
तनु यत् सुखपेयं च मार्द्वीकेषु तदुत्तमम् ॥" इति ।

तस्मान्मार्द्वीकादिमाद्यं लोध्रासवादिकं यन्मद्यं तत् तस्मात्स्यस्य किञ्चिद् देयमेवेत्यर्थः । **वालोशीरैश्चैनं** व्रणं वीजयेत् । **न चैनं परिघट्टयेत्** । न व्यथयेत् । नापि कण्डूयेत् । चेष्टमानश्च व्यापारं कुर्वन् तं व्रणं पालयेत् रक्षेत् । चेष्टमानमिति केषाञ्चित् पाठः । व्यापारं कुर्वन्तं व्रणिनं पालयेदिति ।

**स्निग्धवृद्धद्विजातीनां कथाः शृण्वन् मनःप्रियाः ॥ ४२ ॥**

**आशावान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ।**
**तृतीयेऽह्नि पुनः कुर्याद् व्रणकर्म च पूर्ववत् ॥ ४३ ॥**

**प्रक्षालनादि दिवसे द्वितीये नाचरेत् तथा ।**
**तीव्रव्य*थोऽतिग्रथितश्चिरात्संरोहति व्रणः ॥ ४४ ॥**

**स्निग्धां रूक्षां श्लथां गाढां दुर्न्यस्तां च विकेशिकाम् ।**
**व्रणे न दद्यात्कल्कं च, स्नेहात्क्लेदो विवर्धते ॥ ४५ ॥**

**मांसच्छेदोऽतिरुग्रौक्ष्याद्दरणं शोणितागमः ।**
**श्लथातिगाढदुर्न्यासैः व्रणवर्त्मावघर्षणम् ॥ ४६ ॥**

**सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् ।**
**व्रणं विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका ॥ ४७ ॥**

स्निग्धादीनां कथाश्चित्तप्रिया आकर्णयन् रोगमुक्तये विहिताशोऽद्वाय व्रणमपोहति । तृतीये च दिवसे पुनरपि प्रक्षालनादि व्रणकर्म पूर्ववत् पूर्वेण व्रणकर्मणा तुल्यं कुर्यात् । द्वितीये तु दिवसे प्रक्षालनादि नाचरेत् । किमित्याह — तथेत्यादि । तथा तेन प्रकारेण तीव्रव्यथः सम्पद्यते । तथातिग्रथितः स प्रदेशो बहुभिर्ग्रन्थिभिर्युक्तः स्यात् । तथा चिरात् चिरेण कालेन संरोहति संरोहणं याति । रूढः सम्पद्यते । इन्दुरप्याह — "तथा कृते सति तीव्रव्यथः सम्पद्यते । ग्रथितो बहुग्रन्थिभिर्युक्तः चिरकालेन व्रणो रूढश्च भवति" इति । अतिग्रथित इति

* "थो वि" इति मुद्रिताष्टाङ्गहृदयपाठः

वा पाठः । **स्निग्धामित्यादि** । व्रणे व्रणाख्य आधारे स्निग्धादिगुणयुक्तां विकेशिकां व्रणान्तःप्रवेशयोग्यां वर्तिं न दद्यात् । स्निग्धां रूक्षामिति अतिस्निग्धामतिरूक्षामिति सिध्यत्यर्थवशात् । सङ्ग्रहे स्पष्टमुक्तं "अतिस्नेहात् क्लेदः" इति । अरुणदत्तोऽप्याह "अत्र चातिशब्दोऽर्थवशात् गम्यमानो बोद्धव्यः । अत एव सङ्ग्रहे स्पष्टं कृत्वोवाच इति" । हाटकोऽपि— "अतिशब्दोऽत्राध्याहार्यः । अतिस्नेहात् क्लेदः अतिरौक्ष्याच्छेदो वेदना चेत्येवं सङ्ग्रह उक्तत्वात्" इत्याह । **श्लथां** शिथिलां **गाढां** निबिडां **दुर्न्यस्तां** च विषमन्यस्तां, कल्कं वा कल्कमप्यतिस्निग्धादिगुणयुक्तं व्रणे न योजयेत् । पिष्टमौषधं द्रवाप्लुतं कल्क इत्युच्यते । कुतः स्निग्धादिगुणयुक्तां विकेशिकां कल्कं वा न दद्यादित्याह । **स्नेहात् क्लेदो विवर्धते** । अतिरूक्षत्वान्मांसस्य छेदोऽतिरुक् दरणं रक्तप्रवृत्तिश्च स्यात् । श्लथादिगुणयुक्तेन व्रणमार्गस्यावघर्षणं स्यात् विकेशिका व्रणे कस्माद्दीयत इत्याह — **सपूतीत्यादिगुणयुक्तं** व्रणं शोधयते यतः तस्माद् व्रणेऽसौ योज्या । **उत्सङ्ग** उन्नतिः । पूयादिभक्षितस्शून्यो मांसादिप्रदेशो गतिरित्युच्यते । **पूयश्चासौ गर्भश्च** स विद्यते यस्य स **पूयगर्भा तम्** ॥

**व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।**
**भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ४८ ॥**

**सद्यः सद्योव्रणान्सीव्येद् विवृतानभिघातजान् ।**
**मेदोजान् लिखितान् ग्रन्थीन् ह्रस्वाः पालीश्च कर्णयोः ॥ ४९ ॥**

**शिरोऽक्षिकूटनासौष्ठगण्डकर्णोरुबाहुषु ।**
**ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ॥ ५० ॥**

**गभीरेषु प्रदेशेषु मांसलेष्वचलेषु च ।**

**व्यम्लमित्यादि** । व्यम्लं पक्वापक्वं ईषत्पक्वमित्यर्थः । तथाविधं पक्वमित्यज्ञानात् पाटितं शोफं नातिव्रणविरोधिभिः पाचनैरन्नपानैः तथावि-

घैश्चोपनाहैः साल्वलाख्यैर्वचाकिण्वादिकल्पितैरुपाचरेत् । न च सर्वैरेव पाचनैरुपाचरेदिति द्योतयति नानिशब्दप्रयोगेण । सद्य इत्यादि । सद्योव्रणान् शस्त्राभिघातजान् विवृतान् विस्तीर्णमुखान् सद्यस्तत्क्षणादेव सीव्येत् । सङ्कुचितवदनांस्तु न सीव्येत् । अभिघाताज्जन्म येषां तान्, एवं सद्योव्रणानिति सद्योग्रहणमभिघातजेष्वपि चिरकालस्थितेषु नायं विधिरिति द्योतयति । मेदोजान् ग्रन्थीन् लिखितान् भेदनानन्तरं शस्त्रेण लिखितान् सीव्येत् । कर्णयोश्च ह्रस्वाः पालीर्लिखिताः सीव्येत् । शिरोऽक्षिप्रभृतिषु प्रदेशेषु प्रभूतमांसेषु च स्थिरेषु च स्थितान् व्रणान् सीव्येत् ॥

वङ्क्षणादिस्थितानां व्रणानां गंभीरादिप्रदेशत्वात् सीवनं प्राप्तं; तन्निषिध्यते—

न तु वङ्क्षणकक्षादावल्पमांसचले व्रणान् ॥ ५१ ॥

वायुनिर्वाहिणः[1] शल्यगर्भान्क्षारविषाग्निजान् ।

न तु वङ्क्षणेत्यादि । मांसलेषु स्थिरेषु च व्रणान् सीव्येद् इत्युक्त्यैवाल्पमांसे चले स्थाने व्रणान् न सीव्येद् इत्यर्थे लब्धे अल्पमांसांश्चलांश्च व्रणान् न सीव्येदिति वचनमतिशयार्थम् । न जातुचिदभिघातजान् विवृताननानपि सीव्येदिति गमयति । तथा ये वायुं निर्वमन्ति उद्वमान्ति निश्वसन्तीत्यर्थः । तान् वायुनिर्वाहिणो न सीव्येत् । तथा शल्यगर्भान् शल्यं गर्भे येषां तान् तथा क्षारविषाग्निजान् क्षारविषाग्निभ्यो जातान् व्रणान् न सीव्येत् ।

सीवनात् पूर्वं यत् क्रियते तद् दर्शयति—

सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ॥ ५२ ॥

प्रलम्बि मांसं विच्छिन्नं निवेश्य स्वनिवेशने ।
सन्ध्यस्थ्यवस्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ॥ ५३ ॥

सीव्येदित्यादि । स्थानाच्चलितमस्थि अपनीय निरस्य तथा शुष्करक्तं तृणानि रोमाणि चापास्य सीव्येत् । तथा शस्त्रादिना प्रकर्षाल्लम्बि व्रणे यद् विद्यते मांसं तत् स्वनिवेशने आत्मीये स्थाने निवेश्य संस्थाप्य तथा सन्ध्यस्थि बहिर्गतं स्वस्थाने संस्थाप्य रक्ते च स्थिते असम्बद्धरूपत्वं प्राप्ते सति व्रणं

१. 'हिणः'. इति मुद्रिताष्टाङ्गहृदयपाठः.

सीव्यते । अनेकाभित्तानां व्रणोष्ठानामेकेन सूत्रेण यथायोगं जीर्णयज्ञसम्बन्धकरणं सीवनम् । केन सीव्येत्, स्नाय्वादिना वल्कलैरश्मन्तकादित्वगुद्भवैः ॥

कथं सीव्येदित्याह—

सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु ।
सान्त्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रुतैः ॥ ५४ ॥

अञ्जनक्षौमजमषीफलिनीशल्लकीफलैः ।
सरोध्रमधुकैरक्ते युञ्ज्याद् बन्धादि पूर्ववत् ॥ ५५ ॥

न दूरे न विप्रकृष्टे न चासन्ने नातिनिकटे नाल्पं व्रणान्तं गृह्णन् न च बहु व्रणान्तं गृह्णन् । ततः सीवनादनन्तरमातुरं सान्त्वयित्वा समाश्वास्य शीताम्बुस्पर्शव्यजनादिभिरनन्तरं अक्ते लिप्ते व्रणे सति । कैः अञ्जनादिभिः । किं भूतैः, मधुघृताभ्यां द्रुतैः आलोलितैः । द्रवैः इति वा पाठः । पूर्ववद् बन्धादि युञ्ज्यात् । तृतीयार्थे वतिः । पूर्वोद्दिष्टेन कर्मणा तुल्यं कषायक्षालनादि कवलिकादिकं च योज्यमित्यर्थः ॥ ५५ ॥

व्रणो निःशोणितौष्ठो यः किञ्चिदेवावलिख्य तम् ।
संजातरुधिरं सीव्येत् सन्धानं ह्यस्य शोणितम् ॥ ५६ ॥

बन्धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च ।

व्रण इत्यादि । अविद्यमानशोणितावोष्ठौ यस्य तमेवंभूतं व्रणं किञ्चिदेव ईषन्मात्रमेवावलिख्य ततः संजातरुधिरं सन्तं सीव्येत् न त्वेवमेव, यस्मादस्य व्रणस्य शोणितं सन्धानम् । बध्यते व्रण एभिरिति बन्धनानि आविकाजिनादीनि । तेषु व्रणेषु देशकालसात्म्यादीन् वीक्ष्य निरूप्य यथायोगमाविकाजिनाद्यन्यतमं युञ्ज्यात् ।

तेषां च बन्धनानां स्वरूपमाह—

आविकाजिनकौशेयमुष्णं क्षौमं तु शीतलम् ॥ ५७ ॥
शीतोष्णं तूलसन्तानकार्पासस्नायुवल्कजम् ।
ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ॥ ५८ ॥

भङ्गे च युञ्ज्यात्फलकं चर्मवल्ककुशादि च ।

---

१. दिग्धे इति मुद्रिताष्टाङ्गहृदयपाठः

आविकेत्यादि। अविरेवाविकः "अवेः कः" ५-४-२८ इति कः। ततः "तस्येदम्" ४-३-१२० इत्यण्। अविरोमभवामित्यर्थः। अजिनं मृगादीनां चर्म। कोशात् सम्भूतं कौशेयम्। "कोशाड्ढञ्" ४-३-२ इति ढञ्। आविकादिकं बन्धनत्रयमुष्णवीर्यम्। तेषु बन्धनेषु मध्ये आविकादिकमुष्णमिति वान्वयः। आविकाजिनम् अवेराजिनमिति हाटकादयः। क्षौमं वाल्कं बन्धनं शीतलं शीतवीर्यम्। तूलसन्तानादिजं शीतोष्णमुभयस्वरूपम्। तूलं शल्मल्यादिजं तस्य सन्तानं-सन्ततिः सूत्ररूपता तेन निष्पादितम्। पाठ्यकारोऽप्याह— "तूलसन्तानं=(പഞ്ഞി)। कार्पासं=(പരുത്തി)। वल्कं=(മരത്തോൽ) इति। मेदःकफाधिके व्रणे ताम्रादीनि लेखनार्थं युञ्ज्यात्। चशब्दात् तानि भङ्गेऽपि युञ्ज्यात्। न केवलं भङ्गे ताम्रादीनि युञ्ज्यात् यावत्फलकादि च युञ्ज्यात्। कुशाशब्देन वंशादिविकारा उच्यन्ते। ताम्रायस्त्रपुसीसानीत्यादिना बन्धावष्टम्भकानि यन्त्रकाणि ब्रूत इति केषाञ्चित् पक्षः। भोजेनाप्युक्तम् —

"ऊर्ध्वं तिर्यगधस्ताच्च यन्त्रकस्त्रिविधः स्मृतः।
यो यत्र सुनिविष्टः स्याद् देहे तं तत्र योजयेत्॥"

इति॥

अधुना बन्धनप्रकारं निर्दिशति—

**स्वनामानुगताकारा बन्धास्तु दश पञ्च च॥ ५९॥**
**कोशस्वस्तिकमूतोलीचीनदामानुवेल्लितम्।**
**खट्वाविबन्धस्थगिकावितानोत्सङ्गगोष्फणाः॥ ६०॥**

**यमकं मण्डलाख्यं च पञ्चाङ्गी चेति योजयेत्।**
**यो यत्र सुनिविष्टः स्यात्तं तेषां तत्र बुद्धिमान्॥ ६१॥**

स्वनामेत्यादि। स्वं च तन्नाम च स्वनाम तेनानुगतोऽनुबद्ध आकार संस्थानविशेषो येषां ते पञ्चदश बन्धाः वक्ष्यमाणाः। तुशब्दोऽवधारणार्थः। पञ्चदशैव कोशादयः पञ्चाङ्ग्यन्ताः। स्वनामानुगताकारा इति। कोशाकारः कोशबन्धः कोशः=(ഉറക്കെട്ട്)। स्वस्तिकाकारः स्वस्तिकः=(പാവിൽമരക്കെട്ട്)। मूतोलीति तृणमयः फलाधारः तद्वन्मूतोलिबन्धः=

---

१. "मुत्ता" २. "स्थगिका". इति मुद्रिताष्टाङ्गहृदयपाठः।

(പൊതിക്കെട്ട്)। चीनैर्यो बन्धः स चीनबन्धः स्तो कविस्तीर्णा आयतपट्टिका चीनशब्दवच्या कक्ष्यासांज्ञिता च। चीनम्=(കിളിമട)। दामाकृति दाम यथांसमाला निक्षिप्यते। दाम=(പിണയൽ)। लतानुवेल्लितमिवानुवेल्लितम्=(വേലിക്കെട്ട്)। यद् दीर्घं कृत्वा वेष्टनम्। खट्वाबन्धाकारो बन्धः खट्वा=(കട്ടിൽക്കെട്ട്)। विस्तीर्णो बन्धो विबन्धः। उक्तं च भोजेन—

"विबन्धं तु विजानीयाद् व्रणे मूर्ध्नि वितानवत्।
पाणिपाददतले वापि तथांसोदरयोरपि॥"

इति। विबन्धम्=(മുഷിലടി. വിട്ടുകെട്ട് എന്നു ചിലർ) स्थविका शिक्या तदाकारो बन्धः। स्थविका=(ഉറിക്കെട്ട്)। वितानमिव वितानं=(മേക്കട്ടിപ്പം) उत्सङ्गमिवोत्सङ्गं=(പാളക്കെട്ട്)। गोष्फणमिव गोष्फणः 'कवण'-नामधेयः (കോവിണക്കെട്ട്)। भोजेनाप्युक्तम्—

"गोष्फणं गोष्फणाकारं बध्येच्छ्रोण्यूरुसङ्गमे।
स्फिगन्तरगतांश्चैव वस्तियोन्याश्रयान् व्रणान्॥"

इति। यमकः एकेन पट्टेन व्रणद्वयबन्धः। उक्तं च भोजेन—

"बाहुपार्श्वोदरोरस्सु पृष्ठे चैव भिषग्वरः।
बध्नीयान्मण्डलाकारं स बन्धो यमकः स्मृतः॥"

इति। यमकम्=(ഇരട്ടക്കെട്ട്) मण्डलमापादं वेष्टनाकारम्। उक्तं च भोजेन—

"मण्डलं वेष्टनाकारं स्तनबाहूदरोरुषु।
कृकाटान्ते ललाटे च ग्रीवायां च प्रशस्यते॥"

इति। पञ्चाङ्गी यस्मिन् पट्टे चत्वारो बाहवः एका चोर्ध्वे पट्टिका। पञ्चाङ्गीति प्रथमान्तः पाठः। अपरे द्वितीयान्तं पठन्ति। इति योजयेत् कारयेद् इत्यर्थः। य इत्यादि। तेषां बन्धानां मध्ये यो बन्धविशेषो यत्र यस्मिन् देहदेशे सुनिविष्टो भवेत् तं बन्धं कोशादिकं तत्र तस्मिन् देहदेशे योजयेत्। कथं, तत्र कोशोऽङ्गुलीपर्वसु चर्मादिकृतः। स्वस्तिकं स्तनान्तरकक्ष्याक्षिकर्णेषु। मुतोली ग्रीवामेढ्रयोरित्यादि विज्ञेयम्। हाटकोऽप्याह—

"कोशाकारं कीटस्येवाङ्गुलीपर्वसु विदध्यात्। स्वस्तिकाकृतिः स्वस्तिकम्। यदूर्ध्वे दक्षिणादित्याधो वामं याति पुनः परिवृत्याधो दक्षिणादूर्ध्वे वामं तत्सन्धि-कूर्चभ्रूस्तनान्तरकक्ष्याक्षिकपोलकर्णेषु योज्यम्। मूतोली=तृणमयः फलाधारः ग्रीवामेढ्योः। चीनं स्तोकविस्तीर्णायत पट्टिका तदपाङ्गयोः। दाम गोदामा-कृति सम्बाधेऽङ्गे वङ्क्षणादौ। अनुवेल्लितं शाखासु। खट्वा हनुसन्धिगण्डेषु। विबन्धमुदरोरुपृष्ठेषु। स्था का अङ्गुष्ठाङ्गुलिमेढ्राग्रमूत्रवृद्धिषु। वितानं मूर्धादौ पृथुलेऽङ्गे। उत्सङ्गमङ्गविशेषे विलम्बिनि बाह्वादौ। गोष्फण इव गोष्फणं कृषीपा-लानां पक्षिवारणाय श्राम्यत्पाषाणधारणम्। तन्नासौष्ठचिबुकसन्धिषु। यमकं यमक-व्रणयोः। मण्डलं वृत्तेऽङ्गे स्तनादौ। पञ्चाङ्गी जत्रूर्ध्वमिति योजना कार्या"॥ इति।

सम्प्रत्येषां बन्धानां देशाद्यनुरोधाद् व्रणायतनविशेषाद् गाढादिकं त्रैविध्यं दर्शयति —

**बध्नीयाद्गाढमूरुस्फिक्कक्षावंक्षणमूर्धसु।**
**शाखावदनकर्णोरःपृष्ठपार्श्वगलोदरे॥ ६२॥**

**समं मेहनमुष्के च नेत्रे सन्धिषु च श्लथम्।**
**बध्नीयाच्छिथिलस्थाने वातश्लेष्मोद्भवौ समम्॥ ६३॥**

**गाढमेव समस्थाने भृशं गाढं तदाश्रये।**
**शीते वसन्ते च तथा मोक्षणीयौ त्र्यहात् त्र्यहात्॥ ६४॥**

**बध्नीयादित्यादि।** ऊरुस्फिगादिषु देशेषु **गाढं** व्रणपीडनं **बध्नीयात्।** न तु श्लथम्। वृद्धाकारोऽप्याह — बध्नीयादित्यादिना दोषस्थानकाल-विशेषेण गाढादिबन्धनभेदानाह। पीडयन् रुजामनुत्पादयन् गाढः। सोच्छ्वासः शिथिलः। समस्तु मध्यभाक्। उक्तं हि —

पीडयन्नरुजो गाढः सोच्छ्वासः शिथिलः स्मृतः।
नैव गाढो न शिथिलः समो बन्धस्तु कीर्तितः॥"

इति। **शाखावदनादिषु समं** बन्धं बध्नीयात्। चशब्दान्मेहनमुष्कयोश्च सममेव। **नेत्रे** नयने तथा **सन्धिषु च श्लथं** शिथिलं सोच्छ्वासं बन्धं बध्नीयात्। इदानीं दोषविशेषतो बन्धान्निर्दिशति। **शिथिलस्थान इत्यादि।** **शिथिलस्थाने** नेत्रादौ। यत्र स्थाने शिथिलो बन्ध उपदिष्टः तत्र स्थाने यौ

व्रणौ वातश्लेष्मोद्भवौ तौ समं कृत्वा बध्नीयात् । न तु गाढं न शिथिलम् । समस्थाने यत्र स्थाने समो बन्ध उपदिष्टः तत्र स्थाने शाखादौ वातश्लेष्मोद्भवौ व्रणौ गाढमेव बध्नीयात् । भृशमित्यादि । "तदित्यनेन गाढाश्रयः परामृश्यते । तदाश्रये गाढाश्रये गाढबन्धोद्दिष्टे स्थाने ऊर्वादौ वातश्लेष्मोद्भवौ व्रणौ भृशं सुतरां गाढं बध्नीयात् । तौ वातश्लेष्मोद्भवौ शीते हेमन्तशिशिराख्ये काले वसन्ते च त्र्यहात् त्र्यहात् त्रिदिनं त्रिदिनमन्तरीकृत्य मोक्षणीयौ मोक्षणार्हौ" इत्यरुणदत्तहृद्याकारौ प्रोचतुः । 'तृतीये दिवसे' इति सारकृत् । भोजेनाप्युक्तम् —

"द्वितीयेऽहनि तु ग्रीष्मे तृतीये तु हिमागमे ।
सततं च वसन्तेषु मोक्षयेत व्रणान् भिषक् ॥" इति ।

मोक्षकालात्ययाद् व्रणस्यानेकोपद्रवोत्पत्तिरिति विज्ञेयम् । उक्तं हि भोजेन —

"मोक्षकालात्ययात् पूकः सन्तापाद् दूषिते व्रणे ।
त्वङ्मांसे दूषयंस्तत्र भूयः पाकं न गच्छति ॥

जन्तूंश्च जनयेत् तत्र गन्धं वा कुणपोपमम् ।
तस्मात् कालमनुप्राप्य मोक्षयेत व्रणं भिषक् ॥

इति ॥ ६४ ॥

पित्तरक्तोत्थयोर्बन्धो गाढस्थाने समो मतः ।
समस्थाने श्लथो नैव शिथिलस्याश्रये तथा ॥ ६५ ॥
सायंप्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते ।
अबद्धो दंशमशकशीतवातादिपीडितः ॥ ६६ ॥
दुष्टीभवेच्चिरं चात्र न तिष्ठेत्स्नेहभेषजम् ।
कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम् ॥ ६७ ॥

पित्तरक्तोत्थयोर्व्रणयोर्गाढबन्धस्थाने समो बन्धो मतः न शिथिलः । समबन्धस्थाने शाखावदनादौ पित्तरक्तोत्थयोर्व्रणयोः शिथिलो बन्धः कार्यः । शिथिलस्य बन्धस्याश्रये स्थाने नेत्रादौ नैव बन्धः कार्य इति । एवकारोऽवधारणार्थः कृतः । सायमित्यादि । तयोः पित्तरक्तोद्भवयोः सायंप्रातर्द्वौ कालाववेक्ष्य मोक्ष इष्यते । ग्रीष्मे शरदि चान्यदोषोत्थव्रणस्यापि सायंप्रातर्मोक्ष इष्यते ।

यत्र बन्ध उक्तस्तत्र बन्धाभावे दोषमाह — **अबद्ध** इत्यादि । अबद्धो व्रणो दंशादिभिः पीडितो व्यथितः तथा आदिशब्दाद् रजोधूमादिभिः, अदुष्टोऽपि व्रणो दुष्टीभवति । अल्पदुष्टोऽपि भृशं दुष्टीभवति । अत्र च व्रणे बन्धमन्तरेण व्रणघ्नः स्नेह उपयोजितो भेषजं वा योजितं चिरं न तिष्ठेत् । बन्धं विना सम्यगुपचर्यमाणो व्रणः कृच्छ्रेण शुद्धिं याति । रूढिं वा कृच्छ्रेण याति । रूढोऽपि सन् विवर्णतां याति, न शरीरवर्णतामित्यबन्धनदोषाः ।

इदानीं बन्धनगुणानाह —

**बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ।**
**छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रणः ॥ ६८ ॥**

**उत्थानशयनाद्यासु सर्वेहासु न पीड्यते ।**
**उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ॥ ६९ ॥**

**समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ।**

**बद्धस्त्वित्यादि** । तुरवधारणे । बद्ध एव व्रणो बन्धमाहात्म्यात् चूर्णितादिलक्षणः सुखं संरोहति । चूर्णितश्चूर्णितास्थिसमाश्रितः । भग्नो भग्नास्थिसमाश्रितः । विश्लिष्टः सन्धिस्थानादन्यस्थानगतो व्रणः, नेत्रादिः पाटितः, सर्वदेशस्थितोऽपि तथा छिन्नस्नायुसिरोऽपि एवंविधोऽपि शुद्धव्रणः सुखं सम्यग् रोहति । तथोत्थानशयनाद्यासु सर्वास्वीहासु चेष्टासु न पीड्यते न बाध्यते । उद्वृत्तौष्ठ इत्यादिना दुष्टव्रणस्य बन्धनाच्छुद्धिं रूढिं चाह। ऊर्ध्वे वृत्तौ वर्तुलावोष्ठौ यस्य स उद्वृत्तौष्ठः (അരികു ഉയർന്നിരിക്ക), तथा समुत्सन्नः उन्नतमांसः – (നികന്നിരിക്ക), तथा विषमः उद्वृत्तौष्ठसमुत्सन्नाभ्यां व्यतिरिक्तः क्वचित् निम्नः क्वचिदुन्नतः क्वचित् कुथितः एवं विषमसंस्थानः । तथा कठिनः तथा अतिरुक् । एवमुद्वृत्तौष्ठादिपञ्चप्रकारो दुश्चिकित्स्यतरोऽपि दुष्टव्रणो बन्धमाहात्म्यादशुभरूपतां हित्वा समत्वादित्रिविधगुणयुक्तः शीघ्रं शुद्धिं याति रोहति च । उद्वृत्तौष्ठसमुत्सन्नविषमलक्षणः समो भवति कठिनो मृदुर्भवति अतिरुगरुक् भवति । हारीतोऽप्याह — 'उद्वृत्तौष्ठत्वादियुक्तोऽपि व्रणो बन्धेन समत्वादियुक्तो भवति । ननूद्वृत्तौष्ठसमुत्सन्नावपि विषमशब्देनैव गृह्येते किमेताभ्यामुपात्ताभ्याम् । अस्त्वेवैतत् । किं त्वनयोः पृथङ्निर्देशेन दुश्चिकित्स्यतरत्वं

गमयति । उद्वृत्तौष्ठादिसंयुक्तः शुध्यति । समादिलक्षणसंयुक्तो रोहति ।" इति । पाठ्यकारस्त्वाह — 'न च व्रणस्योपरि बन्धग्रन्थिं कुर्यात्' इति ॥

बन्धगुणकथनं विधाय स्थिराणामित्यादिना पत्रदानविषयमाह —

**स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥ ७० ॥**
**प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ।**
**अजीर्णतरुणाच्छिद्रैः समन्तात्सुनिवेशितैः ॥ ७१ ॥**
**धौतैरकर्कशैः क्षीरिभूर्जार्जुनकदम्बजैः ।**

**स्थिराणां** दीर्घकालानुषङ्गिणां तथा**ल्पमांसानाम्** अनुपचितपललानां अत एव हेतो **रौक्ष्यादनुपरोहतां** रूढिमगच्छतां व्रणानामुपरि दत्त**मौषधं** कल्कस्नेहादिकं **पत्रैः** क्षीरिभूर्जार्जुनकदम्बजैः **प्रच्छाद्यं** स्थगयितव्यम् । **यथा-दोषं** दोषानतिक्रमेण । ऋत्वनतिक्रमेण च । तद्वशाद् यथायोगं, यथा वातव्रणे शीततौ स्निग्धोष्णैः, पित्तव्रणे घर्मकाले शीतस्वभावैः, कफव्रणे उष्णकाले रूक्षोष्ण-स्वभावैः । एवं साधारणेऽपि काले मिश्रदोषे च कल्पनीयम् । किम्भूतैः पत्रैः । **अजीर्णतरुणाच्छिद्रैः** इति । न जीर्णैर्नापि तरुणैः तथा छिद्ररहितैः तथा **समन्तात् सुनिवेशितैः** तथा **धौतैर्**जलादिना निर्मलीकृतैः तथा **अकर्कशै**-रकठिनैः ॥

अबन्धनीयान् दर्शयति —

**कुष्ठिनामग्निदग्धानां पिटकामधुमेहिनाम् ॥ ७२ ॥**
**कर्णिकाश्चोन्दुरुविषे क्षारदग्धा विषान्विताः ।**
**न मांसपाके च बध्नीयाद् गुदपाके च दारुणे ॥ ७३ ॥**
**शीर्यमाणाः सरुग्दाहाः शोफावस्था विसर्पिणः ।**
**अरक्षया व्रणे यस्मिन्मक्षिका निक्षिपेत्क्रमीन् ॥ ७४ ॥**
**ते भक्षयन्तः कुर्वन्ति रुजाशोफास्रसंस्रवान् ।**
**सुरसादि प्रयुञ्जीत तत्र धावनपूरणे ॥ ७५ ॥**
**सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ।**
***गोमूत्रकल्किता लेपाः सेकाः क्षाराम्बुना हिताः ॥ ७६ ॥**
**प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ।**

* 'गोमूत्रकल्कितो लेपः सेकः क्षाराम्बुना हितः' इति मुद्रिताष्टाङ्गहृदयपाठः ।

कुष्ठिनामित्यादि । कुष्ठिनामग्निदग्धानां च ये व्रणाः ते न बन्धनीयाः । तथा मधुमेहिनां पिटकाः तथा उन्दुरुविषे याः कर्णिकाः कोठरूपाः किञ्चिदुन्नताः ([illegible]) ताश्च न बन्धनीयाः । तथा क्षारदग्धाः ये व्रणास्ते च न बन्धनीयाः । तथा मांसपाके व्रणाः तथा गुदपाके चातिदारुणे, न गुदपाकमात्रे, व्रणाः ते च न बन्धनीयाः । मांसपाक इति 'मांसस्य पचियुग्घञोः' इत्यल्लोपः । तथा शीर्यमाणाः सदनावस्थां भजमानाः तथा सरुग्दाहाः तथा शोफावस्थाः शोफवदनेकामायवस्थाः । श्वयथुयुक्ता इति केचित् । अरुणदत्तस्तु "शोफावस्थाः अनेकावस्थां भजन्तोऽपि ये शोफावस्थाः स्थिताः" इत्याह । तथा विसर्पिणः विसर्पावस्थास्थिताः । हृद्याकारस्तु "पर्यन्ते सूक्ष्मपिटकावन्तः" इत्याह । विसर्पिणः ([illegible]) इति पाठ्यकारः । अरक्षया अपालनेन यस्मिन् व्रणे मक्षिका कृमीन् निक्षिपेत् । जातावेकवचनम् । मक्षिकाः क्रिमीन् निक्षिपन्ति । ते तत्रस्थाः कृमयः मांसादिकं भक्षयन्तो रुजादीन् कुर्वन्ति । तत्र तस्मिन् व्रणे सुरसादिगणो धावने पूरणे च तन्निमित्तं प्रयोज्यः । तथा तस्मिन् व्रणे सप्तपर्णादीनां त्वचो गोमूत्रकल्किताः पिष्टलेपा हिताः । "गोमूत्रकल्कितः पिष्टो लेपो हितः" इति हाटकः । अथवा मांसपेश्या व्रणं प्रच्छाद्य पिधाय तान् कृमीनाशु निर्हरेत् ॥

किञ्चिच्छुद्धं न रोपयेद् इत्याह—

न चैनं त्वरमाणोऽन्तःसदोषमुपरोहयेत् ॥ ७७ ॥
सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ।
रूढेऽप्यजीर्णव्यायामव्यवायादीन्विवर्जयेत् ॥ ७८ ॥
हर्षं क्रोधं भयं वापि यावदास्थैर्यसम्भवात् ।
आदरेणानुवर्त्योऽयं मासान्षट् सप्त वा विधिः ॥ ७९ ॥

न चैनमित्यादि । न चैनं व्रणमन्तःसदोषं त्वरमाणो वैद्य उपरोहयेत् । अन्तःसदोषमशुद्धमिति प्रायशोऽर्थः । कस्मादित्याह स इत्यादि । यतो यस्मात् सोऽन्तःस्थितदोषो व्रणो रूढोऽपि भूयः पुनः स्तोकेनाप्यपचारेण विकृतिं याति । हाटकस्तु —"सदोष अन्तरुत्सङ्गं कृत्वा गतो विकुरुते" इत्याह । अतः सम्यग् रूढेऽपि सत्यजीर्णादीन् वर्जयेत् ।

अयमजीर्णादिवर्जनीयविधिरादरेण यत्नवता षट् सप्त वा मासाननुवर्त्योऽनुष्ठातव्यः। सम्यग्रूढेऽपि षट् सप्त वा मासानजीर्णादीन् वर्जयेदित्यर्थः।

उपसंहरति —

उत्पद्यमानासु च तासु तासु
वार्तासु दोषादिबलानुसारी।
तैस्तैरुपायैः प्रयतश्चिकित्से-
दालोचयन्विस्तरमुत्तरोक्तम्॥ ८०॥

उत्पद्येत्यादि। तासु तासु वार्तास्ववस्थासु अनिर्दिष्टस्वरूपाभिधानासु उत्पद्यमानासु जायमानासु तैस्तैरुक्तानुक्तैरुपायैः साधनैश्चिकित्सेद् वैद्यः। किम्भूतः, दोषादिबलानुसारी दोषादीनां बलं दोषादिबलम्। आदिग्रहणाद् देशकालादयो गृह्यन्ते। तदनुसरत्येवंविधो यो वैद्यो दोषादिबलानुरूपेण चिकित्सेदित्यर्थः। तथा प्रयतः प्रयत्नपरः। तथोत्तरे तन्त्रे व्रणप्रतिषेधे उक्तं निर्दिष्टं विस्तरमालोचयन् निरूपयन्। न तु यदृच्छयेति भावः। हाटकोऽप्याह — "उत्तरे विस्तरेणोक्तं व्रणविधानमालोचयन्। अस्मिन् संक्षेपेण व्रणसाधन उक्तः" इत्यर्थः। वचनं हि —

"इतीदं व्रणमाश्रित्य दिङ्मात्रमुपदर्शितम्।
उत्तरे विस्तरस्तस्य वक्ष्यते साधनं प्रति॥"

इति॥

इति हृदयबोधिकाख्यव्याख्योपेते अष्टाङ्गहृदये सूत्रस्थाने
एकोनत्रिंशोऽध्यायः॥

# अथ त्रिंशोऽध्यायः ।

## अथातः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ।

शस्त्रकर्मप्रसङ्गात् क्षाराग्निविधिमाह । अयमपि शस्त्रकर्मविधिरेव । अथवा शस्त्रसाध्येषु विधिमुक्त्वा शस्त्रदुष्करेषु क्षाराग्न्योर्विधिमाहेति संबन्धः । हाटकोऽप्याह— 'यथैव भेषजविषयमतिक्रान्ते शस्त्रस्योपयोगः तथा शस्त्रसामान्यात् क्षाराग्न्योरपि । अतस्तद्विज्ञानार्थमध्यायारम्भः' इति । अरुणदत्तोऽप्याह— 'यथैव हि शस्त्रेण पाटनादीनि कृत्वा तत्साध्य आमय उपक्रम्यते तथैव क्षाराग्निभ्यामित्याह' इति ।

अनुशस्त्राणां प्रथमौ शस्त्राणां कर्मकारिणौ च यतः ।
क्षाराग्नी तेन विधिं तयोर्वदत्यथ शास्त्रकृत् सकलम् ॥

इति हृद्यकारः । क्षारश्चाग्निश्च जाराग्नी तयोः कर्म क्षाराग्निकर्म तस्य विधिः । शेषं पूर्ववत् क्षारस्य बाह्याभ्यन्तरोपयोगित्वेन बहूपयोगित्वेन च पूर्वमुपन्यासः ।

**सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।**
**छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥**

**दुःखावचार्यशस्त्रेषु तेन सिद्धिं नयात्सु च ।**
**अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ॥ २ ॥**

**सर्वेत्यादि**— सर्वाणि च तानि शस्त्राणि अनुशस्त्राणि च तान्येवं तेषां सर्वशस्त्रानुशस्त्राणां मध्ये **क्षारः श्रेष्ठो** ज्यायान् क्षरणाद् व्याधीनां स्वगुणानां क्षरणाद् वा क्षारः इति निर्वचनम्

उक्तं च विश्वामित्रीये—

"गुणान् क्षरति रोगेषु व्याधीन् क्षारयतीति वा ।
अक्षते क्षतकृत्वाच्च तस्मात् क्षार इति स्मृतः ॥"

इति । कस्मात् श्रेष्ठ इत्याह— **यद्यस्मात् छेद्यादीनि बहूनि कर्माण्यसौ करोति** । आदिशब्देन लेखनपाटनादिपरिग्रहः । **विषमेष्वपि** देहदेशेषु नासाक्ष्यर्बुदादिषु **दुःखावचार्यशस्त्रेषु** दुःखेनावचारयितुं शक्यं शस्त्रं येषु तेषु युज्यते । अपिशब्दात् समेषु देहदेशेषु युज्यते । **तेन** च शस्त्रेण **सिद्धिं नयात्सु** असिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु । किंभूतेषु, **अतिकृच्छ्रेष्वति**दुःखसाध्येषु **युज्यते** योग्यः संपद्यते । चशब्दादन्येष्वपि रोगेष्वसौ क्षारो युज्यते योग्यः संपद्यते । ततोऽपि हेतोः क्षारः श्रेष्ठः । **यच्चेति** । यस्माच्च क्षारः

---

१. 'सिद्धिमयात्सु च' इति मुद्रिताष्टाङ्गहृदयपाठः

पाने पानविषयेऽपि युज्यते शरीरान्तःस्थितरोगशान्त्यै । अपिशब्दात् बाह्येऽपि बाह्यस्थितरोगशान्त्यै लेपे स युज्यते । अतिकृच्छ्रेषु रोगेषु गुल्मोदरादिषु पानेऽपि युज्यते इत्यन्वयं ब्रुवतेऽन्ये ॥

स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु ।
योज्यः साक्षान्मशश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥

भगन्दरार्बुदग्रन्थिदुष्टनाडीव्रणादिषु ।
न तूभयोऽपि योक्तव्यः पित्ते रक्ते चलेऽबले ॥ ४ ॥

ज्वरेऽतिसारे हृन्मूर्धरोगे पाण्ड्वामयेऽरुचौ ।
तिमिरेऽकृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥

भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु ।
अजीर्णेऽन्ने शिशौ वृद्धे धमनीसंधिमर्मसु ॥ ६ ॥

तरुणास्थिसिरास्नायुसीवनीगलनाभिषु ।
देशेऽल्पमांसे वृषणमेढ्रस्रोतोनखान्तरे ॥ ७ ॥

वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने ।

स पेय इत्यादिना क्षारस्य पेयलेपद्वैविध्यं विषयविभागं च दर्शयति । अन्तर्गतार्शःप्रभृतिषु विषये स पेयः सः क्षारः द्रवरूपः पेयाख्यो योज्यः । गरादिष्वित्यत्रादिशब्देनानाहशूलादयो गृह्यन्ते । लेपनविषयमाह योज्य इत्यादि । साक्षात् क्षारो लेपाख्यो मशादिषु योज्यः । मशः क्षुद्ररोगः । व्रणादिष्वित्यत्रादिग्रहणात् चर्मकीलवर्त्मतिलकालकादिपरिग्रहः । न तूभय इत्यादि । उभयः पानलेपनभेदाद् द्विविधोऽपि क्षारः पित्तादौ न योज्यः । चले वाते । अबले प्राणहीने प्रोद्वृत्तफलयोनिरुत्तरे गुह्यरोगविज्ञाने वक्ष्यमाणा । यथा —

"वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः ।
सा फेनिलं रजः कृच्छ्रादुदावर्तं विमुञ्चति ॥
इयं व्यापदुदावृत्ता"

इत्येवमादि । प्रकर्षेणोद्वृत्तं फलं रजोरूपं यस्या योनेः सा प्रोद्वृत्तफलयोनिः । रज एव फलं गर्भाख्यफलसाधनोपायत्वात् । उद्वृत्त-

योन्यां फलयोन्यां चेत्यन्ये । उक्तं च भोजेन — "तत्र साध्येष्वप्युपद्रुतमतिबालमतिवृद्धं कृशं दुर्बलं क्षतक्षीणं सर्वाङ्गशूनमृतुमतीं गर्भिणीं रजस्वलां क्षीयमाणामुद्वृत्तयोनिं फलयोनिं क्लीबं ज्वरदाहमूर्च्छापिपासापरीतमपि वर्जयेत् क्षारेण" इति । तरुणास्थीनि नासादिष्वस्थीनि । सीवनी (७७७) । गलनाभिः कण्ठमणिः । शीते हेमन्तशिशिरे न योक्तव्यः अयोगभयात् । तद्वद् वर्षासु दुर्दिने च । दुर्दिनं मेघाद्याकुलं दिवसम् । उष्णे ग्रीष्मे न योक्तव्यः अतियोगभयात् । अत्र क्षारवर्जितेषु पुरुषेषु प्रदेशेषु च क्षारनिपातनात् किं भविष्यतीति चेद् व्याधिवृद्धिरनेकोपद्रवोत्पत्तिर्मरणं वा भविष्यति इत्यवगन्तव्यम् । सिद्धेनाप्युक्तम् —

"याः क्रियाः प्रतिषेद्धव्यास्ताः क्रियाः कुर्वतो भृशम् ।
तद्व्याधिवृद्धिर्मरणमन्या वा व्यापदो ध्रुवाः ॥"

इति । धान्वन्तरीयाः क्षारं त्रिदोषघ्नमिति समर्थयन्ति । यथा — "शस्त्रानुशस्त्राणां क्षारः प्रधानतमः । छेद्यभेद्यलेख्यकरणात् त्रिदोषघ्नत्वाच्च । अनेकौषधिसमवायेन निष्पन्नद्रव्यत्वात् त्रिदोषघ्नत्वम् । क्षरणात् क्षारः । स च द्विविधः । प्रतिसारणः पानीयश्चेति । प्रतिसारणमालेपः । स च कुष्ठादिषु । पानीयो गुल्मोदरकृम्यादिषु' इति ।

अधुना क्षारपाकविधिमाह—

कालमुष्ककशम्याककदलीपारिभद्रकान् ॥ ८ ॥
अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ।
इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥

काकजङ्घामपामार्गमग्निमन्थाग्नितिल्वकान् ।
सार्द्रान्समूलशाखादीन् खण्डशः परिकल्पितान् ॥ १० ॥

कोशातकीश्चतस्रश्च शूकनालं यवस्य च ।
निवाते निचयीकृत्य पृथक् तानि शिलातले ॥ ११ ॥

प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत् ।
ततस्तिलानां कुतलैर्दग्ध्वाग्नौ विगते पृथक् ॥ १२ ॥

कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः ।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥
गालयेदर्धभारेण महता वाससा च तत् ।
यावत्पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् ॥ १४ ॥
गृहीत्वा क्षारनिष्यन्दं पचेल्लौह्यां विघट्टयन् ।
पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ॥ १५ ॥
शुक्तीः क्षीरबकं शङ्खनाभिश्चायसभाजने ।
कृत्वाग्निवर्णान्बहुशः क्षाराच्छे कुडवोन्मिते ॥ १६ ॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शकृद्दक्षशिखिगृध्रकंककपोतजम् ॥ १७ ॥
चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च ।
परितः सुतरां चातो दर्व्या तमवघट्टयेत् ॥ १८ ॥

कालेत्यादि । मुष्ककस्य श्वेतादिभेदो विद्यते, तस्मात् कालमुष्कक इत्युक्तम् । हृद्याकारोऽप्याह— "कालमुष्ककग्रहणान्मुष्ककबहुत्वम् । तत् पुष्पवर्णैरुपलभ्यते । उक्तं च विश्वामित्रीये—

"कालपुष्पं श्वेतपुष्पं रक्तपुष्पं तथैव च ।
चतुर्थं पीतपुष्पं च श्रेष्ठं तद्धि नराधिप" ॥

इति । हाटकोऽप्याह— "कालाभिधानान्मुष्ककबहुत्वं पुष्पतोऽवगन्तव्यम्" इति । मध्यमवयसश्चेत्यध्याहार्यम् । बालस्य जीर्णस्यासञ्जातफेनवीर्यत्वात् । सञ्जातपुष्पफलत्वं मध्यवयस्त्वं, तस्य प्रग्रहणकालान् हेमन्तशरद्वसन्तानुपदिशन्त्याचार्याः" इति । पारिभद्रम् (മുരിക്ക്) । अश्वकर्णः कुशिकः । महावृक्षः स्नुही (കള്ളി) । आस्फोतो गिरिकर्णिका (ചൊറകടി) । वृक्षकः कुटचः (കുടകപ്പാല) । इन्द्रवृक्षो नन्दीवृक्षः (മരുക്കാര) । पूतीकः पूतीकरञ्जः (ആവിൽ) । नक्तमालः करञ्जः (പുങ്ങ്) अश्वमारः कणवीरः । कालमुष्ककादीन् मूलादिसहितान् खण्डशः परिकल्पितान् परश्वधादिना छिन्नान्, तथा कोशातकीश्वतस्रः यवस्य च शूकनालं यवशूको नाल इव यो भवति शूकं च नालं चेति वा शूकनालम् । 'शूकस्य नालमि'ति हृद्याकारः । तानि निगते

देशे शिलातले वृत्ते पृथक् निचयीकृत्य मुष्ककचये च सुधाश्मानि सुधा शर्कराः प्राक्षिप्य दीपयेत् ज्वालयेत् । कैः तिलानां कुतलैः काण्डैः । 'सुधाश्मानि चे'ति नपुंसकत्वं चिन्त्यम् । पृथग् दीपने चैषामाचिन्त्यः प्रभावः । एवं तानि दग्ध्वा ततोऽनन्तरं विगते प्रशान्तेऽग्नौ सुधाश्मनां भस्म द्रोणं पृथक् कृत्वा व्यस्तं संस्थाप्य इतरभस्मनः शम्याकादिद्रव्योद्भवात् द्रोणमादाय गृहीत्वा, किंभूतं द्रोणं मुष्ककमुत्तरमाधिकं यस्मिन् द्रोणे यस्य वा तमादाय जलमूत्रयोः प्रत्येकमर्धभारेण तद् भस्म गालयेत् । महता विस्तीर्णेन वाससा । कियन्तं कालं, यावत्क्षारनिष्यन्दं क्षारस्रावः शनैः स्वयं पतितः पात्रे पिच्छिलरक्ताच्छस्तीक्ष्णो जातः संपन्नः । मुष्ककोत्तरमिति एकद्रव्यभस्मनो द्विगुणं मुष्ककभस्मेत्यर्थः इति केचित् । तदा तस्मिन् काले तं क्षारनिष्यन्दं गृहीत्वा लौह्यां स्थाल्यां स्नेहपाकविधिना पचेत् । किं कुर्वन्, दर्व्या विघट्टयन् आलोलयन् । ततोऽनन्तरं तस्मिन् क्षारनिष्यन्दे ताः पृथक् संस्थापिताः सुधाभस्मशर्कराः भस्ममयीः सुधाशर्कराः(കൊഴിപ്പാൽ) तथा शुक्तीः प्राणिविशेषास्थीनि (ചിപ്പിത്തോൽ) तथा क्षीरबकं प्रलेपकं घटिकासंज्ञं (പരിശംഖ്) शुक्तिक्षीरबकं श्वेतशुक्तिरिति वा । तथा शङ्खनाभिं च (ശംഖ്) तानग्निवर्णान् कृत्वा क्षाराच्छे क्षारनिष्यन्दे अच्छं (തെളിനീർ) कुडबोन्मिते पलचतुष्टयप्रमाणे, पलाष्टकप्रमाण इत्यर्थः । वचनं हि—

'द्विगुणं योजयेदार्द्रं कुडबादि तथा द्रवम् ।'

इति । आयसभाजने तीक्ष्णलोहपात्रस्थिते क्षाराच्छे बहुशो बहून् वारान् निर्वाप्य शीतीकृत्य शीर्णशेषांश्च तेनैव क्षारनिष्यन्देन दृषदि पिष्ट्वा तस्मिन् क्षारनिष्यन्दे पच्यमाने प्रतीवापं विनिक्षिपेत् । द्रवेऽर्धपक्के यद् द्रव्यान्तरं श्लक्ष्णपिष्टं दीयते स प्रतीवापः कल्कः उच्यते । सुधाभस्मशर्करादीनां भागाविशेषात् समभागत्वसिद्धिः । उक्तं च सौश्रुते —

"निर्दिष्टा न भवति यत्र भागसंख्या
तत्रेष्टं समगुणमोषधं प्रयोगे ।" इति ॥

समानतन्त्राद् वा भागविशेषप्रसिद्धिः । एवं ह्याह विश्वामित्रः—

"अष्टौ भागाः शर्करायाः सुधायाश्चत्वार एव च ।
द्वौ शुक्तेश्चात्र विज्ञेयावेकः शङ्खस्य नाभिजः" ॥

इति। सुधाभस्मशर्करादीनां किं कल्कप्रमाणमिति चेद् अनुक्तत्वात् बुद्धिगम्यम्। अथवा यावान् क्षारोदककुडुबेन पेष्यस्तावान् प्रक्षेपयितव्यः स्याद् इति। अथवा समानतन्त्राद् वा तत्सिद्धिः। उक्तं हि विश्वामित्रीये—

"क्षीरोदकचतुर्भागं कल्कमेषां प्रदापयेत्"

इति। न च केवलमेत एवात्र प्रतिवापत्वेन क्षेप्तव्याः यावद् दक्षादिशकृदादींश्च पिष्ट्वा प्रतीवापं विनिक्षिपेत्। दक्षादीनां शकृत्। दक्षः कुक्कुटः। तथा चतुष्पदां गवादीनां पक्षिणां च पित्तम्। तथा हरितालमनोह्वालवणानि च श्लक्ष्णानि कृत्वा प्रतीवापं विनिक्षिपेत्। ह्राटक्कोऽपि—"एषां शुक्त्यादीनां लवणान्तानां भागाविशेषात् समभागप्रसिद्धिः" इत्याह। अतः प्रतीवापादनन्तरं परितः समन्ताद् दर्व्या तमवघट्टयेत्॥ १८॥

सबाष्पैश्च यदोत्तिष्ठेद् बुद्बुदैर्लेहवद् घनः।
अवतार्य तदा शीतो यवराशावयोमये॥ १९॥

स्थाप्योऽयं मध्यमः क्षारो, न तु पिष्ट्वा क्षिपेन्मृदौ।
निर्वाप्यापनयेत्; तीक्ष्णे पूर्ववत्प्रतिवापनम्॥ २०॥

सबाष्पैरित्यादि। यदा यस्मिन् काले सः क्षारनिष्यन्दः सबाष्पैः सोष्मभिः बुद्बुदैर्घनो लेह इव उत्तिष्ठेत् उद्गच्छेत्। यदा च दर्वीप्रलेपी स्यात् तदा अवतार्य शीतः सन् अयोमये लोहभाण्डे स्थितो यवराशौ स्थाप्यः। अयं मध्यमः क्षारः। मृदौ क्षारे सुधादीन् निर्वाप्यापसारयेत् न तु पिष्ट्वा क्षिपेत्। तीक्ष्णे तीक्ष्णक्षारे पूर्ववत् मध्यमक्षारतुल्यं प्रतिवापनं निर्वाप्य पिष्ट्वा विनिक्षिपेदिति॥ २०॥

न चैतावदेवात्र प्रतिवापनमित्याह—

तथा लाङ्गलिकादन्तिचित्रकातिविषावचाः।
स्वर्जिकाकनकक्षीरिहिङ्गुपूतीकपल्लवाः॥ २१॥
तालपत्री बिडं चेति सप्तरात्रात्परं तु सः।

तथेत्यादि। लाङ्गलिकादीनि च तत्र प्रतिवापनं विनिक्षिपेत कनकक्षीरी हेमदुग्धा। तालपत्री (पनवी ०९) लपत्रमिति द्वितीया-

विभक्त्यन्तः पाठो न समीचीनः। एवं कृतः क्षारः सप्तरात्रात् परं योज्यः त्रिविधः क्षारो योज्यः योग्यतामेति।

इति क्षारत्रैविध्यमुक्त्वा क्षारविषयमाह—

योज्यस्तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२ ॥
मध्येष्वेव च मध्योऽन्यः पित्तास्रगुदजन्मसु।
बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३ ॥

योज्य इत्यादि। तीक्ष्णः क्षारो वातश्लेष्ममेदस्समुत्थेष्वर्बुदादिषु योज्यः। महत्स्वेव योज्यः मध्येषु क्षारान्तरविधानात्। आदिग्रहणादन्येष्वपि तत्साध्येषु रोगेष्वयं क्षारो योज्यः। मध्येष्विति। एष्वेव अनिलकफमेदोजेष्वर्बुदादिषु मध्येषु नोत्कृष्टबलेषु नापि हीनेषु मध्यः क्षारो योज्यः। अन्यो मृदुः क्षारः पित्तरक्तसमुत्थेषु अर्शस्सु योज्यो न तीक्ष्णमध्यौ क्षारौ। क्षीणपानीये क्षीणजले क्षारे बलाधानाय पुनर्भूयः क्षाराम्बु-क्षारविस्रुतं जलमावपेत् दद्यात् ॥ २३ ॥

क्षारगुणानाह—

नातितीक्ष्णो मृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः।
शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ॥ २४ ॥
क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत्।

नातीत्यादि। श्लक्ष्ण इति पृथक्पदम्। शीघ्रं गच्छत्याशु व्याप्नोतीति शीघ्रगः। शिखरी उपरिष्टात् पीठिकाकारः। उपर्युपरि स्थापिते तिष्ठतीति प्रायशोऽर्थः। हाटकोऽपि—'शिखरी घनत्वेन शिखराकारः पातितो भवति इत्याह। 'शिखरी शिखरयुक्तः' (കല കുംഭിരിക്കു) इति पाठ्यकारः। सुखेन काञ्जिकादिना निर्वाप्यते शीतीक्रियते [इति] सुखनिर्वाप्यः। न विष्यन्दी न विष्यन्दवान्। न चातिरुक्। नातितीक्ष्णादयो दश गुणाः यस्य स दशगुणः। शस्त्रस्य यत् कर्म छेदनादि यत् तेजसोऽग्नेरपि कर्म दाहः तत् करोति। सङ्ग्रहे क्षारस्य दशैव दोषाः कथिताः। यथा—"अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतिघनोऽतिपिच्छिलः कृच्छ्रनिर्वाप्यो विसर्पी हीनौषधो हीनपाकश्च" इति।

अधुना देहनिपातादातुरानुभवद्वारेण क्षारस्य गुणानाह—

धूपयन्निव संरम्भाद्गात्रमापीडयन्निव ॥ २५ ॥

सर्वतोऽनुसरन् दोषानुन्मूलयति मूलतः ।
कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २६ ॥
क्षारसाध्ये गदे छिन्ने लिखिते स्राविते ऽथवा ।
क्षारं शलाकया दत्त्वा प्लोतप्रावृतदेहया ॥ २७ ॥
मात्राशतमुपेक्षेत तत्रार्शःस्वावृताननम् ।
हस्तेन यन्त्रं कुर्वीत वर्त्मरोगेषु वर्त्मनी ॥ २८ ॥
निर्भुज्य पिचुनाच्छाद्य कृष्णभागं विनिक्षिपेत् ।
पद्मपत्रतनुः क्षारलेपो घ्राणार्बुदेषु च ॥ २९ ॥
प्रत्यादित्यं निषण्णस्य समुन्नाम्याग्रनासिकाम् ।
मात्रा विधार्याः पञ्चाशत् तद्वदर्शसि कर्णजे ॥ ३० ॥

चूषयन्नित्यादि । संरम्भात् क्षोभात् गात्रं चूषयन्निव । आचूषन्निवेति वा पाठः तथा आपीडयन्निव ततः सर्वतः सर्वस्मिन् अनुसरन् गच्छन् दोषांस्तत्साध्यान् मूलत उन्मूलयति । तथा कर्म स्वीयं कृत्वा गतरुजः पुरुषस्य स्वयमेव यत्नं विनैव उपशाम्यति । क्षारेत्यादि । क्षारसाध्ये व्याधौ अर्शोऽर्बुदादौ प्राक् यथायोगं छेदादौ कर्मणि कृते क्षारो योज्यो नाकृते छेदादाविति क्षारस्य विषयो दर्शितः । क्षारं शलाकया दत्त्वा मात्राशतमुपेक्षेत । न काञ्जिकादिना निर्वापणं कार्यमित्यर्थः । किंभूतया शलाकया, प्लोतेन चेलखण्डेन प्रावृतोऽवगुण्ठितः स्थगितो देहः परिग्रहो यस्याः सैवम् । तत्र क्षारसाध्येष्वर्शस्सु क्षारपातनं कृत्वा मात्राशतं यावत् तावद्धस्तेन यन्त्रमावृताननं छादितमुखं कुर्यात् । क्षारसाध्येषु वर्त्मरोगेषु वर्त्मनी निर्भुज्य कुटिलीकृत्य ततः क्षारस्पर्शपरिहाराय पिचुना कार्पासादिमयेन कृष्णभागमाच्छाद्य क्षारं विनिक्षिपेत् । तत्र च पद्मपत्रतनुः क्षारलेपो देयः । न गुदार्शःस्विव घनः । पद्मपत्रमिव तनुरिति "उपमानानि सामान्यवचनैः" इति समासः । घ्राणार्बुदेषु च स एव पद्मपत्रतनुः क्षारलेपो योज्यः । कथं तत्र लेपो देयः । प्रत्यादित्यं रविसम्मुखं निषण्णस्य स्थितस्य तथा अग्रे नासिका अग्रनासिका ताम् उन्नाम्य उत्क्षिप्य । कियन्तं कालं लेपो धार्य इत्याह—मात्राः पञ्चाशद्विधार्याः । वर्त्मसु चाल्पतरा मात्रा । स्थानस्य मुक्तसारत्वात् सुकुमारत्वाच्च । कर्णजेऽर्शसि तद्वत् तेन घ्राणार्बुदेन तुल्यं स एव पद्मपत्रतनुः क्षारलेपः । ता एव पञ्चाशन्मात्रा धार्या इत्यर्थः ॥३०॥

क्षारं प्रमार्जनेनानु परिमृज्यावगम्य च ।
सुदग्धं घृतमध्वक्तं तत्पयोमस्तुकाञ्जिकैः ॥ ३१ ॥

निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् ।
अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च ॥ ३२ ॥

यदि च स्थिरमूलत्वात्क्षारदग्धं न शीर्यते ।
धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः ॥ ३३ ॥

तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।
पक्वजम्ब्वसितं सन्नं सम्यग्दग्धं विपर्यये ॥ ३४ ॥

ताम्रता तोदकण्ड्वाद्यैर्दुर्दग्धं, तं पुनर्दहेत् ।
अतिदग्धे स्रवेद्रक्तं मूर्छादाहज्वरादयः ॥ ३५ ॥

गुदे विशेषाद्विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।
पुंस्त्वोपघातो मृत्युर्वा गुदस्य शातनाद् ध्रुवम् ॥ ३६ ॥

नासायां नासिकावंशदरणाकुञ्चनोद्भवः ।
भवेच्च विषयाज्ञानं तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७ ॥

विशेषादत्र सेकोऽम्लैर्लेपो मधुघृतं तिलाः ।
वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८ ॥

क्षारमित्यादि अनु पश्चात् क्षारलेपनियमितकालधारणादनन्तरं क्षारं प्रमार्जनेन चेलादिना परिमृज्य शोधयित्वा सुदग्धं तत् क्षारस्थानमर्शोऽर्बुदाद्यधिष्ठानमवगम्य सम्यग्लक्षणेन ज्ञात्वा क्षारदग्धं स्थानं घृतमधुलेपितं कृत्वा क्षीरप्रभृतिभिर्निर्वापयेत् शीतीकुर्यात्। निर्वापणम् (ആററുക)। ततोऽनन्तरं स्वादुशीतैर्द्रव्यैर्मधुयष्टिकादिभिः सघृतैर्लेपयेत् । अभिष्यन्दीनि। स्रुतिरूपश्लेष्मकारीणि भोज्यानि अन्नपानानि माषदध्यादीनि भोज्यानि भोज्यानि भक्षयितव्यानि । योज्यानि इति वा पाठः । किमर्थं, क्लेदनाय क्षारदग्धस्थानविशरणार्थम् । यत क्षारदग्धं क्लिन्नं सत् शीर्यते । यदि च क्षारदग्धमभिष्यन्दिभिरपि च भोज्यैरुपयुक्तैः स्थिरमूलत्वाद् रोगाधिष्ठानान्न शीर्यते ततो धान्याम्लबीजादिभिरालेपयेत् । धान्याम्लस्य बीजं धान्याम्लबीजं काञ्जिकस्याधोघनम् (കാടിലരി)। "धान्या-

ल्लबीजेन मधुघृताभ्यां च लेपयेत्'' इत्यरुणदत्तः। तिलकल्को यष्टियुक्त-घृतान्वितो व्रणस्य रोपणः। पक्वजम्बूफलवदसितं कृष्णम्। सौश्रुते चोक्तम्—

''तस्मिन् निपतिते व्याधौ कृष्णता दग्धलक्षणम्''।

इति। तथा सन्नं निम्नं सम्यग् दग्धं स्थानं विद्यात्। विपर्यये पक्वजम्बव-सितत्वादिलक्षणविपर्यये तथा ताम्रादिभिश्च दुर्दग्धं जानीयात्। आदिग्रहणा-च्छोफविस्फोटादिपरिग्रहः। तथाभूतं तं पुनर्दहेत्। भूयस्तत्र क्षारं पात-येद् दाहाय। अतिदग्धे सति रक्तं स्रवेत्। तथा मूर्च्छादयो जायन्ते। आदिग्रहणाद् विसर्पविस्फोटादयोऽपि। गुदेऽतिदग्धे विशेषेण विण्मूत्रयोः संरोधः तथा अतिप्रवर्तनं कदाचित् तयोरेवातिप्रवृत्तिर्भवति। विशेषग्रहणात् पूर्वो-क्तरक्तस्रावादयोऽपि। तथा पुंस्त्वोपघातः कान्तागमनासामर्थ्यं शुक्लक्षय इत्यर्थः। तथा गुदस्य विशरणाद् विदारणान्निश्चयेन मृत्युर्वा भवेत्। नासायां क्षारातिदग्धायां नासिकावंशस्य दरणाकुञ्चनोद्भवः। वंशः नासान्तरास्थि। तथा विषयाज्ञानं गन्धस्याज्ञानं भवेत्। क्षारातिदग्धेषु श्रोत्रादिकेषु श्रोत्रचक्षूरसनेषु स्थानेषु विषयाज्ञानं स्यात्। तस्मिन् क्षारदग्धे विशेषेणाम्लैः काञ्जिकादिभिः सेको हितः। मधुघृततिललेपोऽपि हितः। तथा सर्वैव शिशिरा क्रिया वातपित्तहरा इष्टा। सङ्ग्रहे चोक्तम्—

''पाययेतातियोगे तु तच्छीघ्रं ससितं दधि।
सगुडं वा दधिसरं तैलं वा ससितोपलम्॥'' इति।

**अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः।**
**यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम्॥ २९॥**

अम्ल इत्यादि। यस्मादम्लः शीतस्पर्शः तेन चाम्लेन क्षार उप-संहितो युक्तः आशु एव कटुकलवणभूयिष्ठतां त्यक्त्वा स्वादुतां याति। तस्माद्धेतोः क्षारदग्धमम्लैः काञ्जिकादिभिर्निर्वापयेत्तराम्। स्वादुतां यातीति मधुरत्वादाग्नेयमपि क्षारं शीतवीर्यं भवतीत्यर्थः। तरांग्रहणेनातिशयेनाम्लै-र्निर्वापयेत् 'कदाचिद्देशसात्म्यानुरोधेन क्षीरादिभिरपीति दर्शयति। अभि-[1]प्रबलस्य क्षारस्य शमनत्वमम्लस्यायुक्तमाग्नेयत्वादिति केचित्। न बहिः-शीतत्वात्। उक्तं हि विश्वामित्रीये—

१. 'प्रभवस्य' इति च पाठान्तरम्।

''यस्मादुष्णतरः क्षारः शैत्यं चाम्लरसेऽधिकम् ।
तस्मात् सेकप्रदेहाभ्याममम्लं क्षारनिवर्तनम् ॥'' इति ।

भोजेनाप्युक्तमन्यथा —

''रौक्ष्यात्तत्रानिलः क्रुद्धो वीर्यं क्षारस्य पुष्यति ।
तस्मात् स्नेहाम्लमधुरं वायोः क्रुद्धस्य निग्रहः ॥'' इति ।

**अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसम्भवात् ।**
**भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ४० ॥**

अग्निरित्यादि । अग्निः क्षारादपि श्रेष्ठः प्रशस्यतरः । ननु 'सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठः' इत्युक्त्वा पुनरग्नेः श्रैष्ठ्यं कथमिति । अग्नि-प्रयोगाशक्तेषु पुरुषेषु प्रयुज्यते इति पुरुषावस्थामुद्दिश्य क्षारस्य सर्वश्रैष्ठ्यमुक्तम् । सम्प्रति तीक्ष्णतामुद्दिश्यैवाग्नेः प्राधान्यं ब्रूते । अथवा औषधेभ्यः क्षारो गुरुरि-त्युक्तः । ततः क्षारात् अग्निः श्रेष्ठ इत्यर्थः । येषु रोगेषु क्षाराग्न्योः प्राप्तिस्तेष्वेवेयं चिन्ता । 'इतरत् क्षारेण ज्वलनेन वा' इत्येवमादिषु क्षाराग्न्योः किं तुल्य-फलत्वम् उत वा गरीयस्त्वमिति जिज्ञासायामग्निः क्षारादपि श्रेष्ठ इति प्रतिज्ञा । कुतः, तद्दग्धानां तेनाग्निना दग्धानां रोगाणामर्शःप्रभृतीना-मसम्भवाद् इति हेतुः । भूयोऽग्निदग्धो रोगः प्ररोहं न याति मूलादुन्मूल-नादित्यर्थः । भेषजक्षारशस्त्रैर्ये रोगा न सिद्धा न शान्ताः तेषां प्रसाधनाच्च ज्वलनो ज्यायान् । सारकृदप्याह — ''क्षारप्रकरणे 'सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठः' इत्युक्तत्वादग्नेरपि क्षारस्य प्राधान्यसिद्धेर्व्याघातदोषः'' इति । उच्यते । नायं दोषः । यथाविषयं प्राधान्यसिद्धेः । कथम् । अर्जुनात् कर्णः प्रधानः दृढवेधित्वात् । कर्णादप्यर्जुनः प्रधानः दूरवेधित्वात् उक्तं च —

''केशवे लब्धलक्षत्वं दूरवेधित्वमर्जुने ।
दृढप्रहारता कर्णे तानि त्रीण्यपि सात्यकौ ॥'' इति ।

एवं छेद्यादिकर्मकरणत्वात् त्रिदोषघ्नत्वाच्चाग्नेः क्षारः प्रधानः । अग्नि-दग्धानां रोगाणामपुनर्भवत्वात् क्षाराशक्यानां साधनत्वाच्चाग्निः क्षारात् प्रधानः इति । अथवा 'सर्वशस्त्रानुशस्त्राणां क्षारः' श्रेष्ठ इत्युत्सर्गः । 'अग्निः क्षारादपि श्रेष्ठ' इत्यपवादः । इतश्च क्षारादग्निः प्रधानः औषधशस्त्रक्षारैरशक्यानां साध-नाच्च । अत्राह — युक्तमेतत् क्षाराशक्यानां साधनात् क्षारादग्निः प्रधान इति

वक्तुम्। किं तर्हि, शस्त्रौषधाभ्यामशक्यानां साधनात् क्षारादग्निः प्रधान इति नोपपद्यते। न ह्यन्यहेत्वपदेशमन्यो लभत इति। उच्यते। अग्निरौषधं शस्त्रं क्षार इत्येवं सर्वं स्थावरजङ्गमं चतुर्धा विभज्य तेष्वग्नेः प्राधान्यं सिषाधयिषुरयमाचार्य एवमाह लाघवार्थं प्रसङ्गतः। औषधशस्त्राभ्यामप्यग्निः प्रधानतमः। कस्मात्। औषधशस्त्राभ्यामशक्यानां व्याधीनां साधनात् औषधशस्त्राभ्यामग्नेः प्राधान्यम्। उक्तं च —

"ये नैव शक्याः क्षारेण शस्त्रेण च भिषग्जितम्।
स्वेदैरालेपनैर्वापि तेषामग्निश्चिकित्सितम्॥
उपक्रमेषु सर्वेषु प्रशस्तोऽयमुपक्रमः।
पशूनां पक्षिणां नृणामेतद् भैषज्यमुत्तमम्॥" इति।

**त्वचि मांसे सिरास्नायुसन्ध्यस्थिषु स युज्यते।**
**मषाङ्गग्लानिमूर्धार्तिमन्थकीलतिलादिषु॥ ४१॥**

**त्वग्दाहो वर्तिगोदन्तसूर्यकान्तशरादिभिः।**
**अर्शोभगन्दरग्रन्थिनाडीदुष्टव्रणादिषु॥ ४२॥**

**मांसदाहो मधुस्नेहजाम्बवौष्ठगुडादिभिः।**
**श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु॥ ४३॥**

**सिरादिदाहस्तैरेव न दहेत्क्षारवारितान्।**
**अन्तःशल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान्॥ ४४॥**

**सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत्।**

त्वचीति। स अग्निदाहः त्वगादिषु युज्यते। (तत्र मषादिषु) रोगेषु त्वग्दाहो वर्त्यादिभिः कार्यः। वर्तिः पिचुवर्तिः। आदिग्रहणादन्येष्वपि क्षुद्ररोगाध्यायोक्तेषु त्वग्दाहो योज्यः। शरादिभिरित्यादिग्रहणादन्यैरपि देशान्तरप्रसिद्धैस्त्वग्दाहः कार्यः। अर्शःप्रभृतिषु रोगेषु मधुस्नेहादिभिर्मांसदाहः कार्यः। आदिशब्दादर्बुदगण्डमालादयो गृह्यन्ते। मधुस्नेहादीनामन्यतमेन दाहः कार्यः। तत्र कदाचिन्मधुना कदाचित् पृथक् स्नेहैः कदाचिज्जाम्बवौष्ठेन। जाम्बवौष्ठः शलाकाविशेषो यन्त्रविधावुक्तः येन क्षारो दीयते। कदाचिद् गुडेन कदाचिदेवंविधेनान्येनापि देशविशेषप्रसिद्धेन। श्लिष्टवर्त्मादिषु सिरादिदाहः कार्यस्तैरेव मधुस्नेहादिभिः। आदिग्रहणात

स्नायुसन्ध्यस्थ्नां ग्रहणम् । क्षारवारितान् न दहेत् । न केवलमेतान् यावदन्तःशल्यान् तथान्तर्लोहितान् तथा शस्त्रादिना भिन्नकोष्ठान् तथा भूरिभिर्व्रणैरार्तान् । सुदग्धमग्निना रोगाधिष्ठानं ज्ञात्वा घृतमधुभ्यामभ्यक्तं कृत्वा स्निग्धशीतैर्मधुयष्टिशालिमूलादिभिः प्रलेपयेत् ।

तस्य लिङ्गं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥ ४५ ॥
पक्वतालकपोताभं सुरोहं नातिवेदनम् ।
प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४६ ॥

तस्येत्यादि । तस्येत्यनेन सुदग्धं स्थानं परामृश्यते । तस्य सम्यग्दग्धस्थानस्य लिङ्गं लक्षणं स्थिते रक्ते दह्यमानावस्थाप्रवृत्तेऽसृजि निवृत्ते सति । शब्दवत् बुद्बुदशब्दवत् तत्स्थानं भवेत् । तथा तत् स्थानं लसिकान्वितं च । लसिका कुशशस्त्रादिविक्षते प्रथमं या दृश्यते जललवाकृतिः । (1പൊള്ളത്തിരം) इति भाषा । तथा त्वग्दग्धं पक्वतालफलसदृशं कदाचित् कपोतसदृशम् । सुखेन रोहति [इति] सुरोहम् । तथा नातिवेदनं न तीव्ररुक् । केचिदाहुः — 'शब्दवल्लसिकान्वितं' इत्यनेन त्वग्दग्धलक्षणं ब्रवीति इति । उक्तं च सौश्रुते — 'तत्र शब्दप्रादुर्भावो दुर्गन्धिता त्वक्सङ्कोचश्च त्वग्दग्धे भवन्ति' इति । 'पक्वतालकपोताभं' इत्यनेन मांसदग्धलक्षणम् । तच्च तत्रैवोक्तम् — 'कपोतवर्णताल्पश्वयथुवेदनता शुष्कसङ्कुचितव्रणता च मांसदग्धे' इति । एवं चेत् किं सिरादिदग्धलक्षणमिति । अनन्तरापदेशान्मांसदग्धलक्षणमेव तद्दग्धलक्षणम् । किञ्चान्यत् । व्याध्यपनुत्तेश्चोपलब्धिः । इह तु सिरादिषु स्थितानां व्याधीनामग्निकर्मणा यदापनुत्तिर्भवति तदा सिरादीनि सम्यग्दग्धानीत्यवगन्तव्यानि । उक्तं च भोजेन —

'सम्यग्दग्धे गुणांश्चापि धीरः शस्त्रेण दर्शयेत् ।'

इति । दुर्दग्धात्यर्थदग्धयोः सर्वं लक्षणं चिकित्सितं च प्रमाददग्धेन तुल्यं बोध्यम् । प्रमाददाहो यादृच्छिकः । प्रज्ञापराधजनितः आगन्तुदाहः । वैद्यप्रमादाज्जातो वा । सोऽपि प्रमाददाहः । उक्तं च भोजेन —

"त्वग्विकारेषु मांसं तु यदा दहति दुर्भिषक् ।
यश्च त्वचं दाहयति मांसजेषु चिकित्सकः ॥
उभेऽपि व्यापदावेते धन्वन्तरिरुवाच ह ।" इति ।

---

1. 'പൊള്ളയിരം' इति पाठान्तरम् ।

प्रमाददग्धमाह —

चतुर्धा तत्तु चुत्थेन सह, चुत्थस्य लक्षणम्।
त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः॥ ४७॥

सस्फोटदाहतीव्रोषं दुर्दग्धमतिदाहतः।
मांसलम्बनसङ्कोचदाहधूपनवेदनाः॥ ४८॥

सिरादिनाशस्तृण्मूर्च्छाव्रणगाम्भीर्यमृत्यवः।

चतुर्धेत्यादि। तत् प्रमाददग्धं चतुर्धा चतुष्प्रकारम्। कथं, चुत्थेन चुत्थदग्धलक्षणेन सह। चुत्थशब्देन स्तोकर्माभिधीयते। यत्किञ्चिन्मात्रमेवाग्निना स्पृष्टं तच्चुत्थदग्धमित्युच्यते। अविमृश्यदग्धं हि कदाचिद् दुर्दग्धलक्षणं कदाचित् चुत्थलक्षणं स्यादिति। सङ्ग्रहे चोक्तं — "प्रमाददग्धं पुनश्चतुर्विधं भवति। चुत्थं दुर्दग्धमतिदग्धं सम्यग्दग्धम्" इति। तद्दग्धं (चतुर्धे? द्विधे)ति केचित्। बुद्धिपूर्वकृतमन्यथाकृतं च। चतुर्धैव यतः चुत्थस्य लक्षणमिति कारणे कार्योपचारादेवमुक्तम्। चुत्थस्य चुत्थदग्धस्य लक्षणं त्वग्विवर्णतादि। त्वक् विवर्णा सती अत्यर्थमूष्यते दाहं प्राप्नोति। न च स्फोटानां समुद्भव इति चुत्थदग्धस्थानस्य लक्षणम्। दुर्दग्धं स्थानं सस्फोटदाहतीव्रोषं स्यात्। "ऊषा रुजा" इत्यरुणदत्तः। अतिदाहतो रोगाधिष्ठानस्य मांसलम्बनादयः स्युः। सम्यग्दग्धलिङ्गं तूक्तमेव 'तस्य लिङ्गं स्थिते रक्ते' इत्यादिना। तस्मात् पुनर्न निर्दिष्टम्।

अधुना चतुर्विधस्यास्य चिकित्सितमाह —

चुत्थस्याग्निप्रतपनं कार्यमुष्णं च भेषजम्॥ ४९॥

चुत्थदग्धस्याग्निप्रतपनं कार्यं तथोष्णं च भेषजमौषधं प्रयोज्यम्। रक्तस्य विलयनार्थमेतत्।

यतश्चुत्थदग्धेऽवश्यं स्त्यानमसृग् भवतीति युक्त्या प्रतिपादयन्नाह —

स्त्यानेऽस्रे वेदनात्यर्थं विलीने मन्दता रुजः।
दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम्॥ ५०॥

१. 'तुत्थ' इति मुद्रिताष्टाङ्गहृदयपाठः।

सम्यग्दग्धे तु काक्षीरिप्लक्षचन्दनगैरिकैः।
लिम्पेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ॥ ५१ ॥
अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत्।
स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ५२ ॥

स्त्यान इत्यादि। लोहिते स्त्याने सत्यतिशयेन रुग्भवति। विलीने रक्ते पीडाया मन्दता मार्दवं भवति। अतश्चतुर्थदग्धेऽग्निप्रतपनं कार्यम्। दुर्दग्धे शीतमुष्णं च पर्यायेणौषधं प्रथमं युञ्ज्यात। ततो हिममेव भेषजं युञ्ज्यात्। इन्दुनाप्युक्तम् — 'शीतानेवावचारयेत्' इति। सम्यग्दग्धे तुकाक्षीर्यादिभिर्लेपयेत्। किं भूतैः, साज्यामृतैः घृतगुडूचीयुक्तैः। सम्यग्दग्धे वैद्यकृतसम्यग्दाहे यादृच्छिके च। आदावित्यत्र योज्यम्। आदावेव तैर्लेपयेत। ऊर्ध्वमनन्तरं पित्तविद्रधिवत् क्रिया कार्येति शेषः। अतिदग्धे द्रुतं शीघ्रमेव सर्वं बहिरन्तश्च भेषजं पित्तविसर्प इव कुर्यात्। स्नेहदग्धेऽतितरां रूक्षं योजयेत्। भृशतरग्रहणाच्च बाहुल्येन रूक्षं देशदेहसात्म्यादिवशात् स्निग्धमपि यथावस्थं यथायोगं योजयेत्। स्नेहदाहस्तु कष्टतरो भवति वैद्यकृतो वा यादृच्छिको स्नेहस्य सूक्ष्ममार्गानुसारित्वाद् दूरमनुप्रविशतीति रूक्षः प्रयोगः कर्तव्यः। हाटकस्त्वाह — "त्वङ्मांससिरास्नावासन्ध्यस्थिभेदेन षड्विधमग्निकर्मोक्तमपि त्वङ्मांसदग्धलक्षणमेव सिरादिदग्धलक्षणमिति पृथङ् नोक्तम्"; इति।

समाप्यते स्थानमिदं हृदयस्य रहस्यवत्।

समाप्यत इत्यादि। वक्तव्यं यद् वस्तु तस्य सर्वस्यैवोक्तत्वादिदं स्थानं समाप्यते निष्पाद्यते। किं भूतं स्थानं, रहस्यवद् रहस्यमर्थं गुह्यरूपं तद् यस्यास्ति तद् रहस्यवत्। कस्य स्थानं, हृदयस्य। हृदयशब्देनाष्टाङ्गहृदयमुपलक्ष्यते। यथा सत्यभामा भामेति।

कुत एतत् स्थानं रहस्यवदित्याह —

अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥ ५३ ॥

अत्रेत्यादि। हि यस्मादत्रास्मिन् स्थाने अर्थाः सूत्रिताः। किं भूताः, सूक्ष्माः तीक्ष्णतरमतिसमधिगम्याः। सर्वतः सर्वस्मिन् तन्त्रे प्रतन्यन्ते

१. वाक्यमिदं "पक्वतालकपोताभं सुरोहं नातिवेदनम्" इत्यस्य व्याख्यानावसरे योजनीयमिति प्रतिभाति।

विस्तार्यन्ते । तस्मादिदं स्थानं तन्त्रसंबन्धिनामन्यस्थानानां रहस्यवदित्युक्तमिति । वचनं हि —

"इति तन्त्रस्य हृदयं सूत्रस्थानं समाप्यते ।
अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥" इति ।

आगमश्च —

"यथा सुमनसां सूत्रं सङ्ग्रहार्थं विधीयते ।
सङ्ग्रहार्थे तथार्थानामृषीणां सङ्ग्रहः कृतः ॥"

इति । सूक्ष्मार्थसूचनात् सूत्रत्वम् ॥

इति श्रीदासपण्डितविरचितायां
अष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
त्रिंशोऽध्यायः ।

---

॥ सूत्रस्थानं समाप्तम् ॥

---

# APPENDIX I

## श्लोकार्धानुक्रमणी ।

(सूत्रस्थाने १६—३० अध्यायाः ।)

| श्लोका० | अ० | श्लो० | पृष्टम् |
|---|---|---|---|
| अकराळानि | २६ | २ | १६९ |
| अकालपलित— | २२ | १८ | १३१ |
| अक्षिरोगाय | २३ | १६ | १४२ |
| अग्निः क्षारादपि | ३० | ४० | २५६ |
| अग्नितापातप— | २७ | १९ | १९१ |
| अग्रतोऽकर्णिके | २५ | २४ | १६२ |
| अग्रे सिद्धार्थक— | ,, | २६ | १६३ |
| अग्रे स्रवति | २७ | ३८ | १९८ |
| अङ्गुलानां क्रमात् | २१ | ९ | १२१ |
| अङ्गुलित्राणकं | २५ | २१ | १६१ |
| अङ्गुलिभ्यामनायस्तः | १८ | १९ | ४४ |
| अङ्गुली च | २३ | १२ | १४१ |
| अङ्गुलीनालवालैः | २९ | ११ | २२८ |
| अङ्गुष्ठेनोन्नमय्य | २७ | २५ | १९२ |
| अच्छपानविकाराख्यौ | २० | ३६ | ११६ |
| अजाविमहिषा— | १९ | १६ | ७३ |
| अजीर्णतरुणा— | २९ | ७१ | २४१ |
| अजीर्णादनिलादीनां | ,, | ३८ | २३३ |
| अजीर्णेऽन्नयर्क— | २३ | २३ | १४६ |
| अजीर्णेऽन्ने शिशौ | ३० | ६ | २४७ |

1779

1770

## APPENDIX II.

### स्मृतवाक्याद्यनुक्रमणी ।

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| अंसस्थाम् | | हृद्याकारः | १९० |
| अकृतं कृतयूषं च.... | | | ५० |
| अक्तस्तैलेन | | हृद्याकारः | १३४ |
| अंग्निकलिभ्यां ढक् | | | १४४ |
| अग्नेर्ढक् | | | ३८ |
| अग्रच्छिद्रप्रमाणं च ... | | | ७१ |
| अग्रविषमां नासिकाम्... | | अरुणदत्तः | १९३ |
| अङ्गपादं चर्म | | पाठ्यकारः | ७३ |
| अङ्गुलान्यथ चत्वारि | | क्षारपाणिः | ९७ |
| अङ्गुलासन्ने कृतं न दोषम्.... | | हृद्याकारः | १३८ |
| अजीर्णी तु सर्वैरेव.... | | | ४१ |
| अज्ञातकोष्ठे हि बहुः... | | | १३ |
| अञ्जनं तीक्ष्णं योजयेत्.... | | हृद्याकारः | १४९ |
| अञ्जनायोग्या नस्यायोग्याः.... | | ,, | १५३ |
| अतिक्रान्तेषु वस्त्यादिषु... | | पाठ्यकारः | १५५ |
| अतिदीर्घमत्यल्पग्राहि... | सुश्रुतम् | सुश्रुतः | १६८ |
| अतिशब्दोऽत्राध्याहार्यः... | | हाटकः | २३५ |
| अतिशीते काले... | | असद्गुरवः | १४५ |
| अतिस्निग्धाशिनो.... | संग्रहः | | ७५ |
| अतिस्नेहात् क्लेदः.... | ,, | | २३५ |
| अतोऽस्मात्कारणात्.... | | हाटकः | १४३ |
| अत्युष्णतीक्ष्णम् अत्युष्णैः.... | | हृद्याकारः | १३८ |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| अत्युष्णोऽतिशीतो.... | संग्रहः | | २५२ |
| अत्र चातिशब्दोऽर्थवशात्.... | | अरुणदत्तः | २३५ |
| अत्र मतभेदे सारभूतं··· | | हृद्याकारः | १४५ |
| अत्र रक्तपित्तादौ.... | | हाटकः | १२० |
| अत्र संख्याग्रहणं.... | | पाठ्यकारः | २०४ |
| अत्र हि निजागन्तुभेदेन... | | इन्दुः | १५५ |
| अथ धूमविधिर्नस्य... | | हृद्याकारः | ११८ |
| अथ निवाते सातपे··· | | (हाटकः) | १३० |
| अथ पञ्चकर्मसु··· | | हृद्याकारः | ९८ |
| अथ मारुतं पित्तश्लेष्म··· | आगमः | | १०१ |
| अथ वातादितं भूयः... | | | ९८ |
| अथ सुखोपविष्टस्य... | संग्रहः | | १४७ |
| अथापाशितस्यासीनस्य... | | (अरुणदत्तः) | ९५ |
| अथास्य सुखाम्बुना··· | | | ५१ |
| अथैनं सायाह्ने अपरे वा··· | आगमः | | ५०,५१ |
| अदेशे या सिरा विद्धा··· | | भालुकिः | १९७ |
| अधिकरणे शेतेः | | | १८ |
| अधिगततन्त्रः शस्त्रशिक्षां··· | सुश्रुतम् | सुश्रुतः | १८० |
| अध्युषितो रात्रिं यतः··· | | अरुणदत्तः | १७९ |
| अनञ्जनेनाभ्युषितान्... | वैदेही संहिता (स्कन्दरक्षिता) | | १४१ |
| अनन्तरं स्वस्थस्य शोधना... | | हाटकः | ६ |
| अनन्तरातीतेऽध्याये.... | | अरुणदत्तः | १८७ |
| अनुत्तुण्डानि शल्यानि··· | | भोजः | २१२ |
| अनुत्तुण्डितमदृश्यमान.... | | हृद्याकारः | २११ |
| अनुत्सेकमदैन्यं च.... | | | २१७ |
| अनुलोमं.... | | पाठ्यकारः | " |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| उष्णोदकोपचारी.... | | | १३५ |
| ऊङ्गुतः | | | ९८ |
| ऊर्ध्वं तिर्यगधस्ताश्च ··· | | भोजः | २३८ |
| ऊर्ध्वजत्रूपादानं··· | | हाटकः | १०४ |
| ऊर्ध्वराजीचिता या तु.... | | भोजः | १८१ |
| ऊर्ध्वाद् ग्रहणमुत्पाटनं | | | १७८ |
| ऊषसुषि··· | | | २१३ |
| ऊषा रुजा | | अरुणदत्तः | २५९ |
| ऊष्मा स्वेदश्चाष्टविधः.... | | | ३५ |
| ऋजूपविष्ट इत्यादिना··· | | | १२२ |
| एकं तथा त्रीन् कफजे विकारे... | आगमः | | ८८ |
| एकं बहुव्रीहिवत् | | | १२२, १७० |
| एकान्तरं द्व्यन्तरं वा··· | | भोजः | ११० |
| एकोत्तरं यन्त्रशतं | | | १५६ |
| एकोऽपकर्षत्यनिलं स्वमार्गात् | आगमः | | ८९ |
| एतान् सर्वान् विषाद्यार्तान्.... | | | ६३ |
| एभिर्देशकालतो देशकालाः··· | | हाटकः | २८ |
| एवं संस्कृतानि पद्मकादीन्येव··· | | ,, | २६ |
| एषण्याः शस्त्रता यन्त्रता... | | | १७१ |
| एषां शुक्त्यादीनां लवणान्तानां... | | हाटकः | २५१ |
| ओदनश्च विलेपी च··· | | मुनिः (चरकः) | ११,१२ |
| औषधं शमनौषधं | | हृद्याकारः | ६१ |
| औषधाच्छतगुणं दिव्यं जलं | | पाठ्यकारः | ११७ |
| कण्टकादिभिः क्षते कण्ठे ... | | | २१७ |
| कण्ठशल्यदर्शनार्थे नाली··· | संग्रहः | | १५९ |

1779

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
| --- | --- | --- | --- |
| तैलं प्रावृषीत्यादि । तैलं प्रावृषि.... | | अरुणदत्तः | ९ |
| तैलं प्रावृषीत्यादिना शोधनार्हस्य ··· | | अस्मद्गुरवः | ७ |
| तैलं प्रावृषीत्यादि । स्वस्थविषय ··· | | हृद्याकारः | " |
| त्रपुजतुनोः षुक् | | | २१७ |
| त्रयः कोशाः पर्वद्वय ··· | | हृद्याकारः | १२१ |
| त्रिकोशं त्रिविधकोशाकारं ··· | | अरुणदत्तः | " |
| त्रिधाञ्जनं ··· | | सारकृत् | १४० |
| त्रिविधा वस्तयः कर्म ··· | | हृद्याकारः | ९१ |
| त्रिवृतेत्यनेन सर्पिस्तैलवसानां ··· | | हाटकः | ८८ |
| त्रिषु यामेष्वतीतेषु यदि ··· | | | ७८ |
| त्रीणि दोषप्रमाणानि ··· | | | ५४ |
| त्रीन् पञ्च सप्त वा वारान् ··· | | | १११ |
| त्र्यङ्गुलं तु व्रणं कुर्यात् ··· | | भोजः | १२८ |
| त्र्यङ्गुलसन्निविष्टकर्णिकं ·· | | सुश्रुतः | ७२ |
| त्र्यश्राग्रा ··· | सग्रहः | | १७५ |
| त्र्युपाभ्यामुपसंख्यानम् | | | ७९ |
| त्वगादिनष्टे लक्षणमुक्तं ··· | | हाटकः | २०८ |
| त्वग् वल्को वल्कलं ··· | निघण्टुः | | ७३ |
| त्वग्विकारेषु मांसं तु... | | भोजः | २५८ |
| त्वङ्मांससिरास्नावा ··· | | हाटकः | २६० |
| त्सरुर्मुष्टिग्रहणदेशः | | सारकृत् | १७४ |
| दक्षिणं सक्थि दक्षिणं पादं ··· | | वृद्धवैद्याः | ७६ |
| दत्त्वादौ सैन्धवस्याक्षं ··· | | धन्वन्तरीयाः | ८३ |
| दन्तहर्षादिषु वातिकेषु ··· | | हृद्याकारः | १२८ |
| दानवानां हिंसनार्थं.... | | | २०१ |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| धूमे कासहरे नेत्रं··· | | | १२१ |
| धूमनेत्रगताक्षश्च स्यात्.... | | हृद्याकारः | १२२ |
| न कदाचित्प्रयोगोऽस्ति··· | | | १२४ |
| न चक्षुर्हृदयादीनि··· | संग्रहः | | ३१ |
| न च नस्ये दीयमाने... | | | ११२ |
| न च व्रणस्योपरि बन्ध··· | | पाठ्यकारः | २१३ |
| न द्रव्यव्यतिरिक्तं··· | | वैदान्तिकाः | ११४ |
| न नस्यमित्यादिना प्रतिमर्शस्य.... | | पाठ्यकारः | ११५ |
| न प्रावृष्येव तिलजं··· | | | ८ |
| नयनं ताम्यत्त्वादि... | | हाटकः | १४९ |
| नयने ग्लान्यादि दश··· | | हृद्याकारः | ,, |
| न रात्रौ प्रणयेत्स्नेहं.... | | | ७५ |
| नरो विरिक्तस्तु निरूहदानं... | आगमः | | ९९ |
| नर्ते रुजा वातमृते च पित्तं··· | | धन्वन्तरीयाः | २२३ |
| न सर्पिः केवलं पित्ते··· | | | ३ |
| नस्तः कर्म वसन्ते तु··· | | निमिः | १०५ |
| नस् नासिकाया यत्तस्··· | | | १०३ |
| नस्यं दद्यात्तु सप्ताहं··· | | निमिः | ११० |
| नस्यात् संशुद्धशिरसो.... | तन्त्रान्तरम् | | ११२ |
| नात्र यथासंख्यं पार्श्वकक्ष्या ··· | | अस्मद्गुरवः | १९० |
| नालीयन्त्राणि सुषिराणि... | | हृद्याकारः | १५९ |
| नालीव्रणस्य प्रक्षालनाभ्यञ्जन··· | संग्रहः | | १६२ |
| नासापुटौ तथाङ्गुल्या ... | | निमिः | १११ |
| निजागन्तुविकारहारी सिरा ··· | | हृद्याकारः | १०२ |
| निमेषोन्मेषणं पुंसां... | | | १३६ |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| परिषिच्याद्भिरुष्णाभिः ··· | सुश्रुतम् | | १४ |
| पर्यन्ते सूक्ष्मपिटकावन्तः | | हृद्याकारः | २४४ |
| पाटलीचिरिबिल्वादि... | | | ६२ |
| पाण्डुर्मेही रक्तपित्ती तृडार्तः ··· | समानतन्त्रम् | | ३४ |
| पात्रे तु कुर्यात् सौवर्णे··· | | | १४१ |
| पादेत्वित्यादिना पादासिरा··· | | अरुणदत्तः | १९५ |
| पादोनास्तु चतस्रः ... | | मौहूर्तिकाः | १२ |
| पाययेतातियोगे तु... | संग्रहः | | २५५ |
| पार्श्वे कक्षस्तनयोरन्तरस्थां ··· | सुश्रुतम् | | १९० |
| पाषाणगर्भहस्तस्य पुरुषस्य··· | | असद्गुरवः | १९६ |
| पाषाणादग्निसन्तप्तात्··· | | हृद्याकारः | १४५ |
| पिचुवर्त्या पिधायाग्र··· | | | ८४ |
| पिण्डे तीक्ष्णे कलायमात्रं··· | | हाटकः | १४२ |
| पित्तं वह्निः··· | | | २०२ |
| पित्ते तदधिकानुज्ञानार्थं··· | | हाटकः अरुणदत्तश्च | ८१ |
| पित्तेत्यादिना त्रिविधानां | | हृद्याकारः | ५४ |
| विहितोष्णीषाः.... | | | १६५ |
| पीडयन्नरुजो गाढः... | | | २४० |
| पीतदुग्धादीनां यावज्जरणकालं... | | इन्दुः | ३४ |
| पीतसमनन्तरं घृतपरिषेकः··· | | धन्वन्तरीयाः | १८५ |
| पीतस्नेहस्य वाजीर्णे··· | | | १७ |
| पुष्पनेत्रं नराणां तु.... | | हिरण्याक्षः | ९७ |
| पुष्पनेत्रं स्त्रीणां चतुरङ्गुलं··· | | भालुकिः | ,, |
| पुष्पनेत्रप्रमाणं तु··· | | मुनिः | ९६, ९७ |
| पूर्वकालेक · | | | ७५ |
| पूर्वाह्णे वमनं पेयं.... | आगमः | | ५५ |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| यतः पूर्वोक्तेषु कालेषु... | | अरुणदत्तः | १४३ |
| यतो दृष्टिर्यदि नष्टा स्यात्... | सर्वाङ्गसुन्दरा | ,, | १५४ |
| यत्किञ्चिदाबाधकरं... | | | २०३ |
| यत्तदेतेभ्यः परिमाणे मतुप् | | | १०७ |
| यत्स्नेहनमञ्जनं कथितं ··· | संग्रहः | | १४० |
| यन्त्राणां शस्त्रापेक्षा यतः··· | | पाठ्यकारः | १६१ |
| यथा कण्ठगते शल्ये··· | | | २०६ |
| यथा पटो रागं गृह्णाति जलं··· | | हाटकः | ९९ |
| यथा पटो रागं गृह्णाति न··· | | अरुणदत्तः | ,, |
| यथायोगदैर्घ्यपरिणाहानि | | | १६४ |
| यथायोगप्रमाणानीति··· | | पाठ्यकारः | ,, |
| यथार्हौषधविपक्वं घृतम् | | हाटकः | १४९ |
| यथा वातघ्नैर्द्रव्यैः साध्यते··· | आगमः | | ८६ |
| यथाशेषं प्रवेश्याथ.... | खरनादम् | | ९४ |
| यथासत्त्वं तु (स?शै)त्योष्णे | | | १० |
| यथा सादृश्ये | | | ३, १५६ |
| यथा सुमनसां सूत्रं··· | आगमः | | २६१ |
| यथास्वं च धूमयन्त्राणां··· | | | १२५ |
| यथास्वं भेषजेन वातादिहरौषधेन | | हृद्याकारः | २३१ |
| यथैव भेषजविषयमतिक्रान्ते··· | | हाटकः | २४६ |
| यथैव हि शस्त्रेण पाटनादीनि ·· | | अरुणदत्तः | ,, |
| यथोक्तानां सिराणामदर्शने··· | | हाटकः | १९१ |
| यदा श्वासे स्वेद उपयुज्यते तदा··· | | हृद्याकारः | ३७ |
| यदाहारगुणैः पानं... | आगमः | | २०२ |
| यवनीमरिचाजाजी··· | | | ५१ |
| यवमिश्रमाषमयीं... | | हाटकः | १४९ |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| रुद्यत इति रुद् | पाठ्यम् | | २०७ |
| रूक्षस्य कार्श्यं स्वेदेन … | | हृद्याकारः | ३३ |
| रूक्षातिदीप्ताग्नयः…. | | | ६७ |
| रूक्षेऽतिरूक्षे विरेचननस्येन … | | हृद्याकारः | ११३ |
| रोपणदृष्टिप्रसादनयोरन्तर्भूतत्वात् … | | हाटकः | १४० |
| रौक्ष्यात्तत्रानिलः क्रुद्धो… | | भोजः | २५६ |
| लघु पेयादिकम्… | | | ७८ |
| लाक्षा सर्जरसश्चैव … | | हृद्याकारः | १२४ |
| लाघवं मार्दवं चाङ्गे… | | | ३१ |
| लाजसक्तून् पिबेत्पूर्वं … | | | ६० |
| लालास्रावसुप्तप्रलाप …. | संग्रहः | | १०९ |
| लेखनमञ्जनं ताम्ररजत…. | तन्त्रान्तरम् | | १४२ |
| वक्रादिभेदभिन्नानां शल्यानां … | | अरुणदत्तः | २०४ |
| वक्रादिभेदेन शल्यानां… | | हाटकः | ” |
| वचाकिण्वेत्यादिरुपनाहो… | | ” | ३९ |
| वचादिभिः सुरसादिभिश्च… | | ” | २७ |
| वमनं कफशान्त्यर्थं … | | पाठ्यकारः | ६५ |
| वमनविरेचनयोरन्याविधान … | | हाटकः | ८६ |
| वमनस्याजीर्णे विधानात् … | | हृद्याकारः | ४२ |
| वमने कृते पक्षमतिक्रम्य … | | ” | ९९ |
| वमने च विरेके च … | तन्त्रान्तरम् | | १९९ |
| वमेर्विरेचनं मुख्यं … | | | ५४ |
| वयोबलदेहसत्त्वसात्म्यादि .. | | हाटकः | ९३ |
| वयोबलाग्निक्षयतः … | | | ७४ |
| वर्णान्तरेषु अनुक्तेषु … | | हृद्याकारः | ७० |
| वसां योजयेदिति शेषः | | ” | १५० |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| वसेस्तिप् | | | १३३ |
| वस्तिं स्तौति | | हृद्याकारः | १०० |
| वस्तिनेत्रं मृदुश्लक्ष्णं… | खरनादम् | भट्टारहरिचन्द्रः | ७०, ७२ |
| वस्तेः पुरस्तात् पस्तावात् … | | हृद्याकारः | ६५ |
| वस्तेरभावे प्लवनीगलो वा…. | आगमः | | ७३ |
| वस्तौ रोगेषु नारीणां… | | | ९२ |
| वस्त्रादिच्छादितनेत्राय… | | पाठ्यकारः | १११ |
| वह्निस्थानगते दोषे … | सुश्रुतम् | | ७५ |
| वातधाम्न्यधःकाये शृङ्गेण… | | हाटकः | १८६ |
| वातरक्ताबाचूषणाय | | हृद्याकारः | १५९ |
| वातश्लेष्मोद्भवांस्तत्र… | संग्रहः | | २३१ |
| वातस्य दोषान्तरसंसृष्टस्य … | | हाटकः | ८७ |
| वातहरद्रव्यैः पिष्टैः सस्नेहैः… | | हृद्याकारः | २७ |
| वाते तैलादयः स्नेहा यथायथं…. | | ,, | १२८ |
| वापीपल्वलजातानां… | भालुकीयम् | | १८४ |
| वामबाहौ तु मोक्तव्या… | | | १९६ |
| वामाश्रयोऽग्निर्ग्रहणी गुदश्च … | आगमः | | ७६ |
| वारङ्गं ग्रहणस्थानं | | हाटकः | १६० |
| वा विकल्पोपमानयोः | | | ६५ |
| विड्वातवेगो यदि वार्धदसे…. | आगमः | | ७७ |
| बिपाटितमेषपादकृत्तिः… | | इन्दुः | ७३ |
| विबन्धं तु विजानीयात्… | | भोजः | २३९ |
| विरेचनं कफहरं…' | | | १०६ |
| विरेचनचूर्णस्तु प्रधमनाख्यः…. | संग्रहः | वाहटः | १०७ |
| विशुद्धौ मण्डपेयादिः… | | | ८६ |
| विषाद्यार्तान् पुनः रूक्षगुणैरेव… | | हृद्याकारः | ६३ |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| शल्यनिर्घातिनी तु पद्मकर्णिका ··· | | | १६० |
| शल्ये तु संबाधगते ··· | | भोजः | २१५ |
| शस्त्रं व्रीहिमुखं कार्यं ··· | | ,, | १७१ |
| शस्त्रकर्मण्यातुरस्य वैद्यस्य च ··· | | | २२९ |
| शस्त्राणि तु षड्विंशतिर्भवन्ति ··· | संग्रहः | | १७० |
| शस्त्रानुशस्त्राणां क्षारः ··· | | धन्वन्तरीयाः | २४८ |
| शाखा रक्तादयः। कोष्ठमुदरं ··· | | हृद्याकारः | १०० |
| शिखरी घनत्वेन शिखराकारः.... | | हाटकः | २५२ |
| शिखरी शिखरयुक्तः | | पाठ्यकारः | ,, |
| शीतसात्म्या दृगाग्नेयी ··· | | | १४६ |
| शीतानेवावचारयेत् | | इन्दुः | २६० |
| शीतोद्भवं दोषचयं वसन्ते ··· | | | ८१ |
| शीतोष्णस्निग्धरूक्षाद्यैः ··· | आगमः | | १०२ |
| शुक्रामर्दिकं विलिख्य ··· | | हृद्याकारः | १४० |
| शुद्धयोर्वमनादिभिः ··· | | ,, | १४९ |
| शुद्धो वमनविरेचनाभ्यां.... | | ,, | १३४ |
| शुद्धया वमनविरेचनरूपया | | अरुणदत्तः | २०० |
| शुष्कश्चेदार्द्रयित्वापनयेत् | | हृद्याकारः | १३२ |
| शूकस्य नालम् | | ,, | २४९ |
| शोफावस्था अनेकावस्थां ··· | | अरुणदत्तः | २४४ |
| श्यावानि रक्तानि च मण्डलानि ··· | | इन्दुः | ३२ |
| श्लेष्मकाले दिनप्रथम... | | हाटकः | ५६ |
| श्लेष्मोत्तरश्छर्दयते ह्यदुःखम् | | | ४५ |
| षट्पला तु भवेज्ज्येष्ठा | | | ९२ |
| षडङ्गुलं प्रवेशयेत् | | अरुणदत्तः | ९५ |
| षड्भागे मण्डलं शुक्ति.... | भालुकीयम् | | १७० |

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| षड्विधं प्रतिरसभेदादञ्जनम् | | | १४० |
| संख्याग्रहणं परमतनिरासार्थम् | | पाठ्यकारः | २४ |
| संख्ययाऽव्यय··· | | | ५५, ७९ |
| संशोधनादीनां चायथा— | | | ६० |
| संस्कारस्यानुवर्तनात् येन द्रव्येण... | | हाटकः | २ |
| संस्कारो नामातिशयगुणाधानं... | | हृद्याकारः | ,, |
| संहतं प्रसुप्तं क्षतदूषित... | | हाटकः | १८६ |
| सङ्करः प्रस्तरो नाली... | चरकम् | | २३ |
| स चावपीडस्तीक्ष्णैः कृतः.... | | हाटकः | १०६ |
| सत्त्ववान् सहते सर्वं··· | | | २२६ |
| सदोष अन्तरुत्सङ्गं कृत्वा ··· | | हाटकः | २४४ |
| सन्निपातेऽपि त्रयो वस्तयः··· | | हृद्याकारः | ८९ |
| सप्तमी... | | | १९३ |
| सप्ताङ्गुलं प्रमाणेन... | भालुकीयम् | | १७२ |
| ,, | | भोजः | ,, |
| समस्तग्रहणं गन्धैरेव युज्य ··· | | हाटकः | २५ |
| सम्यक्स्निग्धे मूर्धनि | संग्रहः | | ११२ |
| सम्यगुत्थितां सिरां स्पर्शमात्रात्... | | हाटकः | १९३ |
| सम्यग्दग्धे गुणांश्चापि ... | | भोजः | २५८ |
| सम्यग्योगेन वमितो ··· | | | ४७ |
| सम्यग्विद्धे सति धारां... | | अरुणदत्तः | १९७ |
| सर्पवक्त्रं वक्रमर्धाङ्गुल··· | संग्रहः | | १७१ |
| सर्पिस्तैलवसामज्ज ··· | आगमः | | २२ |
| सर्पिस्सरदि पातव्यं... | | | ८ |
| सर्वं परिणाहे पञ्चाङ्गुलं... | | इन्दुः | १६१ |
| सर्वं सर्वस्य च स्नेहं··· | | | ८ |

9771

| वाक्यानि | ग्रन्थनाम | कर्तृनाम | पार्श्वम् |
|---|---|---|---|
| हृतदोषप्रमाणेन... | सुश्रुतम् | | ५१ |
| हृत्कण्ठेन्द्रियसंशुद्धिः | संग्रहः | | १२०, १२६ |
| हृदयमभिप्रवर्तमाने शल्ये... | सुश्रुतम् | | २१४ |
| हृदयमिति ग्रामशल्यादिके... | | वामदेवः | ,, |
| ++च्च सर्वशो... | | भोजः | २१२ |

## APPENDIX III.

### AN ALPHABETICAL INDEX OF AUTHORS AND WORKS REFERRED TO IN THE COMMENTARY

(Sūtrasthāna Adhyāyas 16—30)

---

# APPENDIX IV

Index of Sanskrit terms and their Malayalam equivalents given in the commentary Part I and II.



1. ഓരിലവേരും മൂവിലവേരും MS. No. 609

1. വെളുത്ത എരുക്ക് MS. No. 609. 2. പട്ടിക്കുതിര MS. No. 609. വെട്ടിക്കുറിച്ചുകൊണ്ടുവർകൃത (ഔഷധനിഘണ്ടു) 3. മടുമടുക്ക MS. No. 609.

1. വളക്കെട്ട് MS. No. 609, 2. വളപ്പുരം No. 609.

| Terms and Equivalents | Part | Page |
|---|---|---|
| ऊरुमाणम् മരവാഴ | I | 240 |
| ऊर्णा മയിർപ്പട്ട് | II | 179 |
| ऊषकः ഉവർ | I | 441 |
| ऊषा അഴൽച്ച | II | 222 |
| ऋक्षः കരടി | I | 213 |
| ऋजूकरणम् ചൊവ്വിടുക | II | 168 |
| ऋद्धिः ചെറുവിടുകൊററി[1] | I | 439 |
| ऋश्यः മരമാൻ | ,, | 212 |
| ऋषभकम् ഇടവകം | ,, | 255 |
| एकपाटलम् ഒരുപൂവൻ | ,, | 195 |
| एणः കേഴമാൻ | ,, | 212 |
| एरण्डम् ആവണക്ക | ,, | 255 |
| एलकजम् തകര | ,, | 231 |
| एला ഏലത്തരി | ,, | 252, 435 |
| एलाद्वयम् ചിററേലവും പേരേലവും | ,, | 437 |
| एष्यम् ആരാല്ല | II | 178 |
| ऐरावतम् പെരുനാരകം | I | 245 |
| ओदनम् ചോറ് | ,, | 203 |
| औद्भिदम् ഉവരുപ്പ് | ,, | 248 |
| ककुभम् നീർമരുത് | ,, | 78 |
| कङ्गु തിന | II | 174 |
| कचम् മയിർ | I | 196 |
| कच्छुरा നായ്ക്കുരണ | ,, | 445 |
| कटभिः വെൺകുന്നി | ,, | 262 |
| कटुका കടുകരോഹിണി | ,, | 444 |
| कट्फलम् കുമിഴ് | ,, | 439 |
| कट्वङ्गः പെരുമരം | ,, | 444 |
| कठिल्लम् കവിഴാമ | ,, | 225 |
| कण्डूकरी നായ്ക്കുരണ | ,, | 438 |
| कतकफलम् തേററാമ്പരൽ | ,, | 439 |
| कदरः പരവാ[2] | ,, | 441 |
| कन्दुः ചൂള | ,, | 211 |

1. ചെറിയകാട്ടുതിരി. MS. No. 609
2. വെളുത്ത കരിങ്ങാലി MS, No. 609, ([illegible])

| Terms and Equivalents | Pat | Page |
|---|---|---|
| कपालम् ഓട് | | |
| कपिञ्जलः കപിതാരിപ്പുള്ള് | II | 27 |
| कपित्थम् വിളാവ് | I | 212 |
| कपीतनम् കല്ലാൽ | ,, | 241 |
| कपोतः മാടപ്രാവ് | ,, | 446 |
| कबलिका പുറത്തകഴി | I | 213 |
| कम्पिल्लकम् കമ്പിപ്പാല | II | 231 |
| करञ्जम् ഉങ്ങ് | I | 436 |
| करञ्जः പുങ്ങ് | ,, | 78 |
| करञ्जयुग्मम् പുങ്ങും ആവിലും | ,, | 435 |
| करमर्दम् ക്ലാവ് | ,, | 440 |
| करीरम् കരസ്സി | ,, | 244 |
| करीषः വളപ്പൊടി[1] | ,, | 225 |
| कर्कटकः ഞണ്ട് | II | 27 |
| कर्कन्धूः പെരുന്തുടരി | I | 215 |
| कर्कशम् പെരുമ്പീരം | ,, | 245 |
| कर्कारुः കക്കരി | ,, | 225 |
| कर्कोटः പാവിൽ | ,, | 228 |
| कर्णिका കൊഴുന്നഴുക | ,, | 225 |
| कर्तरी പൊന്നാ | II | 244 |
| कर्परम् കരം | ,, | 174 |
| कलमम् കഴിപ്പാരിച്ചെന്നെല്ല് | I | 211 |
| कलमः കഴപാരിച്ചാലി | ,, | 192 |
| कलम्बु വലിയവേള | ,, | ,, |
| कलशी മുവിച | ,, | 230 |
| कलिङ्गम् കൊടകപ്പാലയരി | ,, | 444 |
| कशेरुकम् കഴിമുത്തങ്ങാ | ,, | 441 |
| कषायवर्त्मता ഇമ ചുവക്ക | ,, | 229 |
| काकतिक्ता കരിച്ചൂഴി | II | 138 |
| काकमाची കരിന്താളി | I | 440 |
| काकाण्डोला ചെറുവട്ടിപ്പയറ് | ,, | 224 |
| | ,, | 200 |

1. ചാണക്കപ്പൊടി MS. No. 609.

1. കള്ളറൽ MS. No. 609

| Terms and Equivalents | Part | Page |
|---|---|---|
| कुम्भीकः ചീക്കണ്ണി മുതല | I | 214 |
| कुरङ्गः കുറാൽമാൻ | ,, | 212 |
| कुररः ഞാറ | ,, | 214 |
| कुरुबाहुः പാവിൽ | ,, | 212 |
| कुरुविन्दम् കുറാൽനെൽ | ,, | 195 |
| कुरूटकम् വെളിപ്പരുത്തി | ,, | 230,442 |
| कुर्कुरः കുക്കുറാപ്പുള്ള | ,, | 212 |
| कुलहलम् അടയ്ക്കാ പാണിയൻ | ,, | 443 |
| कुलिङ्गकः കരുമാരക്കരികി[1] | ,, | 214 |
| कुशाद्वयम् ദർഭയും കുശയും | ,, | 442 |
| कुष्ठम् കൊട്ടം | ,, | 436 |
| कूर्मः ആമ | ,, | 214 |
| कूलकम् കയ്പൻപടവലം | ,, | 225 |
| कूश्माण्डम् കുമ്പളം | ,, | 228 |
| कृतवेधनम् മുള്ളൻപ്പീരം | ,, | 436 |
| कृमिघ्नं വിഴാലരി | ,, | 435 |
| कृष्णम् കറുപ്പ് | ,, | 248 |
| कृष्णकन्दः കരിംകിഴങ്ങ് | ,, | 237 |
| कृष्णव्रीहिः കരുനെൽ | ,, | 195 |
| कृसरः എള്ളുഞ്ചോറ് | ,, | 267 |
| केबुकम् തിങ്ങളരി | ,, | 225 |
| केलूटम् നിമിനിക്കിഴങ്ങ്,നീർച്ചേമ്പു | ,, | 229 |
| कोकिलः കുയിൽ | ,, | 213 |
| कोद्रवम् വരക് | ,, | 196 |
| कोलास्थिदलतुल्यास्या അഴകകോൽ | II | 166 |
| कोशवत्यौ പട്ടൽപീരം ചെമ്മും വള്ളും | I | 435 |
| कोशातपत्रम् പട്ടൽപീരം | ,, | 225 |
| कौशेयम् കോമപ്പട്ട് | II | 175 |
| कौसुम्भम् കുയുമ്പില | I | 233 |
| क्रकरः ഈരവാച്ചാത്തൻ | ,, | 212 |
| क्रमुकम् അടയ്ക്കാ | ,, | 446 |

1. കരുമാരക്കരിക MS. No. 609. കരികിൽ കട്ടച്ചാത്തൻ(മ.ഹി)

1. കുരികിൽ MS. No. 609.

1779

1. മെത്തയിൽ MS. No. 609.
2. दर्दुरः തവളെയ്യ് MS. No. 609.

1. എലിയാൽ, കടലാവണക്കിതികേചിൽ MS. No. 609.
2. പുകയുണ്ണിക്കരിക. MS. No. 609.

1. അരിഞ്ഞ ഇല MS. No. 609.

1. കായകഞ്ഞി MS. No. 609.
2. വായിൽതേച്ചുതിരുമ്മുക MS. No. 609.

1. കൊക്ക് MS. No. 602.

1. കതളം No. 609 കതള (കണ്ണുമയും ചിറകും വെളുത്തകഴുവൻ) (ഒ. നി.)
2. പൊരിമരം No. 609. ഭൂർജമരം (ഒ. നി.)

1. मिसिः അയമോദകം MS. No. 609. मिषिः ശതകുപ്പ ഒ. നി.

1. കരിങ്കുറവ MS. No. 609, കരിംകുറകനെല്ല്. ശ. നി.
2. മേൽക്കട്ടിപ്പുറിച്ച് MS. No. 609

1. കാനാഞ്ചി, MS. No. 609, വഞ്ചി നരംപശ ഔ. നി.

2. കാട്ടുവള്ളരി MS. No. 609. ചെറിയകാട്ടുവെള്ളരി വലിയ കാട്ടു-വെള്ളരി, ആനപ്പീച്ചിൽ സരസ്വതിമാരി വലിയവംശ ഉച്ചീരഔ. നി.

3. ഒളി MS. No. 609 എരിമരം, രാത്രിയിൽ പ്രകാശിക്കുന്ന ഒരു മരം. ശബ്ദതാരാവലി. ഇത്തിക്കണ്ണി, മുതക, ഔ. നി.

4 വചിയ ാ, ത്ര. Ms. NS. 609.

1. ഞെമഞ്ഞി MS. 609 ഞവണ്ണ് ’ഒ. നി.

1, शिम्बिधान्यम् കോച്ചിയിൽ വിളയുമവ. MS. No. 609

2. ചൊരിതനി. പെരിത്തിൽ No. MS. No. 609. നാഴണം,

മുത്തുച്ചിപ്പി, തോലൊട്ട്, ശംഖ്, തെ. നി.

| Terms and Equivalents | Part | Pag |
|---|---|---|
| सिकता മണൽ | II | 27 |
| सिन्दुवारकम् നൊച്ചി | I | 262 |
| सीवनी തുന്നൽ | II | 248 |
| सीव्यम् തുന്നുക | ,, | 178 |
| सुगन्धिकः നറുംചാലി | I | 192 |
| सुतीक्ष्णम् നല്ലതുക്കാക്കുക | II | 169 |
| सुधाभस्मशर्करा: കൊഴിപ്പരൽ | ,, | 250 |
| सुनिषण्णः നീരാരൽ | I | 224 |
| सुमुखम् [1]അനിച്ചം | ,, | 235 |
| सुरसः തിർത്തുവ | ,, | ,, |
| सुराला അകി പിടയം | ,, | 437 |
| सुराह्वम् ദേവതാരം | ,, | 446 |
| सुवर्चला ചെമ്പൂതെരിഞ്ഞിൽ | ,, | 231 |
| सुवर्णत्वक् പൊന്മരത്തോൽ | II | 114 |
| सुषवी പല്ലാന്നി | I | 440 |
| सूकरम् പന്നിക്കട്ടർ | ,, | 195 |
| सूत्रम् ചരട് | II | 174 |
| सूप्यम् അടക്കപ്പെട്ടത് | I | 201 |
| सूरणः ചേന | ,, | 237 |
| सृमरः കരിങ്കവരിമാൻ | ,, | 214 |
| सैन्धवम् ഇന്തുപ്പ് | ,, | 247 |
| सैर्यकः കരിംകുറിഞ്ഞി | ,, | 440 |
| सैर्यकयुग्मम् ചെംകുറിഞ്ഞിയും കരികുറിഞ്ഞിയും | ,, | 441 |
| सोमवल्कम् [2]ഓമത്തോൽ | ,, | 446 |
| सौवर्चलम् തുവർച്ചലഉപ്പ് | ,, | 247 |
| सौवीरम् ചിററിലന്തി | ,, | 240 |
| सौषीर्यम् പൊത്തുപെടുക | I | 389 |
| स्तम्भः മിറ നപൊലെയിരിക്ക | II | 206 |
| स्थविका ഉറിക്കെട്ട് | ,, | 239 |

1. അനിച്ചിൽ MS. No. 609. കരുത്തകാട്ടുതുളസി കാട്ടുചെറുതുളസി വെളുത്തചെറുതുളസി ഔ. നി.

2. ഓമത്തൊലി M S. No. 609. കരിങ്കാരവൃക്ഷം കായാമ്പൂവ് (ശബ്ദതാരാവലി)

1. വെമ്പ്രാവ് MS. No. 609 പച്ചപ്രാവ് ഒ. നി.

## IN THE PRESS.

1. Mālatīmādhava (Drama) of Bhavabhūti with the commentary of Pūrṇasarasvatī.
2. Bhojanakutūhala (Dietetics) of Raghunātha, Part I.
3. Jaiminiyasūtrārthasaṅgraha (Mīmāṁsā) of Ṛṣiputra Parameśvara, Part I.
4. Seṣasamuccaya Vimarśinī. (Tantra)
5. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhoja with the commentary Hṛdayahāriṇī, Part V.
6. Tantrasamuccaya (Tantra) of Nārāyaṇan Nampūtiri with two commentaries, Part II.
7. Prakriyāsarvasva (Grammar) of Nārāyaṇa Bhaṭṭa, Part IV.
8. Mīmāṁsāślokavārtika (Mīmāṁsā) of Kumārila Bhaṭṭa, with the commentary of Sucaritamiśra, Part IV.
9. Nītitattvāvirbhāva of Cidānanda Paṇḍita.
10. Aitareyabrāhmaṇa with the Vṛtti Sukhapradā of Ṣaḍguruśiṣya, Part II.